(१) प्रसन्नवदनाम्भोजो नृशंसं निरपत्रपम् ।
मनसा दूयमानेन विहसन्निदमब्रवीत् ॥ ५३ ॥

वसुदेव उवाच ।

न ह्यस्यास्ते भयं सौम्य ! यद्वै[2] साऽऽहाशरीरवाक् ।
पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥

श्रीशुक उवाच ।

(३) स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् ।
वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम् ॥ ५५ ॥
अथ काल उपावृत्ते देवकी सर्वदेवता ।
पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

योगः तयोरदृष्टतोऽन्यथेति वृक्षाणां दुःखादृष्टमेव कारणमित्यर्थः । एवमेव शरीराणां संयोगवियोगयोर्जन्ममरणयोर्हेतुर्विभाव्योऽविचिन्त्यः ॥ ५१ ॥

यावत् यत् प्रमाणकम् आत्मना बुद्ध्या निदर्शनं ज्ञानं यत्र यद्यथा स्यात्तथा विमृश्य तं पापं कंसं पूजयामास बहिस्तुष्टाव ॥५२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुत्रान् मृत्यवे कंसाय प्रदाय कृपणामिमां मोचये भाविपुत्रार्पणप्रतिज्ञया कृपणायाः अस्या वधप्रतीकारो न्याय्य इति भावः । भाविपुत्रार्पणेऽपि पाक्षिको दोष इत्याह—यदि कन्या जनिष्यति तदा तु प्रायो नायं कंसस्तां वधिष्यति अस्यां मे यदि सुताः जायेरन् मृत्युः कंसो वा सुतोत्पत्तेरर्वाक् न म्रियेत चेत्तदा पुत्राऽर्पणापराधप्रसङ्गोऽतोऽस्या रक्षणं न्याय्यमिति भावः ॥ ४९ ॥

भगिनीं हन्तुं प्रवृत्तस्यास्यैव तद्गर्भोद्भवरूपो विपर्ययो वा किं न स्यात् सर्वथा धातुः परमेश्वरस्य गतिर्दुरत्यया दुर्लङ्घ्या तयैवोपस्थितो निवृत्तेत निवृत्तः पुनरापतेदस्मिन्सर्वोऽपि व्यवहार इति भावः ॥ ५० ॥

वने यथाऽग्नेः संनिहितेन दारुणा वियोगो दूरस्थेन योगस्तयोरदृष्टतोऽन्यन्निमित्तं नास्ति अदृष्टोऽदृश्यो धातैव एवमदृष्टतोऽन्यः शरीरसंयोगवियोगयोर्जन्ममरणयोर्हेतुर्दुर्विभाव्यो दुर्निरूप्यः कालकर्मादीनां केचित्स्वातन्त्र्ये तद्धेतुमाहुस्ते बालबुद्धयः जडानां तेषामीश्वरमन्तरेणाकिञ्चित्करत्वादतो धातैव सर्वत्र हेतुस्तस्य गतिर्दुरत्ययैवेति योजना ॥ ५१ ॥

यावदात्मनो निदर्शनमालोचनं तत्पर्यन्तमेवं विमृश्य विचार्य तं पापं पापात्मानमपि पूजयामास शौरिः शूरपुत्रः ॥ ५२ ॥

भाषा टीका

तब वसुदेवजी ने ऐसे विचारी, कि—कंस कों पुत्रन के देवे की कहकें या विचारी कूं छुडाऊं, फिर जब मेरे कहूं पुत्र होवैं और तब ताईं कंस न मरजावै तब देखी जायगी ॥ ४९ ॥

और जो कहूं मेरें पुत्र भयो और वोहि कंस कों मार देवे, काहेसों, कि—धाता की गति दुरत्यय है उपस्थित, योग निवृत होजाय और निवृत्त भयो भी योग फिर कालांतर में आजाय, तौ यामैं मेरो अपराध नहीं है ॥ ५० ॥

प्राणियों की प्रारब्ध कछु जानी नहीं जाय जैसें अग्नि को काष्ठन के साथ में सयोग वियोग प्रारब्ध के आधीन हैं अर्थात् वन में दवाग्नि से जरने वारे वृक्षन में सो अग्नि के समीप के हू बचजाय हैं और दूर वारों में अग्नि जाय लगे है । ऐसे ही याचेतन के शरीर के संयोग और वियोग को कारण चिंतमन करने में नहीं आवै है ॥ ५१ ॥

ऐसें जितनों वसुदेवजी को ज्ञान रह्यो ताके अनुगुण विचार करकें वसुदेवजी बडे सम्मान पूर्वक वा पापी कंस को बहुत सत्कार करत भये ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य विश्वासाय विकसितमुखाम्भोजो विहसन्नब्रवीत् ॥५३॥

यद्यथा अशरीरिणी वागाह तथा हि निश्चितमस्याः सकाशात्ते भयं नास्ति यतो येभ्यः पुत्रेभ्यस्ते भयमुत्थितम् अष्टमो हन्तेत्युक्तेऽन्योन्यापेक्षया सर्वेऽप्यष्टमा भवेयुरित्युक्तन्तेनास्याः पुत्रान् । समर्पयिष्ये ॥ ५४ ॥

निववृते निवृत्तः तद्वाक्ये सार उपपत्तिस्तद्वित् ॥ ५५ ॥

प्रसूतिकाले प्राप्ते सर्वैः सर्वात्मा भगवानेव देवता यस्याः सा तथा सर्वदेवतामयीति वा भगवदाश्रयत्वात् ॥ ५६ ॥ ५७ ॥

( १ ) प्रत्यग्र इति तोष० विज० प्रसन्नेति सुबोधिनी प्रहृष्ट इति वीर० ( २ ) त्वाह इति वीर० ( ३ ) सुहृद्वधादिति सुबोधिनी

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च क्रूरं निर्घृणमपि तं पुनरब्रवीत् इदमब्रवीदिति पाठः क्वचित् प्रत्यग्रवदनाम्भोजः सद्यो विकसितपद्मवत् प्रसादित-मुखः सन् प्रहसन् प्रसार्य वदनाम्भोजमिति पाठः स्पष्टः एवं विश्वासाय तं प्रत्यात्मनोऽन्तःप्रसादो बोधितः वस्तुतस्तु दूय-मानेन मनसा विशिष्टः ॥ ५३ ॥

हे सौम्य ! हे शान्तप्रकृते ! अन्तः प्रसादबोधनार्थमेव पूर्ववदत्र श्लेषार्थोऽपि न स्पष्टः । यद्वा अत्रापि भवजन्मना सौम्यत्वेन च धीरस्वभावात्यय एव दर्शितः पुत्रानिति छलेनाकारप्रश्लेषात् येभ्यः तवाभयमुत्थितं येभ्यो भयं नास्तीति विचारासिद्धन्ता-नेव समर्पयिष्ये न तु यस्माद्भयमुत्थितमिति यद्वा यतो यान-तिक्रम्य कस्माच्चित्तव भयमुत्थितं भविष्यति तानेव समर्प-यिष्यामि ननु भयदानेन प्रवृत्तं तमित्यर्थः "नह्यस्यास्ते भयं सौम्य यद्वै साऽऽहाशरीरवाक् । पुत्रान्समर्पयिष्ये ऽस्या यतस्ते भयमागतम्"इति पाठः क्वचित्, उत्थितमित्यत्रागतमिति क्वचित्॥५४॥

सुहृदस्तद्विशेषस्य भागिन्या वधात् सुहृच्छब्दप्रयोगश्च मय्यस्याः सौहृद्यमप्यस्तीति वधनिवृत्तिहेतु तद्भावना विशेषमपि सूचयति—किञ्च तद्वधान्निवृत्त्या सुहृदामन्येषामपि वधान्निवृत्त इति सूचयति—देवक्यादिभिः सह युद्धापत्त्या तेषां वधसम्भ-वात् स्वसुरिति क्वचित्पाठः तद्वाक्यमिति तैस्तस्यातं तत्रोप-पत्तियुक्तत्वमित्यर्थः । सारशब्दो हि बलवाची बलं च वचनस्य युक्त-तेति यद्वा सारं सारत्वं अव्यभिचारित्वमित्यर्थः । श्रीदेवक्याः वधान्निवृत्त इतीयन्मात्रेणापि प्रीत इति श्रीवसुदेवस्य महा-महत्वव्यञ्जकं प्रशस्य परमो बुद्धिमान् सारग्राही कृपाशीलो-ऽसीत्येवं स्तुत्वा प्रकर्षेण गीतवाद्यादिना विशत् इदमपि तद्वि-श्वासजननार्थमेव ॥ ५५ ॥

अथेति माङ्गल्ये काले उपावृत्ते कतिपयकाले गते सतीत्यर्थः । "पुरैव वसुदेवो भूद्विदायाभ्यागतां जराम्" इत्यादि श्रीविष्णु-पुराणोक्तेः । "वृद्धौ तवाद्यपितरौ" इत्यादि श्रीहरिवंशेऽप्यक्रूरोक्ते-रनुसारेण प्रायो वार्द्धक्यान्तिके श्रीभगवदाविर्भावात् सर्वेषां देवतादीनामपि देवतेति महाभगवच्छक्तित्वात् तथा च श्री विष्णुपुराणे "त्वं परा प्रकृतिः सूक्ष्मा"इत्याद्यपद्युतरं सर्वदेव-कृतस्तोत्रम् अयं भावः वसुदेवशब्देन तावद्भगवत्प्रकाशहेतुः शुद्धसत्त्वमुच्यते यथोक्तं चतुर्थे श्रीशिवेन—

> "सत्त्वं विशुद्धं वसुदेवशब्दितम्—
> यदीयते तत्र पुमानपावृतः ॥
> सत्त्वे च तस्मिन् भगवान् वासुदेवो—
> ह्यधोक्षजो मे नमसा विधीयते" ।

इति तद्रूप एवाऽयं श्रीमानानकदुन्दुभिः यथोक्तं नवमे "वसु-देवं हरेः स्थानं वदन्त्यानकदुन्दुभिम्"इति अतः श्रीदेवक्यपि तत्सरूपनिरूपैवेति कन्यां सुभद्राख्य अनुवत्सरमेव प्रत्यब्दमेकैकश इत्यर्थः । तच्च सत्वरश्रीभगवदवतारार्थम् ॥ ५६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं दर्शयितुं पूजोपयुक्तं वाक्यमाहेत्याह—हृष्टेति । अन्तर्भावित-ण्यर्थः प्रहृष्टः प्रहृष्टं विकासितं वक्त्रवदनाम्बुजं येन तथाभूतः वसुदेवः दूयमानेन उपतप्तेन मनसा प्रहसन् बहिर्हसन् निर्लज्जं कंसं प्रतीदं वक्ष्यमाणं वाक्यमब्रवीत् ॥ ५३ ॥

तदेवाह—नेति । हे सौम्य ! तवास्याः स्त्रियाः सकाशाद्भयं मृत्यु-भयं नास्ति हि किन्त्वस्याः पुत्रादिति भावः । अत् येभ्योऽस्याः पुत्रेभ्यः ते तव भयमशरीरिणी वागाह यतो येभ्यश्च ते भयमुत्थितं समुपस्थितं तान् पुत्रानहं तुभ्यं समर्पयिष्ये दास्यामीति त्वं तु तान् जहि मा वा न तु तत्र मेऽपराध इति भावः ॥ ५४ ॥

ततस्तस्य वसुदेवस्य वाक्यसारविद्वाक्याभिप्रायं जानन् कंसः सुहृदो भगिन्या वधान्निववृते न्यवर्तत ततो वसुदेवोऽपि प्रीतस्तं कंसं प्रशस्य स्वगृहं प्राविशत् ॥ ५५ ॥

अथ काले गर्भधारणयोग्यकाले उपावृत्ते समुपस्थिते सति सर्वदेवताप्राया देवतांशत्वात्तत्तुल्या देवकी प्रतिवत्सरम् अष्टौ पुत्रान् एकां कन्यां च सुषुवे ॥ ५६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रत्यग्रं सद्यस्कं नूतनं वदनाम्बुजं यस्य स तथा "प्रत्यग्र-मुक्तं सद्यस्कम्"इति हलायुधः । दूयमानेन मनसेति अन्तस्तापं च सूचयति—प्रहसन्निति बहिः प्रसादं इदं महतां लक्षणम् ॥५३।

यावद्बोधनाप्युक्तसंवादं विज्ञाय यथा संवादिस्यात्तथा प्रत्येतुं वक्ति—न ह्यस्या इति । यतो देवक्याः *॥ ५४ ॥

अत्र कंसचरितकथनव्याजेन संसारस्यानर्थरूपत्वं वर्णयति शुकः—सुहृत्सहोदरीभार्यावधोपरमात् प्रीतः कंसं प्रशस्य ॥५५॥

सर्वा देवता यस्यां सन्निहिताः सा तथा अनुवत्सरं प्रति-वत्सरम् ॥ ५६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यतो येभ्यस्तवभयमुत्थितं तान् न तु यस्माद्भयमुत्थितम् तम् इति गूढोऽभिप्रायः ॥ ५४ ॥

वाक्यस्य सारः स्थिरता तद्वित् ॥ ५५—६२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूजयित्वा विज्ञापनां कृतवानित्याह—प्रसार्येति । स्वस्य वद-नाम्भोजं प्रसार्य विकासितं कृत्वा आत्मानमप्रतारकं हितं च ज्ञापयित्वाधिष्ठानस्य दुष्टत्वादारोपिता देवता तत्र स्थास्यति न वेति सन्देहात् दूयमानेन मनसा दुःखाविष्टेनान्तःकरणेन उप-लक्षितोऽपि तदाकारसङ्गोपनार्थं प्रहसन् एतावत्यर्थे किमेतावत् क्रियत इति वदन्नेवं वक्ष्यमाणमब्रवीत् अधिष्ठाने दूषणद्वयं येन देवता न सन्निहिता भवति कौर्यलज्जाभावौ क्रोधकामनिधान-भूतौ तावाह—नृशंसं निरपत्रपमिति । कामसेवका एव निरप-त्रपा भवन्ति "पृष्ठीकृतह्रीभयाः" इति वाक्यात् नृशंसः क्रूरात्मा तामसक्रोधयुक्तः ॥ ५३ ॥

आत्मीयतया तं गृहीत्वा हितमिवाह—न ह्यस्यास्त इति । अस्याः सकाशात्ते भयं न चास्ति चकारान्न मत्तो भविष्यति वा वाणी-

---

*विजयध्वजतीर्थपाठेनात्रैव प्रथमोऽध्यायस्समाप्यते ।

कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ।
अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ५७ ॥
किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम् ।
किमकार्यं कदर्याणां दुस्त्यजं(१) किं धृतात्मनाम् ॥ ५८ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रामाण्यादेव अतो निरपराधवधो न कर्त्तव्यः सौम्येति सम्बोधनं सौम्यो भव विज्ञापितं कुर्विति बोधानार्थम् अत्रार्थे प्रमाणमाह—यद्वै त्वाहेति । एतदुभयत्रापि प्रमाणम् अतोऽस्याः पुत्रान् तुभ्यं समर्पयिष्ये यतः पुत्रात् वाक्यतः ते भयं समुत्थितं निवेदिते त्वदीयः त्वां न मारयिष्यति कापट्यशङ्काभावाय बहुवचनम् ॥५४॥

एवं दृष्टादृष्टोपायस्य कृतत्वात् अङ्गीकृतवानित्याह—सुहृद्वधादिति । विवेक उत्पन्ने विचारप्रवणं चित्तं जातमतः सुहृदियम्भगिनी किमिति हन्तव्येति सुहृद्वधान्निवृत्ते वसुदेवः प्रतारयतीति तु शङ्का नास्ति यतस्तद्वाक्यस्य सारं सत्यत्वमयं जानाति वसुदेवो न कदाचिदप्यनृतवादीति अत एव भगवदवतारः निवृत्तो रथं प्रेरयित्वा गृहे नीतावित्यध्यवसीयते अत एव वसुदेवोऽपि तन्मनोगतकालुष्यस्य गतत्वात् प्रीतः सन् प्रशस्य पुनः स्तुत्वा मार्गस्यातीतत्वात् गृहं प्राविशत् ॥ ५५ ॥

एवमनर्थसमाधानं कथञ्चित् कृतम् एतद्भगवतैव कृतमिति वक्तुमग्रिमं कार्यं समीचीनमेव जातमित्याह षड्भिः—अथेति । अथ तदनन्तरमेव शीघ्रमेव काले ऋतुसमये उपावृत्ते जातेऽष्टवर्षमध्ये सर्वानेव पुत्रान् सुषुवे कन्यायामासक्तिर्ज्ञातेति कन्यां च अनुवत्सरमिति प्रतिवत्सरमेकैकः पुत्रो जातः पूर्णगर्भाश्च ते एवं निरुपद्रवतया प्रसवे हेतुः सर्वदेवतेति सर्वा देवता रक्षणार्थं यत्र कन्या नवमी चकारस्तज्ज्ञापकः प्रसवे न कोपि संवत्सरो व्यवहित इत्युपसर्गः ॥ ५६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वान्तः प्रसादज्ञापनार्थं प्रत्यग्रं स्निग्धीकृतं वदनाम्भोजं येन सः दूयमानेन सन्तापपीड्यमानेन मनसा युक्तः ॥ ५३ ॥

अस्याः सकाशात्ते भयं नास्ति किन्त्वस्या अष्टमात् पुत्रात् यद्यथा अहन्तु पुत्रानष्टावेव समर्पयिष्ये यतः पुत्रात्ते भयमुत्थितं स वा वध्यतामष्टावेव वा वध्यन्तामिति भावः ॥५४॥

वाक्यस्य सारः सत्यत्वं वसुदेवो मिथ्या न ब्रूते इति सर्वथा जानातीत्यर्थः । तवेदं धर्मशीलत्वं भुवि प्रकटीभूतमिति प्रशस्य ॥ ५५ ॥

सर्वेषां देवादीनामपि देवता भगवन्मातृत्वात् पूज्यां कन्यां सुभद्राम् अनुवत्सरमष्टसु वत्सरेष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः कन्यायाश्च काले प्रतिवर्षमिति वीप्सा तु न व्याख्येया एकैकस्मिन् वर्षे एवाष्टपुत्रोत्पत्तिप्रसक्तेः । अत्र कारणमग्रे व्याख्यास्यते ॥ ५६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वभावात् ज्ञानातिशयाच्च प्रसन्नवदनाम्भोजः दौरात्म्यं ज्ञात्वा प्रहसन् अहो खलानां दौरात्म्यमित्येवमुपहसन् किं भविष्यतीति मनसा दूयमानेन नृशंसं निष्ठुरं निरपत्रपं निर्लज्जं पूज्यात् पूजाग्राहकमिदमब्रवीत् ॥ ५३ ॥

यद्यप्यष्टमादेकस्मात्तव मृत्युर्विहितो नान्येभ्यस्तथापीतरेतरसङ्कलनया सर्वेऽप्यष्टमाश्चेत्तर्हि पुत्रान् सर्वान् समर्पयिष्ये यत्तेभ्यः ॥ ५४ ॥

निववृते निवृत्तः तस्य श्रीवसुदेवस्य वाक्ये यो सारः सत्यता तद्वित् ॥ ५५ ॥

सर्वस्य विष्णोर्मातृरूपा सर्वा विष्णुर्वोपास्यरूपा देवता यस्याः सा काले प्रसवकाले उपावृत्ते तत्तज्जन्मनिमित्ततया प्राप्ते अनुवत्सरं प्रतिसंवत्सरमेकैकक्रमेण अष्टौ पुत्रान् प्रसुषुवे कन्यां च ॥ ५६ ॥

---

### भाषा टीका ।

और बाहर सें प्रसन्न मुख होकें भीतर सें दुखित मन सें वा निर्दयी निर्लज्ज सों हंस करकें वसुदेवजी यों कहन लगे ॥ ५३ ॥

**वसुदेव उवाच ॥**

वसुदेवजी बोले, कि—हे सौम्य ! कंसराय ! या देवकी सों तुमकों कछु भय नहीं है, और जो कछु आकाशवाणी ने कही है सो तौ जिनसों तुमकों भय उठयो है मै याके विन पुत्रन कोंहू तुमकों सौंप देऊंगो ॥ ५४ ॥

**श्रीशुक उवाच ॥**

श्रीशुकदेवजी बोले, कि—कंस भी वसुदेवजी के वचन को सार जानतो हो, ताई सुं अपनी बहिन के वध सों निवृत्त हो गयो, और वसुदेवजी भी, बड़े संतुष्ट होकरकें वाकी बड़ी प्रशंसा करकें अपने गृह में प्रवेश करत भये ॥ ५५ ॥

तदनंतर समय आवने पै सर्व देवतामयी देवकीजी हर वर्ष में संतान पैदा करतीं ऐसे भई आठ पुत्र और एक कन्या उत्पन्न भई ॥ ५६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मृत्यवे पुत्रं कथमर्पितवानित्यपेक्षायामाह—किं दुःसहमिति । साधूनां सत्यसन्धानाम् पुत्रलालनसुखापेक्षा कथं त्यक्तेत्यत आह—विदुषामिति । भगवानेव तत्त्वं नान्यदस्तीति जानतामित्यर्थः ।

(१) किम्भूतात्मनाम् इति० विज० ।

दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ।
कंसस्तुष्टमना राजन् ! प्रहसन्निदमब्रवीत् ॥ ५९ ॥
प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ।
अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥ ६० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, स्वयं नीते सति कंसो बालं न हन्यादिति मत्वा भीतवानिति किं न स्यात्? इति नेत्याह—किमकार्यमिति । ननु, देवकी कथं पुत्रं तत्याज? इत्यत आह—दुस्त्यजामिति । चित्ते धृत आत्मा हरिर्यैस्तेषाम् ॥ ५८–६१ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कीर्तिमन्तमिति । मरीचिसुतत्वेन उत्पन्नत्वेन प्राक्तनतृतीयजन्मनि तेषामेतदादीनि नामानि स्मरादीनि चेति षड्गर्भानयने स्वामिभिर्व्याख्यास्यते । यद्वा यदा ते सुतलत आनीतास्तदा श्रीकृष्णेनैव कीर्तिमदादिनामानि कृत्वा वैकुण्ठं प्रस्थापिता इति ज्ञेयम् नवमे चात्र च श्रीवसुदेवपुत्रत्वावस्थायामेव तथाऽनुवादात् सः कृतप्रतिज्ञः प्रतिविह्वलः परमभीतः ॥ ५७ ॥

ननु वितर्के किं दुःसहम्? अपि तु सर्वमेवानायासेन सह्यमित्यर्थः । एवमग्रेऽपि मन्तव्यः तत्र सत्यसन्धानामिति प्रस्तुतोपयोगित्वात् तदीयधर्मविशेष एव निर्दिश्यते न तु तन्मात्रत्वेन साधुत्वमिति स्वामिनेच्छा तु सुतरामेव नास्तीत्यभिप्रायेणावतारयति पुत्रस्नेहेनेति, विदुषां किमपेक्षितमित्यनेन दुस्त्यजमित्यादेः पौनरुक्त्यमाशङ्क्यावतारयति—ननु, देवकीति । यद्वा, साधूनां सर्वसहत्वदार्ढ्यार्थं विदुषामित्यादिकं दृष्टान्ततया ज्ञेयम् (१) अत्रापेक्षादुस्त्यजत्वयोरप्राप्तप्राप्तविषयत्वेन भेदः कल्प्यः ॥ ५८ ॥

समत्वं पुत्रार्पणेन शत्रौ मित्रे च तुल्यतां सत्ये प्रतिश्रुत एव व्यवस्थितिं निष्ठां च दृष्ट्वा अस्मान्मम न किञ्चिदप्य(२)पमानं भविष्यतीति विभाव्येति भावः । समत्वमिति विद्वत्तायाः धृतात्मतायाश्चानुवादः यो हि विद्वान् धृतात्मा भवति स समो भवतीति असमत्वमिति पाठेऽपि स एवार्थः सत्ये व्यवस्थितिमिति साधुतायाः चतुर्थन्तु कंसगतमेवेति नानुदितं प्रहासः सन्तोषात् हे राजन्! इत्याश्चर्येण सम्बोधनम् ॥ ५९ ॥

युवयोरिति अन्यस्यां जातोऽपि व्यावर्तितः विहितो विधात्रा किलेति आकाशवाण्याः प्रसिद्धिं द्योतयति तयैवाख्यात इति वा ॥ ६० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा तावत्स्वप्रतिज्ञां पालयन् वसुदेवः प्रथमजम् अग्रजं कीर्तिमन्तं कीर्तिमान् इति नामकं पुत्रं कृच्छ्रेण दुःखेन कंसायार्पयामास तत्र हेतुं वदन् विशिनष्टि अनृतात् अनृतभाषणादतीव विह्वलः अनृतभाषणरूपपापभयादत्यन्तं विह्वल इत्यर्थः ॥ ५७ ॥

पुत्रानुरागं विहाय कथं समर्पयामास? इत्यत्राह—किमिति । साधूनां दुस्सहं दुःखेनाऽपि सोढुमशक्यं किन्त्वस्ति न किमपि सर्वमपि सुसहमेवेत्यर्थः । पुत्रविपत्तिरपि सुसहैवेति भावः । तथा विदुषां स्वात्मपरमात्मयाथात्म्यज्ञानिनां पुंसां किन्नु अपेक्षितं न किमपि शरीरतदनुबन्ध्यादिकमपेक्षितम् नास्तीति भावः । किमुपेक्षितमिति पाठान्तरं तदा विदुषामिति साधूनां विशेषणं कदर्याणामुपेक्षितमकार्यं च किमस्तीत्यन्वयः । कदर्यशब्दः क्षुद्रपर्यायः इदं कंसाभिप्रायकं धृतः स्ववशीकृत आत्मा मनो येषां दुस्त्यजं किं देहतदनुबन्ध्यादिकं सर्वं सुत्यजमेवेति भावः ॥ ५८ ॥

दृष्ट्वेति । व्यवस्थितमिति भावे क्तः शौरेर्वसुदेवस्य तत्समत्वं सुखदुःखयोस्साम्यं सत्ये व्यवस्थितं निश्चलत्वं च दृष्ट्वा कंसः तुष्टं मनो यस्य तथाभूतस्सन् हे राजन्! प्रहसन् इदं वक्ष्यमाणमब्रवीत् ॥ ५९ ॥

तदेवाह—प्रतियात्वित्यादि । अयं तव कुमारः प्रतियातु गृहं प्रतिगच्छतु ममास्मात्कुमारात् भयं मृत्युभयं नास्ति हि युवयोरष्टमात्पुत्रादेव हि मम मृत्युर्विहितः किल अशरीरवाचेति शेषः ॥ ६० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाम्ना कीर्तिमन्तम् ॥ ५७ ॥

स्वात्मनः प्राणनाशेनापि सत्यमेव रक्षन्ति महान्त इत्याशयेनाह—किं दुःसहमिति । कंसोऽसाधुरेवेक इत्याशयेनाह—किमकार्यमिति । कदर्याणां कुत्सितस्वामिनां दरिद्राणां वा वसुदेवः साधुरेवेक इत्याशयेनाह—दुस्त्यजमिति । धृतात्मनां सत्यस्वभावानाम् ॥ ५८–६० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यथैतथा पुत्राः प्रसूतास्तथा वसुदेवोऽपि श्लोकं कृतवानित्याह—कीर्तिमन्तमिति । ज्येष्ठो हि पुत्रः सर्वेषामदेयः तथापि महान् तादृशमपि दत्तवानिति स्वस्य धर्मनिष्ठतां ज्ञापयितुं कीर्तिमन्तं प्रथमजमित्युक्तं कंस इति नाम्ना क्रौर्यं ज्ञापितम् आनकदुन्दुभिरिति सत्यवाक्यत्वे हेतुः स्वयं गृहीत्वा अर्पयामास कृच्छ्रेण कष्टेन श्लोकं संहत्य । ननु, अनृतकथनमप्यधर्मः पुत्रसमर्पणमपि तत्र प्राणसङ्कटे अनृतं न जुगुप्सितमिति पुत्रमेव कथं न स्थापितवानित्याशङ्क्याह—सोऽनृतादतिविह्वलः । पुत्रास्तु देवसम्बन्धिनः

(१) अत्रोत्प्रेक्षा । (२) निष्ठम् । इति पाठान्तरम् ।

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सत्यं तु भगवत्संबन्धि तथासत्यनृते कृते न भगवत्सान्निध्यं भविष्यतीति अतिविह्वलः यतोऽस्मानकदुन्दुभिः अस्य पुत्रापत्ययापि सत्यमेव संरक्ष्यं भगवत्प्रापकम् ॥ ५७ ॥

ननु, पुत्रसमर्पणं दृष्टं सत्यमदृष्टं कथं दृष्टाऽदृष्टयोर्विपरीतो बाध्यबाधकभाव इति चेत्तत्राह—किं दुःसहमिति । पुत्रस्यादाने किं मोहो हेतुर्लौकिकः शास्त्रं वा भाग्यं दूषयति, साधूनां शत्रुमित्रोदासीनेषु तुल्यस्वभावानां किं दुस्सहम् ? मोहवशादेव पुत्रादिवियोगो दुःसहः तदभावे यथा पुत्रस्तथा कंसः ततश्च कंसघातकः पुत्रो न संरक्ष्य इति युक्तं दानम् । अथ "पुत्रेण जयते लोकान् पुत्रेण वसुताम्" इति पुन्नाम्नो नरकात् त्रायत इति त्वं यज्ञ इत्यादि वाक्यैः पुत्रकृतोपकारोपेक्षित इति चेत्तत्राह—विदुषां ज्ञानयुक्तानां किं बहिः स्थितमपेक्षितमिति न साधनं नापि फलं तत्, तथापि यथार्थं स्वतो बालकमकं समर्पयतीत्ययुक्तमिति चेत्तत्राह—किमकार्यं कदर्याणामिति । असमर्पिते वसुदेवमनृतवादिनं ज्ञात्वा कृतसमयबन्धस्य निवृत्तत्वात् सर्वानेव पुत्रान् सर्वां भार्यां मां च मारयेदतः "त्यजेदेकं कुलस्यार्थे" इति न्यायेनार्पणमेवोचितं न चैतच्च करिष्यतीत्याशङ्कनीयं यतः कदर्याणां कंसादीनां किमकार्यं सर्वोल्लङ्घनेन लुब्धाः कदर्याः कुत्सितायां दर्यां हृदयरूपायां सम्भवो येषां स्थितिर्वा । ननु, तथापि पलायनादिकमेवोचितं न तु निरपराधबालकस्याऽस्य मारणमितिचेत्तत्राह—दुस्त्यजं किं धृतात्मनामिति । धृत आत्मा वासुदेवो यैः सर्वं गच्छतु हरिस्तिष्ठतु इति येषां बुद्धिस्तेषां अन्यत्सर्वं त्यक्तव्यं भगवद्बाधकम् असमर्पणञ्च सर्वनाशकत्वात् भगवद्बाधकमिति भगवदीयानां त्याज्यवस्तुषु कोऽपि गुणदोषविचारो नास्तीति पूर्वप्रतिज्ञातस्य समर्पणं युक्तमेव ॥ ५८ ॥

भगवत्कृतत्वाज्ञानिदं जातमित्याह—दृष्ट्वेति । शौरेर्वसुदेवस्य पुत्रे स्वस्मिंश्च तुल्यतां दृष्ट्वाऽन्योन्यघातकत्वमुभयोर्ज्ञात्वा स्वस्यौदासीन्येन स्थितिरेव समता सत्ये वाक्ये चैव व्यवस्थितिमचाञ्चल्यमेवमुभयेनापि सन्तुष्टः राजन्निति संबोधनं राजधर्मस्तथैवेति ज्ञापनार्थं प्रकर्षेण हास्यं मुग्धोऽयमिति ज्ञापनार्थम् इदं वक्ष्यमाणमब्रवीत् अनेन पञ्चवार्षिको नीत इति ज्ञायते षष्ठश्चोदरस्थः प्रतियात्विति वाक्यात् अन्यथा नयस्वेव वदेत् पुत्रानिति बहुवचनानुरोधेन तावत्कालं स्थापनम् ॥ ५९ ॥

प्रतियातु व्यावुध्यगृहे यातु अयं ते कुमारो न तु मन्मारकः अमारणे हेतुः, न ह्यस्मादस्ति मे भयमिति. तर्हि समयबन्धो गत इति नाशङ्कनीयं ? यद्यस्माद्युवयोरष्टमगर्भान्मे मृत्युर्विहित इति, स समानीय देय इत्यभिप्रायः । अत एव नारदादीनामेतदसम्मतं न हि भगवद्भक्तानामन्यनिष्ठाप्युचिता अतोऽन्यथाकरणमप्युचितं किलेत्याकाशवाणी प्रतिसन्धानम् ॥ ६० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कीर्तिमन्तमिति जन्मदिन एव कृतनामकरणमित्यर्थः ॥५७॥

नन्वनृतादुद्विभेतुतमां नाम स्वसाक्षादेव पुत्रवधः कथं सोढव्यः? तत्राह—किं दुस्सहमिति । नन्वष्टममेकं पुत्रं स्वभार्याया रक्षार्थं समर्पयतुतमां नाम पुत्रान् समर्पयिष्येऽस्या इति निखिलपुत्रार्पणप्रतिज्ञां तदा कंसस्याज्ञां विनैव कथमकरोत् ? गृहस्थस्य तस्य पुत्रमात्रोपेक्षा न युज्यते तत्राह—विदुषामिति । वसुदेवः खलु कर्मिलोक इव नाविद्वानतो भक्तिज्ञानवैराग्यमहोदधेस्तस्य किं पुत्रैरिति भावः । नन्वेतादृशस्य स्वयमेव यथार्थमानीतपुत्रस्य तस्य कंसः कथं पुत्रं हन्तुमर्हतु ? किमत्राप्यार्द्रचित्तो न भवेत् तत्राह—किमकार्यमिति । ननु, तर्हि सर्वदोषपरिहाराय वसुदेवो गार्हस्थ्यमेव किं न तत्याज तत्राह—दुस्त्यजमिति । तेन तद्गार्हस्थ्यमपि त्यक्तुं शक्यमेव केवलं मत्पुत्रत्वं प्राप्स्यतो हरेर्मुखं कदा द्रक्ष्यामीति मनोरथेन गृहे स्थीयते अत एव धृत आत्मा हरिः पुत्ररूपी यैस्तेषां तेनैव हेतुना पुत्रान्तरेष्वपि न स्निह्यते स्म अष्टमपुत्रस्य समयः शीघ्रं भवत्वित्युत्कण्ठयैव प्रतिवर्षमेकैको गर्भ आधीयते स्म बालवधे स्वस्यानुमन्तृत्वलक्षणपापस्वीकारश्चेत्यादि तत्त्वमवधेयम् ॥५८॥

समत्वं पुत्रेऽपि ममत्वाभावात् सर्वत्र साम्यम् ॥५९—६१॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुत्रमरणादपि श्रीवसुदेवस्यानृतभाषणं दुःसहमिति सूचयति—सोऽनृताद्वातिविह्वल इति ॥ ५७ ॥

ननु, पुत्रमरणमपि दुःसहमेवेत्यत आह—किं दुःसहमिति ॥ ५८ ॥

भार्या पुत्रार्पणप्रतिज्ञया रक्षितवान् पुत्रार्पणेन मम रक्षामपि करोतीति शौरेः समत्वम् ॥ ५९—६१ ॥

---

### भाषा टीका ।

वसुदेवजी ने सब से पहिले होन वारे कीर्त्तिमान् नामक अपने पुत्र को बडे दुःख पूर्वक लायकें कंस को समर्पण कियो काहे सो, कि—वसुदेवजी झूंठ बोलवेतें बडे डरते रहे ॥ ५७ ॥

ठीकै तौ है, साधून कों कौनसी बात दुःसह है ? विद्वानों कों कहा अपेक्षित है, और कदर्यजन खोटी कहा न कर पारें, और हरि में चित्त लगावन वारे पुरुषन कों कहा दुस्त्यज है ॥ ५८ ॥

वसुदेवजी जब कंस के समीप पुत्र कूं लेगये तब कंस उन की समता और सत्य में स्थिति कों देखके बडो प्रसन्न भयो, और हे राजन् ! ऐसे कहन लगो ॥ ५९ ॥

कंस बोलो, कि—या कुमार कूं भलेंई लेजाओ ! या सूं मोकूं कछु भय नांय । तुमारे आठ में गर्भ सेंई ना ? मेरी मृत्यु को विधान है तौ फिरयाकों क्यों ले आये ॥ ६० ॥

तथेति सुतमादाय ययावानकदुन्दुभिः।
नाऽभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ६१ ॥
(१)(अथ कंसमुपागम्य नारदो ब्रह्मनन्दनः ॥
एकान्तमुपसङ्गम्य वाक्यमेतदुवाच ह ॥ ० ॥)
नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥
सर्वे वै देवताप्राया उभयोरपि भारत!।
ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥ ६३ ॥
(२)( असुराः सर्व एवैते लोकोपद्रवकारिणः )
एतत्कंसाय भगवान् शशंसाभ्येत्य नारदः ।
भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कंसस्य, स्वाविर्देवकायांऽनुग्रहा न भवतीति नारदस्य प्रत्य वस्थानं तदाह—नन्दाद्या इत्यादित्रयेण ॥ ६२ ॥
उभयोर्वसुदेवनन्दकुलयोः ॥ ६३ ॥
वधोद्यमं देवकृतमिति चेष्टः ॥ ६४ ॥ ६५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तथेति तथेत्युक्त्वेत्यर्थः । तथा शब्दस्य च भवान् यथाकिश्वास तथैवाहित्वित्यर्थः । नाभ्यनन्दत न प्रतीयाय कुतः असतः खलस्य मृषैव सौहृदं प्रकटयतः, अविजितात्मनः अस्थिरचित्तस्य चेत्यर्थः ॥ ६१ ॥

नन्दाद्या इति त्रिकम् । ये च वृहद्वनाख्ये व्रजे, याश्च तत्र योषितः श्रीयशोदाद्याः उक्तसमुच्चयार्थोऽयं चशब्दः सर्वत्र सम्बन्ध्यः द्वितीयश्चशब्दः कैमुत्यद्योतनार्थमध्यर्थे किं वक्तव्यं ते ताश्चेति अमीषां गोपानां तद्योषितामपि सम्बन्धिनो ये भृत्याद्या-स्ते चेत्यर्थः । वृष्णयस्तदुपलक्षिता यादवाः देवताशब्देन श्रीभगवत्पार्षदा अप्युक्ताः ॥ ६२ ॥

प्रायशब्दस्तत्र यदुषु केषांचिद्दैत्यत्वात् हे भारत! इति यथा भरतवंशे भवत्पितामहादयो देवता इति भावः भोजादयस्तदीया अपि सर्वे देवताप्राया इत्याह—ये चेति । कंसं प्रति अनुव्रता भक्तायमानाः ज्ञातयः सपिण्डाः बन्धवः सम्बन्धिनः सुहृदा मित्राणि ॥ ६३ ॥

भगवान् सर्वज्ञः कंसस्य शान्त्या शीघ्रं भगवदवतारो न कथादित्याविकं चिन्तयामासेत्यर्थः । यद्वा, परमदयाकुलतास्मरणो नारदोक्तिरियं शीघ्रं श्रीभगवदवतारकारणोत्थापनेन जगतामेव हिताचरणात् अतएवं अस्यसूया न कार्येति भावः शंसयामास स्वार्थे णिच् यथोक्तं तद्विशेषः श्रीहरिवंशे—

त्रिविष्टपादापतितो मथुरोपवने स्थितः ।
प्रेषयामास कंसाय स दूतं मुनिपुङ्गवः ॥
स दूतः कथयामास नारदागमनं नृपे ।
स नारदस्यागमनं श्रुत्वा त्वरितविक्रमः ॥
निर्जगामासुरः कंसः स्वपुर्याः पद्मलोचनः ।
स ददर्शातिथिं श्लाघ्यं देवर्षिं वीतकल्मषम् ॥
तेजसा ज्वलनाकारं वपुषा सूर्यवर्चसम् ।
सोऽभिवाद्यर्षये तस्मै पूजां चक्रे यथाविधि ।
आसनं चाग्निवर्णाभं विसृज्योपजहार सः ॥
निषसादासने तस्मिन् स वै शक्रसखो मुनिः ।
उवाच चोग्रसेनस्य सुतं परमकोपनम् ॥
पूजितोऽहं त्वया वीर! विधिदृष्टेन कर्मणा ।
गते त्वयं मम वचः श्रूयतां गृह्यतां च वै ॥
अनुसृत्य दिवो लोकान् अहं ब्रह्मपुरोगमान् ।
गतः सूर्यसखं तात! विपुलं मेरुपर्वतम् ॥
सोऽहं कदाचिद्देवानां समाजे मेरुमूर्धनि ।
सङ्गृह्य वीणां संसक्तामागच्छं ब्रह्मणः सभाम् ॥
तत्र मन्त्रयतामेवं देवतानां मया श्रुतः ।
भवतः सानुगस्येह वधोपायः सुदारुणः ॥
इति पद्मलोचन इति विस्मयेनोत्फुल्ललोचन इत्यर्थः ॥ ६४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः तथेत्यङ्गीकृत्यानकदुन्दुभिर्वसुदेवः सुतमादाय ययौ किन्त्वसतः पापिनोऽनवस्थितचित्तस्याविदितात्मनो ऽस्य कंसस्य नतुक्तं वाक्यं नाऽभ्यनन्दत् "अनवस्थितचित्तस्य प्रसादोपि भयङ्करः" इति न्यायादिति भावः ॥ ६१ ॥

नन्दाद्या इत्यादि सार्द्धश्लोकत्रयमेकान्वयम् । हे भारत! उभयोर्नन्दवसुदेवयोर्ज्ञातयो बन्धवः सुहृदोऽपि देवताप्रायाः देवांशैः

(१) श्लोकोयमाधिकः पठ्यते विजयध्वजतीर्थपाठेन । (२) इति वीरराघवीये ।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

जातत्वाद्देवताप्रायास्तत्तुल्या इत्यर्थः । ये तु कंसमनुमताः ते सर्वे असुरा असुरसम्पत्त्या जाताः अत एव लोकोपद्रवकारिणः ॥ ६२ ॥ ६३ ॥

इत्येतद्भूमेर्भारायमाणानां नृपव्याजानां दैत्यानां श्रीभगवत्कर्तृकं वधोद्योगञ्च ततो भगवान्नारदोऽभ्येत्यागत्य कंसाय शशंस कथयामास ॥ ६४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविजितात्मनोऽसतः कंसस्य तद्वचनं न विश्वसनीयमिति नाभ्यनन्दत ॥ ६१ ॥

नन्दाद्या इत्यारभ्य वधोद्यममित्यन्तं नारदवाक्यम् ॥ ६२ ॥

उभयोः यदुकुलगोकुलयोः ॥ ६३ ॥

वधोद्यमं देवैः क्रियमाणमिति शेषः ॥ ६४ ॥ ६५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवताप्राया इति पार्षदमिश्रत्वात् पक्षपा सुरमध्यत्वाद्य ॥ ६३—६६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्प्रियार्थमेव नयनमिति प्रकारान्तरेणापि तस्मिन् प्रीते पुत्रत्यागोऽनुचित इति तद्वाक्यमङ्गीकृत्य पुनरानीतवानित्याह—तथेति । स्वयमेव पूर्वोक्तौ द्वौ अविश्वासे हेतुरानकदुन्दुभिरिति । अतिक्लेश एव भगवदागमनं न स्यादर्थे आनकादुन्दुभयश्च नेदुः भगवदागमनार्थं तदुभयं विरुध्यते अतो देवकृतस्य सत्यत्वात् कंसकृतमेवासत्यमिति मत्वा नाऽभ्यनन्दत् तस्य कंसस्य वाक्यम् एनं न मारयिष्यामीत्यभिप्रायपूर्वकं तत्र हेतुद्वयमाह—असतः अविजितात्मन इति । असन् सर्वदा नैकविधः अस्थिरवाक् च घातकश्च स्वतो युक्तिदार्ढ्यरहितश्च अतः केनचित् प्रथम एवाष्टम इति ज्ञापिते मारयिष्यत्येव तस्मादसतो न विश्वासः कर्तव्यः ॥ ६१ ॥

किञ्च नान्यवाक्यमपि तस्यापेक्ष्यते यदैव राक्षसैः भक्ष्यार्थं पुरुषाः प्रार्थयिष्यन्ते तदैवैतान् घातयिष्यति क्रोधोद्गमहेतूनां बहूनां संभवात् अजितान्तःकरणत्वात् उत्पन्ने क्रोधे न विलम्बः महतामन्तःकरणमेव प्रमाणमिति तथैव जातमित्याह—नन्दाद्या इति अष्टभिः । वसुदेवे कंसकृतं देवानां हितकारि न भवतीति देवगुह्यकर्ता नारदः पर्यवसानानिष्टकर्तारं वसुदेवं पीडयितुं दैत्यरूपं कंसं चोद्वेजयितुं शीघ्रं भगवदागमनार्थं साधारणान् पीडयितुं वाक्यत्रयमुक्तवान् तदाह—ये यमुनापारे व्रजे गोपा नन्दादयः अमीषां च स्त्रियः यशोदाप्रभृतयः चकारादन्या अपि कुमारिकाः अस्मिन्नपि कुले वृष्णिवंशोद्भवाः वसुदेवादयः देवक्याद्याश्च यदुवंशोद्भवानां स्त्रियः ॥ ६२ ॥

एवमेकेन सर्वाननूद्य देवत्वं विज्ञप्ते—सर्वे इति । स्त्रियः पुरुषाः सर्व एव देवताप्रायाः ईषदसमाप्तदेवाः मानुषभावस्यापि विद्यमानत्वात् अतो देवेषु यत्कर्तव्यं तदेतेष्वेव कर्तव्यमिति ज्ञापितम् उभयोरिति रोधसोः ये केचित्तिष्ठन्ति पश्चादन्योऽपि तेऽपि देवांशाः भारतेति सम्बोधनम् एतदाद्युत्यनेन संबध्यते नारदस्य तथाकथनममन्वानस्य विश्वासजनकं देवगुह्यमेतावन्मात्रमेवेति किञ्च न केवलमुदासीना एव देवाः किन्तु कंसनिकटवर्तिनोऽप्यक्रूरादयः ये ज्ञातयो गोत्रिणः कंसस्य ये बान्धवाः संबन्धिनः ये वा सुहृदो मित्राणि ये च कंसस्य सेवकाः चकारात्प्रिप्रादयोऽपि सर्वे देवताप्राया इति ॥ ६३ ॥

कंसाय नारदः प्राहेत्याह—एतदिति । नारदस्य वचनं व्यासः पर्यालोचयति भगवानिति । कंसमेकान्ते कथनं युक्तिपूर्वकमुपाख्यानपूर्वकं च तत्रैवोपाख्याने फलितानि वाक्यान्यत्रोपनिबध्यन्ते अत आनुपूर्व्यभावो न दोषाय एतावतैव कार्यसिद्धेः । ननु, देवानामागमने किं स्यात् ? इत्याशंक्याह—भूमेरिति । नाकपृष्ठे देवानां सभायां जातं भूमेर्भारायमाणाः ये कंसादयो दैत्या जातास्ते हन्तव्या इति तद्गमनार्थमेव देवागमनं वधोद्यमरूपं जातं वधोद्यमं यथा भवति तथा एते देवताप्राया इति वाक्यम् ॥ ६४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्दाद्या इति श्रीशुकोक्तिः । अथ, श्रीनारदोक्तिस्तथा हि भवतरिष्यतः स्वाभीष्टदेवस्य शीघ्रकरणेन स्वमात्मनो विदितुं शीघ्रं तत्प्रादुर्भावकारणं कंसकर्तृकवैष्णवद्रोहं प्रवर्तयन् देवानामभ्यर्थितुं तेन भक्तद्रोहेणैव कंसञ्च घातयितुं कंसद्वारा यमानखेदानामपि तेषामभिन्नभक्तानां भगवदाविर्भावनिश्चयज्ञापकाय स्वस्मै श्रीव्यासादिचरणाश्रितस्तद्वच्च दह्यमानानां भगवद्वित्वानन्दश्च प्रवर्तयन् हरिर्नौ पुत्रो भविता न वा ? इति सन्दिहानौ देवकीवसुदेवौ सन्देहोत्कंठेनानन्दसिन्धुषु निमज्जयन् तेनैव वस्तुनः क्लेशोत्कर्षमपि हर्षविशेषं मानयन् सूचकेऽपि स्वस्मिन् सन्तोषयन् मिथ्यासौहार्दाविष्कारेण सानुगं कंसमपि कृपाऽनुकूली कुर्वन्नारदो मुनिरागत्य कंसं प्रति रहस्यमाह—नन्दाद्या इति द्वाभ्याम् ॥ ६२ ॥

केषाञ्चिद्दैत्यत्वात् प्रायशब्दप्रयोगः भा तामसी कालिस्तत्र रतेति कंससम्बोधनम् उभयोर्वसुदेवनन्दकुलयोः कथयामास शशंस ॥६३॥६४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीवसुदेवसंसर्गाद्वसुरे सुरभक्तान्ति प्राप्ते भूभारहरणादिभगवल्लीलायां किञ्चिद्विलम्बो माभूदित्येतदर्थं श्रीनारदेन कंसप्रबोधनं कृतं तदाह—नन्दाद्या इति त्रिभिः ॥ ६२ ॥

उभयोर्नन्दवसुदेवकुलयोः हे भारत ! एतत् सर्वं देवताप्रायत्वं वधोद्यमं च शशंस दैत्यानां भूमेर्भारभूतानां भवतां वधोद्यमः विष्णुप्रादुर्भावप्रयत्नरूपो देवैः कृतः विरञ्चाज्ञया च देवाः सभायां इहाऽऽगता इति कंसं प्रत्युक्तवानित्यर्थः ॥ ६३-६५ ॥

ऋषेर्विनिर्गमे कंसो यदून् मत्वा सुरानिति ।
देवक्या गर्भसम्भूतं विष्णुं च स्ववधं प्रति ॥ ६५ ॥
देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ।
जातञ्जातमहन् पुत्रं तयोरजनशङ्कया ॥ ६६ ॥
मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदस्तथा ।
घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥ ६७ ॥
आत्मानमिह सञ्जातं जानन् प्राग्विष्णुना हतम् ।
महासुरं कालनेमिं यदुभिः स व्यरुद्ध्यत ॥ ६८ ॥
उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ।
स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे श्रीकृष्णावतारोपक्रमे
प्रथमोऽध्यायः ॥ १ ॥

भाषा टीका ।

वा समय में तौ वसुदेवजी "ठीक है" ऐसे कह करकें पुत्रकों लेकें चले गये, परंच भीतरसें वाके वाक्य को अभिनंदन नहीं कियो । काहे सों, कि—वाकों वसुदेवजी जानते हैं, कि—ये असत् है, और या को मन ठिकाने नहीं हैं ॥ ६१ ॥

वसुदेवजी तौ पुत्रकों लेकें घर गये इतने में नारदजी आये । और हे राजन् ! कंस सों ये सब समाचार कह सुनाये कि—व्रज में नंदादिक जो गोप हैं और उनकी जो स्त्रियें हैं और वसुदेवसों आदि ले कें जो वृष्णि वंशी यादव हैं और इनकी भी जो स्त्रियें हैं । ये सब नंद और वसुदेव इन दोनों के कुल में जो ज्ञाति के जो बंधुवर्ग और जो सुहृद हैं, ते सब प्राय करकें देवताई हैं ( और जितने कंस के अनुवर्त्तन करन वारे हैं वे सब लोक के उपद्रव करन वारे असुरही हैं ) और भूमि के भार रूप दैत्यन के वध के तांई ये सब देवन को उद्यम है, इतनी बात कों कह करकें नारदजी तौ चले गये ॥ ६२—६४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निगडैः शृङ्खलैः अजनो विष्णुस्तच्छङ्कया ॥ ६६—६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ऋषेरिति युग्मकम् । इति अनेन प्रकारेण विशेषेण पुनर्निवृत्तिशङ्कापगमादिना धुरीतो निर्गमे सति ऋषेः साक्षात्तत्सन्निधौ लज्जाद्युत्पत्तेः किंवा तेन तन्निवारणस्य शङ्कया मत्वा ज्ञात्वा स्वस्य कंसस्य वधं प्रति तदर्थं विष्णुं च देवक्या गर्भे सम्यक् सर्वैश्वर्यपरिपूर्णतया भूतमाविर्भूतं भविष्यत्यपि भूतनिर्देशः सामीप्यात्तन्निर्द्धारणाद्वा यद्वा गर्भे सम्भूतं सम्भूतिर्यस्य तं मत्वा सम्भूतिमिति पाठोऽपि क्वचित् तज्ज्ञानं च "अस्यास्त्वामष्टमो गर्भः" इति पूर्वोक्तेन समुदितात् "दैत्यानां च वधोद्यमम्" इति श्रीनारदवचनादेव ज्ञेयं, तथा च तत्रैव—

"तत्रैषा देवकी या ते मथुरायां पितृष्वसा ।
योऽस्या गर्भोऽष्टमः कंस ! स ते मृत्युर्भविष्यति ॥
देवानां चैव सर्वस्वं त्रिदिवस्य गतिश्च सः ।
परं रहस्यं वेदानां स ते मृत्युर्भविष्यति ॥
परतोऽपि परस्तेषां स्वयम्भूश्च दिवौकसाम् ।
ततस्त्वेतन्महद्भूतं दिव्यं ते कथयाम्यहम् ॥
श्लाघ्यश्च स हि ते मृत्युर्भूतपूर्वश्च तं स्मर" इति

तत्र पितृष्वसेति पितृसम्बन्धेन स्वसेत्यर्थः । देवकजनकेनाऽऽहुकेन पौत्री देवकी स्वपुत्रीत्वेन पालितेति केचित् निगृह्य बद्ध्वा निजगृहे अजनेति जीववज्जन्मरहितस्यापि प्राकृतजन्मशङ्कयेति कंसस्य मौढ्यं सूचितं किं वा अजनाद्या शङ्का भयं तया ॥ ६५-६६ ॥

ननु, बालान् घ्नन् कंसः कथं न लज्जते ? तत्राह—मातरमिति मात्रादीनां यथोत्तरं स्निग्धत्वेन न्यूनता मातरमपि घ्नन्ति किमुत पितरमित्येवं हि निश्चये यतो ये असून् निजप्राणानेव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तर्पयन्तीत्यसुतृपः राज्यादिलुब्धाः ते मात्रादीन् घ्नन्ति प्रायश इति तेऽपि न सर्वे इति तस्याऽत्यन्ताधमत्वविवक्षया ॥ ६७ ॥

विष्णुना निजशक्त्या जगद्व्यापकेनेति हनने सामर्थ्यमुक्तं जानन्निति भूतपूर्वं च तं स्मरेति श्रीनारदवचनादेव पूर्वजन्मस्मरणात् ॥ ६८ ॥

न केवलं तैः सह स्वपित्रापीत्याह—उग्रेत्यादि । यदुभोजाद्यधिपमपि निगृह्य बद्ध्वा अतिक्रम्य वा स्वयं बुभुजे यतो महद्बलं सामर्थ्यं दैत्यसेना वा यस्य सः भोजादीनां यदुत्वेऽपि पृथगुक्तिः तेषां तेषु प्रधानानामप्यधिप इति विवक्षया शूरसेनानिति माथुरांस्तत्पूर्वमेव तत्कुलधामातिक्रम्य बुभुज इति द्योतितम् ॥ ६९ ॥

इतिश्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृत वैष्णवतोषिण्याम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत ऋषेर्नारदस्य विनिर्गमनानन्तरं कंसो यदून् सुरांशसम्भवान् स्ववधं प्रत्युद्दिश्य देवक्या गर्भे सम्भविष्यमाणं विष्णुञ्च ज्ञात्वा इत्यर्थः ॥ ६५ ॥

देवकीं वसुदेवं च निगडैः शृङ्खलैर्गृहे कारागृहे निगृह्य निग्रहपूर्वकमावध्य अजनशङ्कया अरिष्टशङ्कया अर्दनशङ्कयेति पाठे स्वपीडाशङ्कया तयोर्देवकीवसुदेवयोः पुत्रं जातञ्जातमहन् जघान॥६६॥

निर्घृणाः कथमहन्नित्यत्र लोकपरिपाटीं दर्शयति—मातरमिति भुवि राजानः प्रायशो ऽसुतृपाः परप्राणैरात्मप्राणतर्पकाः लुब्धाः निषादसदृशाः मात्रादीनपि घ्नन्तीति हि निश्चयार्थद्योतकः ॥ ६७ ॥

आत्मानं प्राक् पूर्वजन्मनि विष्णुना हतं महासुरं कालनेमिम् इहास्मिन् जन्मनि आत्मरूपेण जातं जानन् नारदवाक्याज्जानन् स कंसः यदुभिः सह व्यरुध्यत विरोधङ्कृतवान् ॥ ६८ ॥

भोजानामन्धकानां च यादवानामधिपं पितरमुग्रसेनं निगृह्य स्वयं महाबलः कंसः शूरसेनान् जनपदान् बुभुजे उपभुक्तवान् ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अहन् हतवान् अजनो विष्णुरस्तीयां इति शङ्कया ॥ ६६ ॥
परप्राणैः स्वानसून् प्राणांस्तर्पयन्तीत्यसुतृपः ॥ ६७ ॥
प्राक् पूर्वजन्मनि ॥ ६८ ॥
शूरसेनान् विषयान् ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥
( विजयध्वजतीर्थपाठेन द्वितीयोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं श्लोकत्रयमुक्त्वा ऋषौ गते कंसो यत् कृतवांस्तदाह, पञ्चभिः—ऋषेर्विनिर्गमे इति । अनुवादेऽपि येऽर्थास्ते पूर्वं नारदेनोक्ता इति ज्ञातव्यम् ऋषिणैव निवारितामिति न ऋषेरग्रे किञ्चित् कृतवान् द्वयं ज्ञातवान् चतुष्टयं च कृतवान् ज्ञातं द्वयमाह—यदून् सुरान् देवान् मत्वा देवक्या गर्भेऽष्टमे सम्भूतिर्यस्य तादृशं च विष्णुं स्वस्य कंसस्य वधं प्रत्येव देवकीगर्भसम्भूतिं विदित्वा ॥ ६५ ॥

प्रथमतो देवकीं वसुदेवं चकारादन्यांश्च तदन्तर्गतान् स्वगृह एव निगडैर्निगृह्य जातञ्जातमानुपूर्व्येण जातम् अष्टमसङ्ख्याया अपेक्षाबुद्धिजन्यत्वात् गणनायामनियमसम्भवात् अजनशङ्कया विष्णुसन्देहात् षट् पुत्रानहन् जातंजातमिति न कालभेदज्ञापकं किन्तु मारणे देवक्यां जननमेव निमित्तमिति ज्ञापयितुम् अन्यथा क्षत्रियाणां त्रयोदश एवाह्नि नामकरणसम्भवात् उत्पन्नमात्राणामेव मारणे कीर्तिमन्तं सुषेणं चेत्यादिनामोक्तिराद्यस्कन्धेऽनुपपन्ना स्यात् ॥ ६६ ॥

नन्वेवं कथमतिक्रुष्टं कृतवानित्याशङ्क्याह—मातरमिति । अयन्तु दैत्य एव येऽप्यन्ये राजानः तेऽप्यसुतृपः केवलं प्राणपोषकाः तत्रापि लुब्धाः लोभः सर्वगुणनाशकोऽतस्तेषां गुणा न सन्तीति ज्ञापनार्थमुक्तं प्रायश इति लुब्धा इति च पदद्वयेन केचन धर्मात्मानो व्यावर्तिताः अम्बरीषादयः भुव्येषैव व्यवस्था यतो युधिष्ठिरादयोऽपि पितामहादीन् मारितवन्तः स्वस्य यत्रैव मरणसन्देहस्तानतिमान्यानपि मात्रादीन् पञ्चविधान् घ्नन्त्येव ॥ ६७ ॥

नन्वस्य स्वस्यापि देवत्वसम्भावनया तद्धिताचरणमेव कथं न जातम् ? इत्याशङ्क्याह—आत्मानमिति । पूर्वममृतमथने भगवता महासुरः कालनेमिर्हतः देवपार्ष्णिग्राहेण स एवाऽयं कंसः इत्यात्मानं जानन् पुनर्देवप्रेरणयैव मारणार्थमायातीति यदूनां देवत्वात् तैः सर्वैरेव सह विरोधं कृतवान् ॥ ६८ ॥

अन्यदप्यत्यन्तायुक्तं कृतवानित्याह—उग्रसेनमिति । नात्रैव महत्त्वं निरूपितं स्वस्य पितरं सर्वसहाययुक्तं यदुभोजान्धकाधिपं यदवो भोजा अन्धकाश्च उपलक्षणमेतत् बहुविधानामपि यादवानां तदाज्ञया ते सर्वे विपरीतं करिष्यन्तीति विशेषतस्तस्य

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी ।

बन्धनं बन्धकः स्वयमेव जात इत्याह—स्वयं निगृह्येति । शूरसेनदेशस्तस्य भोगार्थं स्थितः अतस्तस्य पुनर्वचनं शूरसेनान् बुभुजे इति एतत्सर्वकरणे सामर्थ्यं महाबल इति एवं सर्वेषां देवांशानां भक्तानां महानुपद्रवो निरूपितः भगवदवतारे हेतुभूतः ॥ ६९ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
प्रथमाध्यायविवरणम् ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विष्णुश्च स्ववधं प्रतीति पूर्वशत्रुर्विष्णुर्देवक्यामाविर्भूय त्वां वधिष्यतीति नारदेनोक्तं तत्तत्सर्वं एव शुश्रुश्रुश्रेत्यपि ज्ञेयम् भजनो विष्णुस्तच्छङ्कया ॥ ६५ ॥ ६६ ॥

कंसादीनां दुर्जनानामेतन्न चित्रमित्याह—मातरमपि किमुत पितरमित्येवं यथापूर्वं गुरुत्वाधिक्यम् ॥ ६७ ॥

जानन् नारदवचनात् ॥ ६८ ॥

शूरसेनान्तर्गतत्वान्माथुरानपि ॥६९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निगडैः शृङ्खलैः भजनशङ्कया श्रीनारदोक्तविष्णुप्रादुर्भावशङ्कया ॥ ६६—६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
प्रथमाऽध्यायार्थप्रकाशः ॥ १ ॥

भाषा टीका ।

और नारदजी के जातेई कंसने यादवन को देवता जानके तथा अपने वधके तांई देवकी के गर्भ में होनवारे पुत्रकों विष्णु जानके ॥ ६५ ॥

देवकी और वसुदेव को अपने कारागार में कंसने सांकर सों बांधके ( बेडीडार के ) रोकदिये, और जैसें २ पुत्र होतगये तैसें २ कंस विष्णु की शङ्कासों उनके पुत्रों को मारतो गयो ॥ ६६ ॥

ठीक ही तौ है, पृथिवी में अपने प्राण पालनवारे राजालोग प्रायकरके अपने माता, पिता, भ्राता, तथा और सब सुहृदन को मारेंहै हैं ॥ ६७ ॥

कंसनें पहिले जन्म में मैं कालनेमि महाअसुर रह्यो हूं और मोकूं विष्णुने मारो रह्यो सो अब में या जगै उत्पन्न भयो हूं ऐसें जानी तब यादवन सों विरोध करन लग्यो ॥ ६८ ॥

और यदु, भोज, अन्धक, आदि वंश के अधिप ऐसे अपने पिता को दण्ड देकें रोक कें शूरसेनदेशों को आप ही भोगने लग्यो काहे सों, कि महान् बलीरह्यो ॥ ६९ ॥

इतिश्रीमद्भागवतदशमस्कन्धमें प्रथमअध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ १ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## ॥ द्वितीयोऽध्यायः ॥

श्रीशुक उवाच ।

प्रलम्बबकचाणूरतृणावर्तमहाशनैः ।
मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥
अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ।
यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥
ते पीडिता निविविशुः कुरुपञ्चालकेकयान् ।
साल्वान् विदर्भान्निषधान् विदेहान् कोसलानपि ॥ ३ ॥
एके तमनुरुन्धाना ज्ञातयः पर्युपासते ।
हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये कंसघाताय देवक्या गर्भगो हरिः ।
ब्रह्मादिभिः स्तुतः सा च सान्त्विततेति निरूप्यते ॥

बहुभिः सव्यरुध्यतेत्युक्तन्तमेव विरोधप्रपंचयति त्वरया देवकीगर्भस्याम्यत्र सञ्चारेण भगवतः प्रवेशं वक्तुमाह-प्रलम्बेत्यादि-सार्द्धश्लोकत्रयेण । महाशनो ऽघासुरः ॥ १ ॥ २ ॥ ३ ॥
अनुरुन्धाना अनुवर्तमानाः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रलम्बेति युग्मकम् ॥ १ ॥
तैर्युतस्वे बलीति ॥ २ ॥
निभृतं विविशुः तत्तद्वेषदीनां हालिकगोपादिग्रामेषु इत्यर्थः ॥ ३ ॥

एक इत्यर्द्धकम् अनुरुन्धानाः चातुर्येण वशीकुर्वन्तः यद्वा एके भक्ताः श्रीकृष्णावतारदर्शनरूपं स्वार्थमपेक्षमाणा इत्यर्थः एतच्चाग्रे अक्रूरयाने व्यक्तं भावि पर्य्युपासते पर्युपासत हतेष्विति सार्द्धकम् जातं जातमहासीति पूर्वमुक्तं ते कति हता इत्यपेक्षायामाह-हतेष्विति । ते हि पुरा मरीचेः पुत्राः देवाः श्रीब्रह्मयथपराधेनासुरत्वप्राप्त्या हिरण्याक्षपुत्रात् कालनेमेरुत्पन्नाः षड्गर्भा इति ख्याताः एवं परित्यज्य ब्रह्मोपासकास्ते जाता इति क्रुद्धस्य हिरण्यकशिपोः पिता युष्मान् वधिष्यतीति शापं स्मृत्वा श्रीदेवकीगर्भे योगमायाद्वारा श्रीभगवता निवेश्य तत्पितृकालनेम्यवतारकंसहस्तेन घातिता इत्यादिकमत्र श्रीहरि-वंशाद्युक्तमनुसन्धेयं यत्त्वग्रे हिरण्यकशिपोर्जाता इति तेषा-माख्यानं ते नैकवाक्यत्वाय कालनेमिक्षेत्रे तस्मादेव जाता इति ज्ञेयं जाता इत्यत्र पुत्रा इत्यनुक्तत्वात् भारद्वाजादिषु च तथा श्रवणात् अथवा कल्पभेदं व्यवस्थेयं घातनं च तेषां विमु-क्तय एवेत्यग्रे पञ्चाशीति तमाध्याये व्यक्तं भावि एवं तेषां हनने श्रीभगवत्कृतापेक्षापि परिहृता स्यात् औग्रसेनिनेति सेर्ष्य-मुक्तं साक्षात्तन्नामाग्रहणात् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षव्याख्यानम् ।

प्रथमोऽध्यायः ॥

श्रीमते रामानुजाय नमः ॥

* ॥ १—४ ॥

अमरञ्जयैर्देवानपि जेतुं समर्थैः वत्सपदं कृत्वा गोष्पद-तुल्यं कृत्वा यत्त्वा इति बहुव्रीहिः यच्छब्दो भगवद्विषयः ॥५-६॥

पूरुषकालरूपैः क्षेत्रज्ञकालाख्यरूपैर्विशिष्टस्य क्षेत्रज्ञानां काला-वयवानां बाहुल्याद्बहुवचनम् अन्तः पुरुषरूपेणाऽमृतं प्रयच्छन् शरीर-स्थितिहेतुः बहिः कालरूपेण मृत्युं प्रयच्छन् शरीरविनाशहेतु-रित्यर्थः । मायामनुष्यस्य आश्रितभूतमनुष्यस्य सङ्कल्परूपज्ञानेन मनुष्यस्य वा प्रच्छन्नमनुष्यस्य वा ॥ ७ ॥

देहोऽवताररूप इति ॥ ८—११ ॥

त्यक्तोदम् अम्बुपानरहितम् ॥ १२—२० ॥

पौरुषीं परमपुरुषसम्बन्धिनीं गाङ्गिरम् ॥ २१ ॥

धराभरः भूभारः धाराज्वर इति पाठे क्लेशः पुंसः पुरुषस्य

---

* पञ्चादधध्यायतः पञ्चाभिवेशितमिदं व्याख्यानम् ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवतारात्पूर्वमेवेत्यर्थः ॥ २२—२३ ॥

कला अंशः अनन्तः शेषः अग्रजः पूर्वकाले ॥ २४—३० ॥

पारिबर्हं दम्पत्योरुपचारसम्बन्धि ॥ ३१—३९ ॥

व्रजंस्तिष्ठन्निति गच्छन् पुरुषः एकेन पादेन तिष्ठन्नपि गच्छत्येव तद्वदित्यर्थः । देहान्तरग्रहणेन पूर्वदेहत्यागे दृष्टान्तस्तृणजलूका ॥ ४० ॥

दृष्टश्रुताभ्यां दृष्टश्रुतमनीषितलाभार्थम् अपस्मृतिः अपगतबोधः ॥ ४१—४५ ॥

साम पञ्चविधं सम्बन्धो लाभ उपकृतिरभेदो गुणकीर्तनञ्चेति भेदो दृष्टादृष्टभयं वच इति । तत्र गुणकीर्त्तनादयः प्रकाराः श्लाघनीयगुणा इत्यादिना दर्शिताः एषा तवानुजा त्वया बाल्ये दैन्योपलालितेनाऽहन्तव्येत्यर्थः । पुरुषादानुवृत्तः राक्षसतुल्यः ॥ ४६ ॥

प्रतिव्योढुं समाधातुम् ॥ ४७ ॥

यावद्बुद्धिबलोदयं यथामति यथाशक्ति च मृत्युपरिहारे यतितव्यम् एतावता मृत्युरनिवृत्तोऽपि पुरुषस्य नापराधः इत्यर्थः ॥ ४८ ॥

सुता मे इति मृत्युर्वा मृत्युभूतः कंसो न मरिष्यति मम पुत्रोत्पत्तेः पूर्वं किं ? मम पुत्रोत्पत्तेः कंसाऽवस्थानस्य च पाक्षिकत्वात् पुत्रार्पणप्रतिज्ञा न दोष इत्यर्थः ॥ ४९ ॥

विपर्ययो वा मत्पुत्रः कंसहन्ता कथं न स्यात् ? अतोऽपि न दोष इत्यर्थः । उपस्थित इति उपस्थितोऽपि मृत्युः कश्चिन्निवर्त्तते यथा मार्कण्डेयादेर्निवृत्तः वरदानान्निवृत्तोपि मृत्युः पुनरावजेत् यथा हिरण्याक्षरावणादेः अपमृत्युनिवृत्तिसम्भावनया च न प्रतिज्ञादोष इत्यर्थः ॥ ५० ॥

दारुसंयोगवियोगशङ्काभ्यां शीघ्रविलम्बोत्पत्ती विवक्षिते अदृष्टतः यजमानादृष्टतः मृत्युः कर्माधीनः न पुरुषाधीनः अतोऽपि न भेतव्यमिति भावः ॥ ५१ ॥

यावदात्मनिदर्शनं स्वज्ञानानुरूपस्वाऽवगतादृष्टानुगुणम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

ऋतात्मनामिति पाठे स्वतः सत्यप्रतिज्ञानामित्यर्थः । शौरेः वसुदेवस्य ॥ ५८-६२ ॥

देवताप्राया देवतांशत्वात् तत्तुल्याः ॥ ६३ ॥

एतत् वक्ष्यमाणम् ॥ ६४ ॥

गर्भसम्भूतं मत्वेत्यन्वयः ॥ ६५ ॥

भजनशङ्कया भगवच्छङ्कया विष्णोरर्दनशङ्कयेति पाठे स्वान्तःसत्त्वपीडाशङ्कयेत्यर्थः ॥ ६६ ॥

असुतृप: आत्मप्राणतर्पकाः ॥ ६७ ॥

स व्यरुध्यत विरोधं कृतवान् ॥ ६८ ॥

अधिपम् उत्कृष्टम् ॥ ६९ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
प्रथमोऽध्यायः ॥ १ ॥

॥ १ ॥

मागधो जरासन्धः ॥ २-३ ॥

अनुरुन्धाना अनुवर्त्तमानाः ॥ ४-६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुभिः स व्यरुद्धयतेत्येतदेव प्रपञ्चयन् श्रीभगवतो देवकीगर्भप्रवेशप्रकारं तत्प्रवेशप्रयुक्तप्रभातिशययुक्तदेवकीदर्शनोद्विग्नस्य कंसस्यावस्थानप्रकारं श्रीगर्भस्थं श्रीविष्णुमुद्दिश्य ब्रह्मादीनां स्तुतिप्रकारञ्चाह—द्वितीयाध्यायेन प्रलम्बेत्यादिना । प्रलम्बादिभिरन्यैश्चासुरप्रकृतिभिः भूपालैर्बाणादिभिः परिवृतः कंसः भौमो नरकासुरः बलिमागधौ संश्रयौ यस्य तथाभूतः बलीतिमागधविशेषणं वा मागधो जरासन्धः यदूनां कदनम् उपद्रवं चकार ॥ १ ॥ २ ॥

तथा ते यदवः केचित्पीडिताः कुर्वादीन् जनपदान् निविविशुः ॥ ३ ॥

एके तु ज्ञातयः तं कंसमनुरुन्धाना अनुवर्त्तमानाः पर्युपासते पर्यचरन् तत औग्रसेनिना कंसेन षट्सु देवक्याः पुत्रेषु हतेषु सत्सु यद्वैष्णवं विष्णोः सम्बन्धि धाम तेजोंऽश इति यावत्. कोऽसौ ? यमंशमनन्तं प्रचक्षते स देवक्याः सप्तमो गर्भो बभूव, कथम्भूतः ? तस्याः हर्षशोकौ विवर्द्धयतीति तथा कंसभयाच्छोकः श्रीभगवत्कलासम्बन्धात् पुत्रो भविष्यति किं समर्थोऽस्माकमपीति हर्षः इति भावः ॥ ४ ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवताररूपं हरेर्न किञ्चिदपि भिन्नं साक्षात्स्वरूपमेव तज्ज्ञानस्य मुक्तिहेतुत्वादित्यभिप्रायेण निरूपणमस्मिन्नध्याये, तत्र दुष्टेन्द्रियैः सदिन्द्रियनिग्रह इव कंसः प्रलम्बादिभिः सहितो यदुनिग्रहमकृतेत्यादिकं निरूपयति—प्रलम्बेत्यादिना ॥ १ ॥

कदनं कलहं मागधो जरासन्धः संश्रयो यस्य स तथा तं संश्रयतीति वा ॥ २ ॥

ते यादवा निविविशुः निवेशनं चक्रुः ॥ ३ ॥

अनुरुन्धानाः अनुवर्तमानाः ॥ ४ ॥ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"एवं हेतुं निरूप्याथ कृष्णोद्यम उदीर्यते ।
महत्त्वज्ञापनार्थाय द्वितीये सविशेषणः ॥
दुःखं हेतुरिहागन्तुमिति बोधाय तत्कथा ।
पुनर्निरूप्यते स्पष्टा शीघ्रागमनहेतुका ॥
सर्वेषां ज्ञापनार्थाय कंसवाक्यं तथा स्तुतिः ।
अन्यथा भगवानेव प्रादुर्भूतः कथं भवेत्" ॥

पूर्वं सामान्यतो विरोधमुक्त्वा शीघ्रं भगवदागमनार्थं लोके कंसकृतमत्युपद्रवमाह—सार्द्धैस्त्रिभिः प्रलंबेति । प्रलंबो दैत्यः दैत्यरूपेणैव वर्त्तते, बको दैत्यः पक्षिरूपेण, चाणूरो दैत्यो मनुष्यरूपेण, तृणावर्त्तो राक्षसो वातरूपेण, एत एव महाशना: बहु

सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते।
गर्भो बभूव देवक्या हर्षशोकविवर्द्धनः॥ ५॥
भगवानपि विश्वात्मा विदित्वा कंसजं भयम्।
यदूनां निजनाथानां योगमायां समादिशत्॥ ६॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मत्सकाः अनेन यदूनां कदनं चक्रे इत्यत्र यदवो भक्षिता इत्यपि ज्ञापितं महाशनोऽघ इति केचित् तत्र नामस्तु यौगिकप्रवेशश्चिन्त्यः मुष्टिकश्चाणूरवत् यथा प्रलम्बो बलभद्रेहतः प्रथमनिर्दिष्टस्तथा मुष्टिकोपि अरिष्टो वृषरूपो बकवत् द्विविदो वानरः पूतना राक्षसी केशी अश्वात्मकः धेनुको गर्दभात्मकः॥ १॥

अन्येचैवंविधाः शतशः सन्ति असुराभूत्वा ये भूपालाः बाणो बलिसुतः नरको भौमः आदिशब्देन जरासन्धादयः गुप्तान् यदून् प्रलम्बादयो बाधन्ते प्रकटान् बाणादयः एवमेतैर्यदूनां कदनमन्यायनाशं चक्रे एतेषामाज्ञाकारित्वे हेतुः बलीति, मागधो जरासन्धः श्वशुरः सहायभूतः तेनापि दिग्विजयं पराजितेन सुते दत्ते एतेषामन्यतरेणाप्याज्ञोल्लङ्घने कृते जरासन्धः साधयतीत्याश्रयः॥ २॥

पीडितानां कृत्यमाह—ते पीडिता। इति पुर्वोक्तैः पीडिताः कुरुदेशान् हस्तिनापुरदेशान् विविशुः तथाऽन्ये पाञ्चालदेशान् कम्पिलादिदेशान् केकयान् चित्रकूटादिदेशान् साल्वान् पश्चिमदेशान् निषधान् उत्तरदेशान् विदर्भान् दाक्षिणदेशान् विदेहान् तैरभुक्तदेशान् कौसलान् अयोध्यादेशान् नितरां विविशुः गुप्ततया स्थिताः एते धर्मात्मनो राजानः अतः स्वदेशं परित्यज्य सकुटुम्बास्तत्रैव स्थिता इत्यर्थः॥ ३॥

ये पुनर्निर्गन्तुमशक्तास्ते कंससेवका एव भूत्वा स्थिता इत्याह एके इति। एके अक्रूरादयः तमनुरुन्धानास्तं संवेष्ट्य तत्सेवकत्वेन स्थिताः ज्ञातयो मौत्रिणः परितं उपासते। एवं सर्वेषां महदुःखमुद्यमार्थं हेतुत्वेन निरूपितं भगवत उद्यमं वक्तुं देवक्याबन्धनावधि चरित्रमाह, हतेष्विति सार्द्धेन। देवक्याः षट्सु बालेषु औग्रसेनिना हतेषु सत्सु भागिनेयान् हन्तीति पितुनाम्ना निर्देशः अन्येषां हननमर्थसिद्धमेव, लोके हि भागिनेयोऽतिमान्यः षड्गुणास्तेन बुद्ध्या हता इति॥ ४॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

गर्भे सञ्चार्य रोहिण्यां देवक्या योगमयया।
तस्याः कुक्षिं गतः कृष्णो द्वितीये विबुधैस्तुतः॥०॥

यदुभिः स व्यरुध्यत इत्युक्तं तमेव विरोधं प्रपञ्चयति-प्रलम्बेति सार्द्धत्रयेण। महाशनोऽघासुरः॥ १—३॥

एकेऽक्रूरादयः श्रीकृष्णावतारदर्शनोत्कण्ठावन्तः तं कंसमनुरुन्धानास्तदाज्ञावर्त्तिनः॥ ४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं प्रथमाध्याये ब्रह्मादिप्रार्थनया भूभारहरणचिकीर्षया श्रीवसुदेवगृहे सम्भाविष्णोर्विष्णोः पितृविवाहोत्सवः श्रीवसुदेवसाधुता कंसदौर्जन्यञ्चेति वर्णितमिदानीं श्रीदेवकीगर्भवासलीला ब्रह्मादिभिः कृता भगवत्स्तुतिश्च निरूप्यते। तत्र तावत्पूर्वाऽध्यायान्ते यदुभिः स व्यरुध्यतेति यदुक्तं तदेव विरोधं प्रपञ्चयति-प्रलम्बेतिसार्द्धैस्त्रिभिः। महाशनोऽघासुरः यद्वा महदशनं भोजनं येषां ते महाशना इति प्रलम्बादीनां विशेषणम् अघासुरस्य व्योमादिवदुपलक्षणतया ग्रहणम्॥ १॥

स्वयं बली तथापि मागधसंश्रयः जरासन्धसहायः॥ २-३॥

एके ज्ञातयः सगोत्राः अनुरुन्धानाः अनुवर्तमानाः सन्तस्तं कंसं परितः उपासते॥ ४॥

---

### भाषा टीका।

देवकीगर्भंब्रह्मादिभिः स्तुतीय हरयेनमः

श्रीशुक उवाच॥

श्रीशुकदेवजी बोले, कि—प्रलम्ब, बक, चूरण, तृणावर्त, अघासुर, मुष्टिक, अरिष्ट, द्विविद, पूतना, केशी, धेनुक, ॥ १॥

ये सब और बाणासुर, भौमासुर, इत्यादि बड़े२ असुर भूपालन के सहित मिलके और जरासन्ध को आश्रय लेकरके बली कंस, यादवन को चकना चूर करत भये॥ २॥

वे विचारे पीडित हो करके कुरुदेश, पाञ्चाल, केकयदेश, शाल्व, विदर्भ, निषध, विदेह, और कौसल, इन देशनमें जहां तहां प्रवेश कर गये॥ ३॥

कितने एक ज्ञाति लोग वाके अनुरोधसों वाई की उपासना सी करत रह गये कंसने देवकी के छै ६ बालकों को मारने पर॥ ४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

धाम कला तदेव सप्तमो गर्भो बभूव किं तन्नामेत्यत आह, यमनन्तमिति। हर्षशोकविवर्धनः आनन्दरूपस्यावतीर्णत्वाद्धर्षः पूर्वं गर्भसाधारण्यदृष्ट्या च शोक इति॥ ५-६॥

गच्छ देवि ! व्रजं भद्रे ! गोपगोभिरलङ्कृतम् ।
रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ।
अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ॥ ७ ॥
देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ।
तत्सन्निकृष्य रोहिण्या उदरे सन्निवेशय ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, सा गोकुले किमित्यास्तेऽत आह—अन्याश्चेति । न केवलं सैवान्या अपीति विवरेष्वलक्ष्यस्थानेषु ॥ ७ ॥

जठरे सन्तम्. ननु, गर्भे आकृष्यमाणे कथं जीवेत्? इत्यत आह, मामकं धामेति तत्त्वतः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वैष्णवं श्रीकृष्णस्य यद्धाम अनन्तं सङ्कर्षणं चतुर्व्यूहद्वितीयं प्रचक्षते वक्तृत्वासिद्धाः ॥ ५ ॥

भगवान् स्वयमेव नित्यरूपः श्रीकृष्णः विश्वात्मा सर्वांशी अपिशब्दः श्रीरोदशाय्यपेक्षया पूर्वं स वै ब्रह्मादीन् समादिशत् अधुना स्वयमसावाप योगमायामिति विदित्वा निवेदनं विनापि यदूनां भयं ज्ञात्वा तद्भयनिरासार्थमित्यर्थः । सम्यक् प्रोत्साहनादिपूर्वकमादिशत् कुतः निजाः श्रीवसुदेवादयो नाथा येषां तेषां भक्तवात्सल्यादिति भावः । स्त्रीयेषु अष्टानामिति वा योगो भगवच्छक्तिविशेषः स एव ब्रह्मादीनामपि मोहनान्माया तां जगत्कारणशक्तितोऽपि परावस्थामेकानांशाख्यां यद्वात्रापि-शब्दोयं श्रीभगवतः परमोत्कर्षं सूचयित्वा तस्यास्तादृशत्वेपि ततोऽतिनिकर्षं सूचयति तादृश्योपि तादृशीतां समादिशदिति तु तस्य निजेषु वात्सल्यातिशयम् ॥ ६ ॥

गच्छेत्यर्धकं हे देवि जगत्पूज्ये ! भद्रे ! सर्वमङ्गले एतत्पर्यं तस्याः प्रोत्साहनार्थं यद्वा तत्र गमने योग्यतोक्ता, पुनर्विशेषेण प्रोत्साहयति; गोपेति. अनेन तेषां गोपानां गवां च तस्या अत्यगम्यं परमाश्चर्यरूपत्वं दर्शितं अन्या वसुदेवभार्याः ॥ ७ ॥

गर्भं भ्रूणं शेषाख्यं शिष्यत इति शेषोंशः स आख्या ख्यातिर्यस्य तं ममांशत्वेन ख्यातमित्यर्थः । मामकं सङ्कर्षणाख्यं धाम रूपं आधारशक्तिमयत्वेनाश्रयं वा सम्यक् अवाचितं सुखपूर्वं च नितरां कृष्टा ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विवरेषु गिरिगुहासु ॥ ७—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः भगवान् विश्वात्मा हेतुगर्भमिदं कंसाज्जातं निज आत्मा नाथो येषां तेषां यदूनां भयं ज्ञात्वा योगमायां स्वमायाधिष्ठात्रीं देवतामादिशदाज्ञापयामास ॥ ६ ॥

तदेवाह—गच्छेत्यादिना सन्दिष्टैवमित्यतः प्राक्तनेन । हे देवि ! भद्रे ! त्वं गोपैर्गोपीभिश्चालङ्कृतं श्रीनन्दव्रजं गच्छ तत्र गत्वा, किं विधेयम्? इत्यत्राह—नन्दगोकुले नन्दस्य गोकुले व्रजे वसुदेवस्य भार्या आस्ते तथाऽन्याश्च तस्य भार्याः कंसात्संविग्ना भीताः तत्र तत्र विवरेषु पर्वतबिलादिषु प्रच्छन्ना वसन्ति ॥ ७ ॥

अधुना मामकं मदीयं शेषाख्यं धाम अंशं देवक्याः जठरे गर्भरूपेणावस्थितं तस्माद्देवकीजठरात्सन्निकृष्य सम्यग्बहिर्निष्कास्य रोहिण्या जठरे सम्यक् निवेशय अनेन रोहिण्यास्तनयः प्रोक्त इत्यादिप्राक्तनप्रश्नस्योत्तरमुक्तं भवति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैष्णवं धाम विष्णुतेजः सन्निहितं हर्षशोकविवर्धन इति उत्पत्तिप्रस्तवगाङ्ग्वामितिश्लेषः । हर्षं समेधयन् शोकमेधयन्निति वा ॥ ५—६ ॥

पर्वतविवरेषु ॥ ७—८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शेषाख्यं ममांशत्वेन प्रसिद्धमित्यर्थः । तं सङ्कर्षणं मामकं धाम स्वरूपमाश्रयं वा ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धर्मी स्थानभूतः अक्षरात्मा समागतस्तस्यापि मारणमाशंक्य परिहरति—वैष्णवमिति । विष्णोर्व्यापकस्य सर्वरक्षकस्य स्वरक्षायां सन्देहो नास्तीति ज्ञापितं । सप्तम एव परमावधिः षड् गुणाः सप्तमो धर्मी च तदाधारभूतः पुरुषोत्तमस्तु ततो महान् अतस्तद्व्यावृत्त्यर्थं धामेति यतो लोकाः यमनन्तं कालात्मकमाचक्षते सोऽनन्तः सप्तमे पर्याये गर्भः प्रकटो बभूव स चार्द्धं प्रकटितानन्द इति देवक्या हर्षशोकविवर्द्धनो जातः महानिति हर्षः तादृशोपि मारणीय इति शोकः प्रभावस्यादर्शनात् ॥ ५ ॥

एवं सति भक्तेषु दया स्थापितेति यथापरीतो भगवान् शीघ्रमुपायं कृतवानित्याह—भगवानिति । षड्गुणैश्वर्यसम्पन्नः पूर्वापराधे प्रतीकारं कर्तुं सप्तमे स्पृष्टे तेनैव हननसम्भवात् प्रतीकारो न भविष्यतीति शीघ्रं च स्वयमागन्तुं तं गर्भमन्यत्र नेतुं

ब्रह्मा भवश्च तत्रेत्य मुनिभिर्नारदादिभिः ।
देवैः सानुचरैः सार्कं गीर्भि(१)र्वृषणमैडयन् ॥ २५ ॥

देवा ऊचुः ॥

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २६ ॥

भाषा टीका ।

डारूं तौ बहुतही अनुचित है । काहे सों, कि-कार्य परतंत्र हो करके भी पुरुष अपने पराक्रम को नाश नहीं करे हैं, और या के मारवेतें वो सब नष्ट होजायगो, सो भी काहे सों, कि—एक तौ स्त्री तामें अपनी बहिन तामें भी गर्भवती ऐसी को वध सों अवश्यही तत्काल में यश श्री और आयु को नाश करेहै है ॥ २१ ॥

जो पुरुष अत्यंत क्रूरपने सों वर्ते है वो जीवता ही मरौ ई सो है । देह के मरवे पै वाकों मनुष्य दुर्वाक्यों सें धिक्कार देवें हैं और ऐसे भी कहें हैं; कि-ये जब मरगो तब अवश्यही देहाभिमानीन के अंध तामस नरक को जायगो ॥ २२ ॥

ऐसें विचारकें वा समय में समर्थ होकर भी कंस, वा अत्यंत घोरभावसों अर्थात् देवकी के मारने सों निवृत्त होगये, और हरिके साथ वैर को संबंध करतो भयो हरि के जन्मकी प्रतीक्षा करतो भयो ॥ २३ ॥

वैठते, छोटते, खडेहोत भोजन करत पृथिवी में विचरत, जब देखो तब हृषीकेश को चिंतमन करतो भयो, और सब जगत् को विष्णु मय देखत भयो ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

काम्याभिर्गीर्भिर्वृषणं कामवर्षिणमैडयंस्तुष्टुवुः ॥ २५ ॥

प्रतिश्रुतं सत्यं कृतमिति हृष्टाः सन्तः सत्यत्वेनैव प्रथमं स्तुवन्ति—सत्यव्रतमिति । सत्यं व्रतं सङ्कल्पो यस्य तम् सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिन् तम् त्रिसत्यं त्रिष्वपि कालेषु सृष्टेः पूर्वं प्रलयानन्तरं च स्थितिसमये च सत्यमव्यभिचारेण वर्तमानम्, तदेवाहुः—सत्यस्य योनिमिति । सच्छब्देन पृथिव्यप्तेजांसि त्यच्छब्देन वाय्वाकाशौ एवं सच्च त्यच्च सत्यं भूतपञ्चकम् "तत्सत्यमित्याचक्षते" इति श्रुतेः । तस्य योनिं कारणम् अनेन पूर्वं वर्तमानतोक्ता तथा सत्ये तस्मिन्नेव निहितमन्तर्यामितया स्थितम् अनेन स्थितिसमयेऽपि सत्यत्वमुक्तम् तथा सत्यस्य सत्यं तस्यैव सत्यस्य सत्यं पारमार्थिकं तन्नाशेऽप्यवशिष्यमाणरूपम् अनेन प्रलयेऽप्यवधित्वेन सत्यत्वं दर्शितम् एवं त्रिसत्यत्वमुपपादितम् तथा ऋतसत्यनेत्रम् "ऋतं च सूनृता वाणी सत्यं च समदर्शनम्" तथा भगवता व्याख्यास्यमानत्वात् "सत्यं च समदर्शनम् ऋतं च सूनृता वाणी कविभिः परिकीर्तिता" इति तयोर्नेत्रं नयनसाधनं नेतारं प्रवर्तकमिति यावत्

एवं सर्वप्रकारेण सत्यात्मकं त्वां भगवन् ! वयं शरणं प्रपन्नाः प्राप्ता इति ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र बन्धनागारे आदिशब्देन सनकादिभिः तेषु श्रीनारदस्यादित्वं केवलं परमभक्त्यारामत्वेन मुख्यत्वात् श्रीहरिवंशोक्तस्य भगवदवतारार्थतदीयप्रयत्नविशेषस्य सफलतया प्रहर्षेण सर्वेषां तेषामग्रत आगमनाच्च सानुचरैः गन्धर्वादिसहितैः ऐडयन् ऐडयत द्वित्वेपि वाच्ये बहुत्वमार्षं किम्वा आगमने मुन्यादीनां पश्चाद्भावेनाप्राधान्यात् सहार्थयोगस्तृतीया च स्तुतौ तु च सर्वेषां यौगपद्येन प्राधान्यादेव कर्तृत्वमिति तौ मुन्यादिभिरनुगतौ पूर्वमागतौ च पश्चात्ते च तौ च युगपदेव तुष्टुवुरित्यर्थः । पूर्वं तेषामप्यप्रधानकर्तृत्वेनैककर्तृत्वाऽविरोधात् क्त्वायोगश्च ॥ २५ ॥

सत्यव्रतमिति । व्रतं परिश्रुतं यः कश्चित् सङ्कल्पोपि सत्यः किं पुनर्व्रतरूप इत्यतोऽत्रावतरणमिदं युक्तमेवेति भावः । अतः सत्यपरं सत्यव्रतत्वादेव सत्यप्रियो भवान् तच्च तव प्रीतिं ज्ञात्वा विधीयमानं चेत् श्रेष्ठं भवति श्रेष्ठत्वं च तस्य तत्प्राप्तिसाधनताऽऽपन्नत्वमेवेति, तथा तैरपीत्यालमेव अतः सत्यकोशनेन धर्मरूपापि त्वं प्राप्त इति भावः । स च धर्मो महासत्यस्य तव युक्त एवेत्याहुः त्रिसत्यमिति । अतः कलेः प्रथमांशमभिव्याप्य त्रियुगस्यापि तवावतारोऽयं नायुक्त इति भावः त्रिसत्यमेव सत्यस्य योनिमित्यादि विशेषणत्रयेणोपपादितं सत्यस्य सत्यमिति असंहितानिर्देशेन कालव्यवधानात् पूर्वगुरुत्वमनुभूय पादान्तवत् लकाकुणानप्लुतेन वा ततस्तथैव छन्दोनुरोधेन पठनीयं तवेदं सत्यव्रतत्वं त्रिसत्यत्वञ्च चित्रमित्याहुः ऋतेति सत्या प्रिया च या वाक् सा सूनृता सैव ऋतं समयव्यभिचारि यत् ज्ञानं तत् सत्यं तयोरपि प्रवर्तकं प्रकाशकं चेति तस्य तयोर्वाङ्मनसधर्मयोरव्यभिचारित्वं कैमुत्येनानीतं वैदिकरूपयोः परमयोस्तयोः परमाश्रयत्वेन त्रिसत्यत्वमपि अतो भवत्प्रसादादेव वयमपि भवन्तं जानीमश्चेत्यनुग्रहान्तरं च सूचितं मन्यन्ते । तत्र सृष्टेः पूर्वमित्यनेन भूतकालस्य वैशिष्ट्यमुक्तं प्रलयान्तरमित्यनेन भविष्यत्कालस्य स्थितिसमयमित्यनेन वर्तमानस्येति ज्ञेयं यद्वा व्रतं "सकृदेव प्रपन्नोऽस्मि तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतत् व्रतं मम" इति लक्षणम् अतो यादवादिस्वभक्तानामभयार्थं त्वयाऽवतीर्णं

(१) विषणमिति वीर० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

युक्तमेवेति भावः । यतः सत्यपरं सदा सर्वथा मिथ्या-रहितमित्यर्थः । अत एव त्रिसत्यं यतः सत्यस्य व्यवहारिक-सत्यस्य प्रपञ्चस्य योनिमित्यादि ननु देवकीगर्भे प्रविष्टस्य कथं सत्ययोनित्वादिकं ? तत्राहुः सत्यात्मकं सत्यः विकाररहित आत्मा श्रीमूर्तिर्यस्य तम् अन्यत्समानम् ॥ २६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धिषणां धिषणायुक्तं सर्वज्ञं तुष्टुवुः ॥ २५ ॥

सत्यव्रतं" सत्य सङ्कल्पं सत्यपरं सत्यभूतचिदचिदात्मकजगत्परं "यदन्यद्देवेभ्यः प्राणेभ्यश्च तदसत् अथ यद्देवाश्च प्राणाश्च तत्सत्यं तदे कया वाचा व्यवह्रियते सत्यम्" इति श्रुतिः। ततः परं यथार्थवेदवाक् प्रतिपाद्यं वा त्रिसत्यं त्रयः प्रकृतिपुरुषकालाः सत्या यस्य तं सत्यस्य चिदचित्प्रपञ्चस्य योनिं सत्ये निर्विकारे परमे व्योम्नि निहितं जीवेभ्योऽपि सत्यं धर्मतोऽपि निर्विकारत्वात् ऋतसत्य-नेत्रं सत्यमादित्यः "असावादित्यः सत्यम्" इति श्रुतिः । तत्साहच-र्यादृतशब्दश्चन्द्रपरः चन्द्रसूर्यनेत्रमित्यर्थः "चक्षुषी चन्द्रसूर्यौ" इति श्रुतिः । यद्वा, एवं पुण्यकर्मणः, अपुण्यकर्मणः "एवमनृतादा त्मानं जुगुप्सेत्" इति अपुण्यप्रतिसम्बन्धित्वेनानृतशब्दप्रयो-गात् ऋतं पुण्यमनुमीयमानो धर्मः तयोर्नेतारं सत्यात्मकं नित्य-विग्रहरूपं विग्रहभूषणदेवीपरिजनादिविशिष्टं त्वां सर्वज्ञं परम-कारुणिकम् अनालोचितविशेषाशेषलोकशरण्यं शरणमुपायभूतं प्रपन्नाः ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र देवकीसन्निधौ नारदादिभिः मुनिभिः सानुचरैर्देवैश्च सह ब्रह्मा चतुर्मुखो भवो रुद्रश्च समागत्य गीर्भिरौपनिषदानु-कारिणीभिर्वाग्भिर्धिषणां धिषणायुक्तं सर्वज्ञं श्रीभगवन्त-मैडयत् तुष्टुवुः यद्यन्ताभिपूरुषमेरणादीडेत्रञ् नारदाद्यभिप्रायकं बहुवचनम् वृषणमिति पाठे कामवर्षिणं श्रीभगवन्तमैडयन्निति स एवार्थः ॥ २५ ॥

स्तुतिमेवाह——सत्यव्रतमित्यादिना यावदध्यायसमाप्ति । तावत्प्रकृतिपुरुषासम्भावितैर्धर्मैः विशिष्टं स्तुवन्ति सत्यव्रतमिति सत्यव्रतं सत्यसङ्कल्पम् अनेन प्रतिज्ञातार्थो यथार्थीकृत इति सूचितम्. सत्यपरं चिदचिदात्मकं जगत् सत्यं "यदन्यद्देवेभ्यः प्राणेभ्यश्च तत्सत् अथ यद्देवाश्च प्राणाश्च तत्सत्यं तदेकया वाचा व्यवह्रियते सत्यम्" इति श्रुतेः । ततः परं विलक्षणमिदं साध्यम् अत्र सत्यव्रतत्वादीनि हेतवः कथं सत्यव्रतत्वम् ? तत्राह-त्रिसत्यं त्रयः प्रकृतिपुरुषकालाः सत्या यस्य तं प्रकृतिपुरुषकालशरीरकमित्यर्थः । प्रकृत्याद्यात्मकस्य कृत्स्नस्य जगतः स्वनियाम्यत्वेन स्वसङ्कल्पप्रतिभटाभावादव्याहतसंकल्प इत्यर्थः । यतः सत्यव्रतमत एव सत्यस्य योनिं सत्यस्य चिद-चिदात्मकप्रपञ्चस्य योनिं कारणं सत्ये निर्विकारे परे व्योम्नि निहितं कर्तारिकः अधितिष्ठन्तमित्यर्थः । त्रिसत्यं सत्यस्य योनिमिति लीलाविभूतिमत्त्वमुक्तम् निहितञ्च सत्ये इति नित्यविभूतिमत्त्वम् एतदुभयं सत्यपरत्वहेतुः तथा सत्यस्य सत्यं जीवेभ्योपि सत्यं धर्मतोपि निर्विकारत्वात् "न ह्येतस्मा-दिति नेति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यस्य योनिहितम्"इतिश्रुतेः। तदर्थस्तु, इति नेति यद्ब्रह्म प्रतिपादितं तस्मादेतस्माद्वस्तु परं नह्यस्ति ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्च परं नास्तीत्यर्थः। न त्वन्यमात्रनिषेधः, तथा हि सत्यन्यत्परमिति वैयर्थ्यापत्तेः, तदुपपादयति–अथेति । प्राणशब्द-निर्दिष्टेभ्यः चेतनेभ्योपि कदाचिदपि ज्ञानादिसङ्कोचाभावात् परमात्मा सत्यं निर्विकारमित्यर्थः । 'नित्यो नित्यानां चेतनश्चे-तनानाम्' इति श्रुत्यन्तरसंवादात् 'अन्यत्तु प्रकृतैतावत्त्वम्' इति शारीरकसूत्रभाष्यादवगन्तव्यम्, विस्तरभयान्नात्र लिख्यते ऋतसत्य-नेत्रं सत्यमादित्यः "असावादित्यस्सत्यम्" इति श्रुतेः । तत्साह-चर्यात् ऋतशब्दश्चन्द्रपरः चन्द्रादित्ययोर्नेत्रं प्रशासितारमित्यर्थः । 'य आदित्ये तिष्ठन् यश्चन्द्रमसि तिष्ठन्' इत्यादिश्रुतेः । यद्वा, तौ नेत्रे यस्य तं "चक्षुषी चन्द्रसूर्यौ" इति श्रुतेः । "एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इति पुण्यकर्मप्रतिसम्बन्धितया "एव-मनृतादात्मानं जुगुप्सेत्" इत्यपुण्यकर्मण्यनृतशब्दप्रयोगात् ऋतं पुण्यमनुष्ठेयं कर्म सत्यमुच्यमानधर्मः तयोर्नेतारं सत्यात्मकं स्वरूपेणापि निर्विकारम् अनेन प्रधानव्यावृत्तिः एवम्भूतं त्वां वयं शरणं प्रपन्नाः अध्यवस्यामः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र शङ्करादिभिः समेतो ब्रह्मा ज्ञानिसुगमगुणविशिष्टं विष्ट-रश्रवसमभिष्टौति–सत्यव्रतमिति । वयं त्वां शरणं प्रपन्ना इत्यन्वयः कीदृशं त्वां सत्यव्रतं पूर्णानन्दज्ञानलक्षणं सत्यं तदेव व्रतं व्यावृत्तं रूपं यस्य स तथा तं सद्भ्यः पृथिव्यप्तेजोभ्यः त्ययो-र्वाय्वाकाशयोः परत्वाद्विलक्षणत्वात् सत्यपरः तं त्रयाणां वेदानां सत्यत्वान्मुख्यार्थत्वात्त्रिसत्यः तं सत्यस्याबाधितप्रपञ्चस्य योनिं मूलकारणं सत्ये जगत्यन्तर्नियामकत्वेन निहितं सत्यस्य विश्वस्यो-समानन्दज्ञानदं सत्यं सत्यस्य प्रपञ्चस्य नेत्रं नेतारं सत्यात्मकं सत्यस्य प्रपञ्चस्य असृत्वाद्दानाच्च सत्यात्मकः तं कप्रत्ययः प्रशं-सायां उतशब्दः समुच्चयार्थः सच्छब्द उत्तमं ब्रूयादित्यादिनाऽनृ-रात्मको ज्ञातव्यः प्रामाणिकत्वात् ग्राह्यमेतादिति सिद्धं यद्वा अनृ-ताप्रियवर्जनं यथार्थकथनं सत्यं तदेव व्रतं नियमो यस्य स तथा तं "अजस्रावक्रतेजसः" इति हि श्रुतिः 'सत्यसंहिता वै देवा,' इति च सत्यपरं धर्मपालकं 'सत्यं धर्म उदाहृतः' इत्यभिधानं सत्यपरं सत्तिरवसाधनं तस्मादपरमन्यन्तद्रहितमित्यर्थः । "अवि-नाशी वा अरेऽयमात्मा" इति श्रुतेः । त्रिषु लोकेषु सत्यं तेषु नष्टेष्वप्य विनष्टमित्यर्थः । सत्यस्य मुख्यप्राणस्य योनिमुत्पादकम् "आत्मन एष प्राणो जायते" इति श्रुतिः सत्ये मुख्यप्राणे निहितं सन्निहितं "स प्राणमसृजत" इतिश्रुतिः सत्यमेव नेत्रं नयनं यस्य स तथा सत्यस्य प्रपञ्चस्य प्रकाशनात् निरुपमचरितत्वेन अबाधितम् "अद्वैतं परमार्थतः" इतिश्रुतिः सत्या देवास्ते नेत्रं शिष्यादिषु नेतारो यस्य स तथा तं देवाः प्राणयन्तीति श्रुतिः सत्यमबाधित-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मात्मनः कं सुखं यस्य स तथा तम् अबाधितस्वरूपसुखम् "एषोऽस्य परमानन्दः" इति श्रुतिरिति ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मेति अत्रागमने पश्चाद्भावि मुन्यादीनामप्राधान्यात् सहार्थयोगे तृतीया च स्तवे तु यौगपद्येन प्राधान्यात् सर्वेषां कर्तृत्वमेव विवक्षितमिति ऐडयन्निति बहुत्वं पूर्वं मुन्यादिभिर्यतौ तावागतौ पश्चात्तौ च ते च तुष्टुवुरित्यर्थः । पूर्वं तेषामपि प्रधानकर्तृत्वेनैककर्तृकत्वाविरोधात् क्त्वा योगश्च न यदित्यस्य व्याख्यायाम् ॥ २५ ॥

सत्यव्रतं विमर्शयति–सत्त्वेन सच्चिदानन्दघनत्वेन उपपन्नानि श्रौतसिद्धयुक्तिसिद्धानि ॥ २६—२८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पूर्वाध्याये महद्दुःखेन भगवच्चिन्तनमर्थादुक्तं कंसादीनामत्र ब्रह्मादीनां वक्तुं स्तुतिलक्षणमाख्यानमाह–ब्रह्मेति । अनेन सामान्यतः सर्वेषां निरोधोऽप्युक्तः भगवदागमनं सर्वेषामेव ज्ञातमभूदिति वक्तुं कंसादिगणनाभावाय च देवकीगृहे समागमनमुच्यते ब्रह्मा भवो महादेवश्चकारादन्येऽपि गुणाभिमानिनो देवाः अवताराश्च वामनादय इत्येके मुनयः सनकादयः नारदादयो भक्ताः देवा इन्द्रादयः अनुचरा गन्धर्वादयः सर्वैः सह गीर्भिः स्वानुकूल वाणीभिः वृषणां कामवर्षिणां वृषं धर्मं वा नयतीति ईडतुः ब्रह्मभवयोरेव मुख्यत्वात् ऐडयन्निति पाठे सलोकानामपि कर्तृत्वेन ग्रहणम् ॥ २५ ॥

कालात्मा भगवान् आस इति ज्ञापयितुं तथा कलाभिः पञ्चदशभिः स्वपक्षख्यापकैः स्तुतिः—

"पक्षपातस्तुतिर्ह्येषा देवानां हितकारिणी ।
अथवा तु षोडशी प्रोक्ता वृष्णौ वा तादृशो भवेत्"

अत्र पञ्चदशभिर्भगवत्स्तोत्रमेकेन देवकयाः सान्त्वनं कालः पञ्चदशात्मा भवति स एवावतीर्ण इति तैर्ज्ञातः स द्विविधो भवति दैत्यानां हितकार्यपि पञ्चदशः देवानामपि साधारणस्तु त्रिंशदात्मको भवतीति स्वपक्षपात्येव भगवाननेन निरूप्यते । स च पक्षपातः कालकृतश्चतुर्धा भवति लोककृतः स्मृतिकृतः स्मृतिर्हि लोकवेदात्मिका भवति वेदकृतस्तृतीयः भगवन्मार्गकृतश्चतुर्थः चतुर्विधोऽपि प्रमाणप्रमेयसाधनफलैश्चतुर्धा दैत्यकृतास्तस्य विशेषं वक्तुं तथोच्यते तत्र प्रथमं चतुर्भिः श्लोकैः प्रमाणप्रमेयसाधनफलान्युच्यन्ते । लोकसिद्धानि देवपक्षपातरूपाणि निरूप्यन्ते लोके सत्यमेव प्रमाणं परिदृश्यमानं जगदेव प्रमेयं गुणाभिमानिनो देवा एव साधनानि क्षेम एव फलं तत्रापि दैत्यपक्षव्यतिरेकश्च साधनीयः तत्र प्रथमं देवानां सत्यं दैत्यानामनृतं प्रमाणम् अतः सत्यरूपो भगवानवतीर्ण इति निरूप्यते सत्यमपि देवानां हितकारि अष्टविधं भवति अंशतः षोडशविधं वेदे सत्यं पञ्चविधं निरूपितं सत्यं परमित्यत्र प्राजापत्यो ह्यारुणीरित्यत्रापि यत् सत्यं तत्परं सर्वेभ्य उत्कृष्टं यद्वा, सर्वोत्कृष्टं तत्सत्यं एवं सत्यत्वसर्वोत्कृष्टत्वयोरैक्यं प्रतिपादनीयम् अत एव सत्येन स्वर्गलोकाच्च्युतिः कदापि न भवतीत्यामुष्मिकफलोत्कर्ष उक्तः ऐहिकेऽपि सतां सत्यमेव मूलं फलम् अतः सत्यं प्रमाणप्रमेयसाधनफलरूपमिति ये देवपक्षपातिनस्ते सत्य एव रमन्ते तथाच श्रुतिः "सत्यं परं परं सत्यं सत्येन सुवर्गाल्लोकाच्च्यवन्ते न कदाचन सतां हि सत्यं तस्मात् सत्ये रमन्ते" इति तदत्रापि निरूप्यते लोके हि व्रतमुत्कृष्टं यस्तु यत्किञ्चनव्रतमातिष्ठति स पर इत्युच्यते सत्यमपि भगवतस्तूभयं सत्यं सत्यमेव व्रतं यस्य तादृशं त्वां शरणं प्रपन्ना इति सम्बन्धः एवं व्रतसत्ययोरैक्यमुक्तम् उभयोः परत्वात् अतः परं यत्परं लोके वेदे च द्वादशविधं निरूपितं सत्यं तपो दमः शमः दानं धर्मः प्रजननमग्नयः अग्निहोत्रं यज्ञो मनःसन्यासश्चेति तत्सर्वं भगवतः सत्यमेव यथार्थमेव न तु दैत्यानामिव तद्द्वादशविधमयथार्थम् अत्र श्रुतिरनुसन्धेया पूर्वनिर्दिष्टा भगवतो व्रतानि "कौन्तेय प्रतिजानीहि, द्विःशरं नाभिसन्धत्ते, अनन्यश्चिन्त्यो, अभिचाकशीति, साधवो हृदयं महाम्" इत्यादिवाक्यैः प्रतिपादितानि लोकानुसारेण देवहितकारिणो नियामकं सत्यमेव अन्यथा ईश्वरः केन नियमितः स्यात् यथा प्रकृते स्वसत्यवाक्यादेव समागतः लोके हि त्रयो लोकाः त्रय आत्मानः भूरादयः कायादयश्च ते उभये अपि त्रिशब्देनोच्यन्ते त्रयोऽपि सत्या यस्य अनेन साधनफले एकीकृत्य निरूपिते एवं चतुर्थोऽष्टविधो निरूपितः उपपत्तिरूपः उत्पत्तिरूपमष्टविधं निरूपयति सत्यस्य योनिमित्यादि यत्पूर्वमष्टविधं सत्यमुक्तं तस्य सर्वस्यापि योनिः कारणं भगवानेव कालात्मा श्वो दास्यामीत्युक्ते यदि श्वो न भवेत् वागसत्यैव स्यात् एवं सर्वत्र न केवलं सत्यस्योत्पादकं किन्तु सत्यस्य रक्षकमपि तदाह—निहित च सत्य इति । सत्ये नितरां हितः रक्षकः स्वयं तत्र स्थित एव रक्षां करोतीति निहितपदसमुदायार्थोऽपि एवं सत्ये स्थित्वा सत्यं पालयतीत्यर्थः । अनेन सत्यस्योत्पत्तिविचारे प्रमेयं साधनं चोक्तमितरावाद्यन्तयोश्चकार इममेवार्थमाह—सत्यस्य प्रलयोऽप्यत्रैवेत्याह—सत्यस्य सत्यमिति । यथा पूर्णस्य पूर्णमादायेति सत्यं सत्य एव आधिदैविके लीयते सत्य एव प्रतिष्ठितं सत्यं फलं तथाधिदैविकं सत्यं भगवानेव अनेन यो भगवति प्रतिष्ठितः स सत्यः यः सत्ये स सत्यद्वारा भगवति प्रतिष्ठितो भविष्यतीत्युक्तं एवमुत्पत्तिस्थितिप्रलयप्रसङ्गे पञ्चविधं सत्यमुक्तम् एतावता अधोदशधा क्रियाशक्तिः सत्यत्वेन निरूपिता ज्ञानशक्तिं सत्यत्वेन निरूपयति ऋतसत्ये नेत्रे यस्येति ज्ञानशक्तिर्द्विविधा प्रमाणबलेन प्रमेयबलेन च प्रमाणं वेदः प्रमेयं भगवद्धर्माः ऋतं सूनृता वाणी वेदः सत्यप्रतिपादकः अतः सत्यनिरूपणप्रस्तावेऽपि ऋतनिरूपणम् ऋतसत्ये नेत्रे प्रापके यस्येति भगवत्प्राप्तिर्द्वेधा भवतीत्युक्तं एवं शक्तिद्वयं सत्यत्वेन निरूप्य धर्मिणं सत्यत्वेन निरूपयन्ति । सत्यात्मकमिति सत्य एवात्मा स्वरूपं यस्य यः सर्वानेव धर्मान् व्याप्य तिष्ठति स आत्मा सत्यमबाधितं भगवतः स्वरूपं स्वार्थे कः कं फलं वा सत्यमात्मा कं सुखं च यस्य सच्चिदानन्दरूपो भगवान् चिदानन्दयोरपि सत्यरूपतेति तथोक्तं तादृशो च जीवैः कर्तव्यं

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्च[1]विधः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २७ ॥
त्वमेक एवाऽस्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शरणागमनमेव प्रपन्ना इति बहुवचनं सर्वेषामेव देवानां सत्यतया संरक्षार्थम् ॥ २६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृषणां लीलामृतवर्षिणां कृष्णाम्बुदं ब्रह्मा भुवनचतुर्दशकेदारमहाकृषीवल इव भवश्योल्लासितसाधुपक्षो नृत्यविनोदीमहानीलकण्ठ इव नारदादिभिस्तदेकजीवनैर्महासोत्कण्ठचातकैरिव देवैः कंसजरासन्धादिदावानलावृतैर्महामतङ्गजैरिव सह पेडवन् पेडत स्तुष्टुवुरिति यावद्बहुवचनमार्षम् ॥ २५ ॥

"त्वमेव वास्तवं वस्तु संसारेऽस्मिन्न वास्तवे । त्वं भक्तैर्गम्यसे नान्यैरिति स्तुत्यर्थं ईरितः" स्वभक्तपालनैकव्रतत्वात्स्वसत्यत्वाच्च त्वमेव प्रपत्तव्य इत्याहुः सत्यं व्रतं यस्य तं "सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम" इति तदुक्तेः । न च स्वभक्तपालकदेवतान्तरत्वमनित्योऽनुत्कृष्टश्चेत्याह, सत्यः सर्वकालदेशवर्ती परः श्रेष्ठश्च तम् यद्वा सत्यं सत्यनामानं "सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् । सत्यात्सत्यो हि गोविन्दस्तस्मात्सत्यो हि नामतः । इत्युद्योगपर्वोक्तेः परं परमेश्वरं त्वद्बुद्धिबलाद्योऽपि सत्या एवेत्याहुः तिस्रः ज्ञानबलक्रियाशक्तयः सत्या यस्य तं "न तस्य कार्यं करणं च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः । त्वदंशा अपि सत्या इत्याहुः सत्यस्य मत्स्यकूर्माद्यवतारवृन्दस्य योनिमुद्गमस्थानमवतारिणमित्यर्थः । त्वद्धामापि नित्यमित्याहुः निहितं सन्निहितं स्थितमित्यर्थः । सत्ये मथुरावैकुण्ठादिलोके किञ्च सारस्य सार इतिवत् समस्तचिद्वस्तुसारत्वमेवेत्याहुः, सत्यस्य सत्यमिति । यद्वा सत्यस्य यत्किञ्चित् कालवर्तिनो मायिकप्रपञ्चस्य प्रकाशकत्वात् सत्यं सर्वकालवर्तिनं "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" "इतिवत् सत्यं ह्येवेदं विश्वमसृजत" इति माध्वभाष्यप्रमाणितश्रुतेः । हे ऋत नित्यसत्यस्वरूप ! सत्यं नेत्रं सर्वेन्द्रियोपलक्षकं नयनेन्द्रियं यस्य तं सत्य आत्मा श्रीविग्रहो यस्य तम् ॥ २६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र श्रीदेवकीसमीपे गीर्भिः भगवद्गुणस्वरूपादिविषयाभिर्वाणीभिः वृषणां पुरुषार्थवर्षिणाम् पेडवन् तुष्टुवुः बहुवचनं नारदादिसाहित्यात् गीर्भिरिति मूर्तिमद्भिर्वेदैश्च साकमिति वा ॥ २५ ॥

क्षीरनिधेस्तीरे भगवदवतारार्थं तदाराधनं कृतं तत्फलदानेन भगवता सर्वं भजनादिकं सत्यं कृतमिति मुदिताः सत्यत्वेन तावत्स्तुवन्ति, सत्यव्रतमिति. सत्यं व्रतमस्मदादिकर्तृकं भजनं यस्य तम् सत्यं परं भजनफलं यस्मात्तम् त्रिसत्यम् त्रीणि भक्तभजनतत्फलानि सत्यानि यस्मात्तम् देवकीजठरेऽस्मद्भजनादागतेन त्वया न केवलं भजनतत्फलयोरेव सत्यत्वं दर्शितमपि त्वस्माकं सत्यभक्तत्वं दर्शितमिति फलितोर्थः "सदेव सौम्येदमग्र आसीत्" इति श्रुतेः । सदुपादानकत्वात्सत्यस्य प्राकृतलोकस्य योनिमुपादानरूपं कारणम् अस्यापि सत्यता दर्शिता यत्र विहर्तुं प्रवृत्तोसीति भावः सत्येऽप्राकृते लोके निहितं सर्वदा स्थितम् दर्शितं तस्य लोकस्य नित्यत्वं यस्मादिहागतोसीति भावः । तस्य लोकस्य प्राकृतत्वं "दर्शयामास लोकं स्वं गोपानां तमसः परम्" इत्यत्र स्फुटीभविष्यति किं बहुना सत्यस्य सर्वस्य प्रकृतिपुरुषकालादेः तव लीलौपयिकस्य सत्यं परसत्तारूपम् ऋतसत्ययोः सूनृतावाणी समदर्शनयोः भवदीयोभयलोकसुखसाधनयोर्नेत्रं नेतारम् इत्थं सर्वथः सत्यात्मकं त्वां वयं शरणं प्रपन्नाः प्राप्ताः ॥ २६ ॥

---

भाषा टीका ।

वा समय में गर्भ स्तुति करबे को श्रीब्रह्माजी श्रीमहादेवजी नारदादि मुनीन के सहित, और अपने २ अनुचरोंको साथ लावन वारे देवतन के सहित रमणीय वाणीन सों भक्तों के अभीष्ट कामों की वर्षा करन वारे प्रभुकी स्तुति करने लगे ॥ २५ ॥

ब्रह्मादिक देवता लोग बोले, कि—सत्य है व्रत सङ्कल्प जाको, सत्य जो देव और प्राण तिनसों पर, भूत भविष्य वर्त्तमान तीन काल में वर्त्तमान, अथवा प्रकृति पुरुष काल तीन सत्य जाके, पंच भूतों के कारण और सत्य में स्थित और सत्य जीवादिकों से निर्विकार होने ते अति सत्य, सुन्दरवाणी और समदर्शन के प्रवर्त्तक, अथवा चंद्र सूर्य नेत्र वारे। ऐसे सब तरे सों सत्य स्वरूप वारे आपके हम सब शरण आये हैं ॥ २६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, भवन्तोऽपि लोकेश्वरा मत्तुल्या एव किमिति मां शरणं प्रपद्यन्ते ? नैवं वाच्यं त्वमेवैकः सर्वेश्वरः सर्वसृष्ट्यादिकारण-

(१) छिदः इति वीर० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वात् । यद्यन्तु त्वदेकशरणा एव लोकादिरूपं द्वैतं च सर्वं त्वद्व्यतिरेकेण नास्तीति वक्तुं द्वैतप्रपञ्चं वृक्षरूपकेण निरूपयन्ति, एकायन इति । असौ प्रपञ्च आदिवृक्षः वृश्च्यत इति वृक्षः समष्टि व्यष्टिदेहरूपः, कथम्भूतः ? एकायनः एका प्रकृतिरयनमाश्रयो यस्य सः द्वे सुखदुःखे फले यस्य सः त्रयो गुणा मूलानि यस्य सः चतूरसो धर्मार्थकाममोक्षाश्चत्वारो रसा यस्य सः पञ्चेन्द्रियाणि विधा ज्ञानप्रकारा यस्य सः षडूर्मयः कोशा वा आत्मानः स्वभावा यस्य सः सप्त धातवस्त्वचो यस्य पञ्च भूतानि मनोबुद्ध्यहङ्काराश्चेत्यष्टौ विटपाः शाखाविस्तारा यस्य सः नव द्वाराण्यक्षाश्छिद्राणि यस्य सः दश प्राणाः छदाः पत्राणि विद्यन्ते यस्य स दशच्छदी द्वौ जीवेश्वरौ खगौ यस्मिन् स द्विखगः ॥ २७ ॥

एवं रूपस्य संसारवृक्षस्य सतः कार्यस्य त्वमेक एव प्रसूतिः प्रकर्षेण सूतिर्जन्म यस्मात्स त्वं कारणमित्यर्थः । त्वमेव सन्निधानं सम्यङ्निधीयतेऽस्मिन्निति लयस्थानम् त्वमेवानुग्रहश्चानुगृह्णातीति पालकः ननु, ब्रह्मविष्णुरुद्रा एवम्भूताः प्रसिद्धाः कथमहमेवेति चेत्तत्राऽऽहुः--त्वन्माययेति । संवृतं पिहितज्ञानं येषां ते त्वामेव नाना पश्यन्ति ये तु विपश्चितो विद्वांसस्ते तथा न पश्यन्ति ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

द्विखग इत्यविष्ठातृत्वमात्रविवक्षया साम्येनैव निर्देशः विशेषस्तु तयोरेकः स्वाद्वत्ति पिप्पलमभित्यादौ ज्ञेयः एवमनयोर्वृक्षाङ्गत्वाभावात्प्रपञ्चातीतत्वं दर्शितं प्रवाहरूपेण प्रथमत एव वर्त्तमानत्वात् आदिश्चासौ सदा काव्यच्छिद्यमानत्वाद्वृक्षश्च तत्र सुखदुःखरूपे फले चतूरसः त्वगष्टविटप इत्यत्र च छन्दः प्लुतस्वरेण घटनीयम् अन्यत्तैः तत्र एकायन इतीत्यन्ते व्याख्यामिति शेषः । पञ्चेत्यादौ ज्ञानेति करणेल्युट् वृक्षस्यापीन्द्रियपञ्चस्य सद्भावस्तेन पश्यन्ति पादपा इत्यादौ प्रसिद्धः कोशास्त्वङ्मांसरुधिरमेदोमज्जास्थीनि लोमरक्तमांसस्नाय्वस्थिमज्जान इत्येके धातवस्तु त्वगादयः शुक्रसंहिताः सप्तत्वगिति सप्तावरणानि त्वक् यस्येति वा ॥२७॥

मुहुस्त्वं पदप्रयोगस्तत्र तत्र तद्विस्तरव्याख्यासिद्धाढ्यार्थं अन्यत्तैः यद्वा । ननु, प्रसूतिः सन्निधानं च महापुरुषः अनुग्रहो विष्णुः कथमहमेव तद्रूपः ? तत्राहुः—त्वदिति । अकारप्रश्लेषेण त्वन्मायया ये तु असंवृतचेतसस्ते नाना न पश्यन्ति किन्त्वेकमेव पश्यन्तीत्यर्थः । एवं सर्वेषां भगवद्रूपाणामभिन्नत्वं चाभिप्रेतम् एकस्यैव भगवद्विग्रहस्य स्वाभाविकाचिन्त्यशक्त्या नानारूपतासमावेशात् उपासनाभेदेनैव दर्शनभेदाच्च यथोक्तं श्रीनारदपञ्चरात्रे—

> "मणिर्यथा विभागेन नीलपीतादिभिर्युतः ।
> रूपभेदमवाप्नोति ध्यानभेदात्तथाऽच्युतः" ॥ इति ।

मणिरत्र नानाच्छविधारी वैदूर्याख्यो ज्ञेयः । यद्वा संवृतचेतसः स्वल्पबुद्धयस्त्वदीयया माययैव पूर्वोक्तं नानाविधं त्वां पश्यन्ति तथैव नानात्वमसौ प्राप्नोतीति मन्यन्त इत्यर्थः । ये विपश्चितस्ते तु तया तथा न मन्यन्ते किन्तु स्वाभाविकशक्त्यैवे-

स्यर्थः । अन्यत्समानं एवं सर्वेषामेव श्रीभगवद्रूपाणाममायिकत्वं सच्चिदानन्दघनरूपत्वञ्चोक्तम् ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एकायनः एकं प्रकृतितत्त्वम् अपरं ब्रह्मभूतत्वम् अयनमाश्रयो यस्य सः द्विफलः सुखदुःखफलः त्रिमूलः गुणत्रयमूलः चतूरसः चतुर्विधपुरुषार्थरसः पञ्चशिफः शिफाशाखान्तर्मूलं सूक्ष्मभूतपञ्चक जटावानित्यर्थः । षडात्मा षडूर्मिमान् मनःषष्ठेन्द्रियवान् सप्त त्वक् वसारुधिरमांसमेदोऽस्थिमज्जाशुक्ररूपाः सप्त धातवः येच त्वग्यस्य सः अष्टविटपः हस्तौ पादौ शिरः कर्णवक्षोजठरञ्च विटपस्थानीयाः नवाक्षः नवच्छिद्रकोटरः दशच्छदः शब्दादय एवानुकूला प्रतिकूलाश्च दश पत्रस्थानीया यस्य सः यद्वा, प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयरूपदशवायूपत्रः द्विखगः जीवपरमात्मोपेतः आदिवृक्षः प्रवाहानादिः शरीराख्यः वृक्षः ॥ २७ ॥

अस्य वृक्षस्य त्वमुत्पत्तिस्थानं निधानं निधनं प्रलयस्थानं वा अनुग्रहः इष्टप्रदानादिना स्थितिकारणं त्वामिति जीवरूपेणावस्थितमित्यभिप्रायः । नानापश्यन्तीत्युक्तेः नहि जीवविलक्षणपरस्वरूपे स्वरूपतो नानादर्शनम् ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ त्रिसत्यत्वमेवोपपादयितुं कृत्स्नं जगद्वृक्षत्वेन रूपयित्वा तस्य भगवद्दासत्वमाहुः—एकायन इति । एकं परं ब्रह्म अयनमाश्रयो यस्य द्विफलः द्वे सुखदुःखे फले यस्य त्रयः सत्त्वादयो गुणाः मूलं यस्य चत्वारो रसाः धर्मादिपुरुषार्थाः यस्यपञ्च शिफाः जटाः उत्तरमूलानि भूतसूक्ष्मात्मकानि यस्य षडात्मान ऊर्मयो मनः षष्ठानि इन्द्रियाणि वा यस्य सप्तत्वक् वसामांसरुधिरमेदोमज्जास्थिशुक्ररूपा धातव एव त्वग्यस्य अष्टौ हस्तौ पादौ शिरः कण्ठो वक्षोजठरश्चेत्येते विटपाः शाखा यस्य नवाक्षाः छिद्रकोटरा यस्य दशच्छदः दश शब्दादय एवानुकूलाः प्रतिकूलाश्च प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयरूपाः प्राणोपप्राणा वा छदाः पत्राणि यस्य द्वौ जीवपरमात्मरूपौ खगौ पक्षिणौ यस्मिन् स आदिवृक्षः प्रवाहानादिशरीराख्यवृक्षः एकस्त्वमेवायनमाश्रयो यस्य धारणं तथा भूत इति भावः ॥ २७ ॥

अथ सत्यस्यशेषित्वमुपपादयन्ति—त्वमिति । अस्य परिदृश्यमानस्य चिदचिदात्मकस्य सतो जगतः प्रसूतिः जन्म कारणं त्वमेक एव त्वमेक एवास्य सन्निधानं संनिधीयते उपसंह्रियतेऽस्मिन्निति सन्निधानप्रलयाधिकरणमित्यर्थः । त्वमेक एवास्यानुग्रहः अनुगृह्णातीष्टप्रदानेनेत्यनुग्रहः स्थितिकारणमित्यर्थः । ननु नाहं सत्पर: केचिन्मां जीवाभिन्नं पश्यन्तीत्यत्राहुः त्वन्मायया मोहितं चेतो येषामत एव न विपश्चित अज्ञाः नशब्दोयं निषेधार्थकः ततो "नलोपो नञः (६।३।७३ ) इति न लोपाभावः ये जनास्ते त्वां नाना पश्यन्ति जीवरूपेणावस्थितं पश्यन्तीत्यभिप्रायः । पश्यन्तीत्युक्तेन हि जीवविलक्षणं परस्वरूपं दृश्यते कुतो नानादर्शनं "मोहितं नाभि-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जानाति मामेभ्यः परमव्ययम्" इति श्रीमद्वचुक्तेरिति भावः । यद्वा एवं कृत्स्नजगत्कारणत्वमुपपाद्य कार्यकारणयोरनन्यद्रव्यत्वसूचनाय तद्भेदवादं निराकुर्वन्ति, त्वन्माययेति. त्वां नानात्वं विना इदं जगत् पश्यन्ति त्वत्तः पृथक् सिद्धं जगत्पश्यन्तीत्यर्थः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, प्रपञ्चोऽयं केचिज्जीवकर्तृकः केचित्प्रधानकर्तृक इत्यादि सङ्गिरन्ते तत्राह—एकायन इति । अत्र यत्रशब्दमध्याहृत्यान्वेतव्यं असावादिवृक्षो यत्र स्थितस्तं त्वां शरणं प्रपन्ना इति पूर्वेणान्वयः । चेतनस्य मनुष्यस्य पुरुषार्थत्वादादिभूतमन्तरङ्ग साधनं ज्ञानं तेनादिना वृश्च्यत इत्यादिवृक्षः प्रपञ्चः आद्येर्हरेरधीनो वृक्ष इति वा मुक्तामुक्तप्रपञ्चपक्षीकरणाय दूरस्थस्याप्यदस्शब्देन परामर्शः "ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः उतामृतत्वस्येशानः" इत्यादिश्रुतिः । एका चेतनाचेतनात्मकलक्षणा प्रकृतिरयनं आश्रयो यस्य स एकायनः "यत्किञ्चिज्जगत्यां जगत्" इति श्रुतिः । द्वे फले प्रवृत्तिनिवृत्तिलक्षणे यस्य स द्विफलः सत्त्वादिगुणा मूलानि यस्य सः त्रिमूलः चत्वारो रसा धर्मादिमोक्षान्ता यस्य स चतूरसः तत्र प्रवृत्तफलस्य धर्मादयस्त्रयो रसाः निवृत्तफलस्य मोक्ष एको रस इति विभागः । पञ्च मात्राः शब्दादयः शिफा यस्य स पञ्चशिफः 'अस्ति जायते परिणमते विवर्द्धते अपक्षीयते विनश्यतीति' षड्विकारानाप्नोतीति षडात्मा त्वक्चर्मं मांसरुधिरमेदोमज्जास्थीनि त्वग्रूपेण वर्त्तते यस्य स सप्तत्वक् देवगन्धर्वदानवराक्षसपिशाचतिर्यङ्मानुषस्थावरलक्षणा अष्टविटपा यस्य सोऽष्टविटपः नवाक्षा इन्द्रियाधिष्ठानभूता यस्य स नवाक्षः

"अक्षो रथाङ्ग आधारे व्यवहारे बिभीतके ।
शकटे पाशके कर्षे द्यूतमेदेऽक्ष इन्द्रिये" ॥ इति यादवः

दशच्छदाः पत्रस्थानीयानीन्द्रियाणि अस्य सन्तीति दशच्छदी प्रवृत्तिमार्गस्था निवृत्तिमार्गस्था इति द्विप्रकाराः खगाः पुण्या ऽपुण्यफलभागिनो जीवा यस्य स द्विखगः तदुक्तं "अजावृक्षाश्रयाः" इत्यादि हिशब्देन "कारणस्य सदा सत्त्वात्प्रवाहेण च सर्वशः" इत्यादिना जगद्वृक्षस्य सनातनत्वं विष्णुकारणत्वं दर्शयति–हरिरेक एवायनं यस्यासौ तथा. द्वे पुण्यपापे फले यस्य स तथा तिस्रो जाग्रदाद्या अवस्था यस्य तिस्रो व्याहृतयो वेदा वा मूलं तस्य स तथा चत्वारो रसः स्वर्गमोक्षनरकतमोलक्षणा यस्य स तथा. प्राणाऽपानव्यनोदानसमानाख्याः पञ्च शिफा अवान्तरमूलानि यस्य स तथा अशनापिपासाशोकमोहजरामृत्यवः षडात्मानः सहजा यस्य सप्त चर्म्माणि त्वक्स्थानीयानि यस्य अष्ट विटपाः पञ्च महाभूतानि मनोबुद्ध्यहङ्काराः विटपा यस्य नव नवाक्षा व्यवहारा अष्टादश भाषा यस्य स तथा तन्त्रन्यायेन नवशब्दस्य एकोच्चारणं पायूपस्थयोरेकत्वेन नवेन्द्रियाणि वा यस्य दशेन्द्रियविषयाः शब्दस्पर्शादयः दशच्छदा अस्य सन्तीति द्वौ खगौ जीवपरमात्मानौ यस्य आदिरहनयोग्यः हरेरधभूतः प्रपञ्चः स एव वृक्षः आदिवृक्षः अनेन जगद्वृक्षस्य हरेरधीनत्ववर्णनेन हरेरत्युत्तमत्वमुक्तं भवतीति ॥ २७ ॥

ननु, "ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता, एको रुद्रो न द्वितीयोऽवतस्थे" इत्यादिनेतरेषामपि जगदाश्रयत्वप्रतीतेर्हरेरेव तल्लक्षणं कथं स्यादिति तत्राह—त्वमेक एवेति । अस्य सतः सत्त्वजगतः प्रसूयत इति प्रसूतिः कारणं तिष्ठत्यस्मिन्निति स्थानं निधीयतेऽस्मिन्निति निधानम् अनुगृह्णाति रक्षतीत्यनुग्रहः संवृतचेतस आवृतज्ञानाः त्वां नाना पश्यन्ति ये विपश्चितः ते न पश्यन्तीत्यनेन हरेरेवोक्तलक्षणं नान्यस्येति निरणायि ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रमाणरूपतामुक्त्वा प्रमेयरूपतामाह--एकायन इति । इदं जगत् ब्रह्माण्डात्मकं वृक्षत्वेन निरूप्यते "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । भगवान् वृक्षरूपस्तस्माज्जायमानं जगदपि वृक्षात्मकमेव भवति अनेन भगवतो महत्त्वं निरूपितं यथाऽश्वत्थादिवृक्ष एकस्मिन् कोटिशः फलानि भवन्ति तत्रैकस्मिन् फले असङ्ख्यानि बीजानि भवन्ति एकस्य बीजस्यायं ब्रह्माण्डात्मको वृक्षो भवति सोपि तादृश एव एवमनादिनिधनो वृक्षो भगवानत एव कचित् ब्रह्माण्डनिर्माणं भगवत एव भवति, कचित्तत्त्वद्वारा अक्षरमत्र फलं तस्य तत्त्वांशाः बीजं ब्रह्माण्डमिति शकुनिभक्षितमेव ततो निर्गतं फलतीति तत्त्वानां चेतनरूपता निरूपिता तत्र दैत्यादिकल्पे च बहुबीजयुक्तादपि फलादेको वृक्ष उत्पद्यते अत एव बाह्यादिशास्त्रेषु परमाणुभ्यो बहुभ्य एककार्योत्पत्तिर्निरूपिता पिप्पलादयोपि काकविष्ठातो जाताः बहुभ्य एकं भवतीत्यध्यवसीयते तद्व्यावृत्त्यर्थमाह–एकमेव अयनं यस्येति अण्डं प्रकृतिरक्षरं वा काल इत्यन्ये अनेनायमाम्रादिरूपः सद्वृक्ष उक्तः अतोऽसाविति परिदृश्यमानः प्रपञ्चः द्विफलः द्वे फले यस्य सुखदुःखे अस्य फले दैत्यानां तु दुःखमेव फलं ते फले नरकस्वर्गवाच्ये नराणां कं सुखं विषयात्मकं स्वस्वरूपं गच्छतीति स्वर्गः सृष्ट्यन्तरे, सर्वं विषविषवत् अत्र तु द्विविधा अपि त्रयो गुणाः सत्त्वादयो मूलानि अधः प्ररोहा यस्य अत्र त्रिविधान्यपि कर्माणि भवन्ति । अन्यत्र तामसान्येव कचिद्वा राजसानि सात्त्विकानि तु न भवन्त्येव चत्वारः धर्मार्थकाममोक्षा रसा यस्य अन्यत्रार्थकामावेव पञ्च कर्माणि विधाः प्रकारा यस्य तानि पञ्चेन्द्रियजन्यान्यपि उत्क्षेपणापक्षेपणप्रसारणाकुञ्चनगमनात्मकानि भवन्ति अन्यत्रोत्क्षेपणाभावः अथवा अन्नमयादयः पञ्च "स वा एष पुरुषः पञ्चधा पञ्चात्मा" इति श्रुतेः । ब्रह्माण्डविग्रहोपि तथा अन्यत्र नानन्दः षडात्मानो यस्य षडिन्द्रियगणात्मत्वेन निरूपितानि अयमात्मा विज्ञानमयः ज्ञानं च षड्विधमुत्पत्त्या भिन्नं सप्तत्वगादयः त्वचो वल्कलादीनि यस्य अष्ट प्रकृतयो विटपाः शाखा यस्य—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" ॥

इति नव देहच्छिद्राणि नवाक्षा यस्य दश प्राणाः छदा यत्र द्वौ जीवान्तर्यामिणौ खगौ यत्र एतस्माद्वैलक्षण्यमन्यत्र ज्ञातव्यमहीति सर्वत्र शुकयः सन्तीति ज्ञापितम् आदिवृक्ष इति समाधिरूपः ॥ २७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं प्रमेयं निरूपितं भगवदात्मकं अत्रोपपत्तिं वदन् साधननिरूपमाह-त्वमेक एवास्येति। अस्य जगतः सद्रूपस्य अनेन मायावादादिपक्षा निराकृताः। ते हि वैनाशिकाः "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इति वाक्यात् तेषामेव मते अस्य जगतः असत्त्वम् अन्यथा असतः अज्ञानकार्यस्य कर्ता भगवान् को वा स्यात् तस्य सर्वस्यापि मद्रूपस्य त्वमेव प्रसूतिः उत्पत्तिस्थानं प्रकर्षेण सूतिर्यस्मादिति प्रसूतिपदेन पितृभावविशेषपादकत्वं सूचितं त्वमेव सम्यक् निधीयतेऽस्मिन्निति सन्निधानं लयस्थानं त्वमेवानुगृह्णातेऽनेनेति पालकः अत उत्पत्तिस्थितिप्रलयकर्ता त्वमेव अन्यथा क्रमेणैवं सूचयति, भगवद्भक्तो न नश्यतीति नन्वेते गुणाभिमानिन एव ब्रह्मादयः उत्पत्त्यादावधिकारिणो नाहमित्याशङ्क्याहुः-त्वन्माययेति ये। त्वन्मायया संवृतं सङ्कुचितं चेतो मतिर्येषान्ते त्वां नाना पश्यन्ति न तु विपश्चितः त एवं भगवन्तं परिच्छिन्नं जानन्ति ये तस्यैव मायया सङ्कुचितचित्ता भवन्ति अल्पेन हि ग्राहकेणाल्पमेव गृह्यते सर्ववस्तुग्रहणार्थं चित्तं पुष्कलमेव भगवत्स्वरूपं मायया सङ्कोचाभावे कथं परिच्छिन्नं गृह्णीयात् अत एव त्वां नाना पश्यन्ति परिच्छिन्नया दृष्ट्या गृहीतो देशः भिन्नतया स्वीक्रियत इति मायामोहः अतएव ये विपश्चितस्ते ब्रह्मादीन् परस्परविलक्षणान् पश्यन्तोऽपि तत्तत्कार्यानुरोधेन तथा तथाविधं त्वामेव मन्यन्ते न तु भिन्नं पश्यन्ति य इत्यन्ते तेषां माहात्म्यनिरूपणार्थम् निर्देशः अनेन सृष्टिस्थानां गुणैर्भिन्नानां स्वकार्यसिद्ध्यर्थं पत एव यथारुचि भगवद्रूपाः सेव्या इति साधनमुक्तम् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, यदि देहेन्द्रियग्रामादिविशिष्टोऽहमेव सत्यस्तर्हि जगदिदं किमसत्यम्? तत्र जगतः सत्यत्वेपि कालच्छेद्यत्वं तव तु तदभाव इत्याहुः-एकायन इति। असौ प्रपञ्च आदिवृक्षो भवति प्रथमत एव प्रवृत्तत्वादादिः वृश्च्यते कालेन छिद्यते इति वृक्षः समष्टिव्यष्टिदेहरूपः एका प्रकृतिरयनमाश्रयो यस्य सः द्वे सुखदुःखे फले यस्य सः त्रयो गुणा मूलानि यस्य सः चत्वारो वर्णधर्मा आश्रमधर्मा वा रसा यस्य सः पञ्च इन्द्रियाणि विधा ज्ञानप्रकारा यस्य सः षडूर्मयः आत्मानः स्वभावा यस्य सः अत्र शोकमोहजरामृत्युक्षुत्पिपासाः षडूर्मयः सप्त धातवस्त्वचो यस्य सः त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः अष्टौ पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्काराः विटपाः शाखाविस्तारा यस्य सः नव द्वाराणि अक्षाः छिद्राणि यस्य सः दश प्राणाः खगाः पत्राणि विद्यन्ते यस्य स द्वासुपर्णौ जीवेश्वरौ खगौ यस्मिन् सः ॥ २७ ॥

त्वच्छक्तिकार्यत्वात् वृक्षोऽयं त्वदीय एवेत्याहुः-त्वमेव अस्य प्रपञ्चवृक्षस्य सतः सत्यस्य एक एव प्रसूतिरुपादानं सन्निधानं लयस्थानं अनुग्रहः पालकः भावप्रधाननिर्देशेन तत्तदाश्रितत्वमभिप्रेतम्। ननु, भवदाश्रयो ब्रह्मविष्णुरुद्रा एवंभूताः प्रसिद्धाः कथमहमिति चेत्त्वाहुः त्वन्मायया संवृतचेतसः अनावृतज्ञानास्त्वां नाना न पश्यन्ति ये विपश्चितस्ते ब्रह्मादीनां त्वदवतारत्वादिति भावः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु, सत्यस्य योनिं सत्यस्य सत्यमित्येवं कणादितर्कविन्मुनिमतविरुद्धं भवतां वचनमित्यत्र जगदभिन्ननिमित्तोपादानहेतुत्वं भगवतो वदन्तस्तन्मतं निराकुर्वन्ति, एकायनमिति द्वाभ्याम्। असौ आदिवृक्षः त्वं पदार्थरूपपञ्चभिर्भोग्यः एकायनः एकत्वमेव छिद्विच्छक्तिमद्ब्रह्मायनमाश्रयो यस्य सः द्विफलः सुखदुःखफलः त्रिमूलः सत्त्वादिगुणमूलः चतूरसः पुरुषार्थचतुष्टयरसः पञ्च अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः कोशाः विधाः प्रकारा यस्य सः "स वा एष पुरुषः पञ्चधा पञ्च नाम" इति श्रुतेः। षट् जन्ममृत्युक्षुधापिपासाशोकमोहाख्या ऊर्मयः आत्मानः प्रकृतयो यस्य सः सप्तत्वक् मांसरुधिरमेदोमज्जास्थिशुक्राख्याः धातवस्त्वचो वल्कलादीनि यस्य सः

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" ॥

इत्यष्टप्रकृतयो विटपा यस्य सः नव मुखादीनि द्वाराण्यक्षाः छिद्राणि यस्य सः दश प्राणापानसमानोदानव्याननागकूर्मकृकरदेवदत्तधनञ्जयाख्याः प्राणाः छदाः पत्राणि विद्यन्ते यस्य सः आत्मात्मान्तरात्मानौ खगौ यत्र सः ॥ २७ ॥

"वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतिप्रोक्तः अनादिवृक्षः बीजतुल्यैरनन्तैर्जीवैरनन्तब्रह्माण्डरूपवृक्षोत्पादकोऽचिन्त्यानन्तस्वाभाविकगुणशक्त्याद्याश्रयः सर्वव्यापकः सर्वेश्वरो देवकीजठरगस्त्वमेकः समानाधिकशून्यः एवकारेणोपकरणनिरपेक्षः अस्य समष्टिव्यष्टिरूपस्य विश्ववृक्षस्य सतः सत्यस्य प्रसूतिः औषधादेः क्षितेः सकाशादिव प्रकर्षेण सूतिर्जन्म यस्मात्सः स्वतुपादानकमिदं जगत् न तु परमायवादिनाकारणकमित्यर्थः। सम्यक् चितादौ चक्रवर्तिकमिव सम्यग् निधीयते यस्मिन्तत्सन्निधानं त्वमेव अनुगृह्णाति अनुग्रहः पालनादिहेतुश्च त्वमेव "तदात्मानं स्वयमकुरुत" इत्यादिश्रुतयः जगतो निमित्तकारणमुपादानकारणं च त्वामेवाहुः ये तु त्वन्मायया यथा समोहितं जगदिद्युक्त्या संवृतचेतसः कुलालादिवन्निमित्तमात्रं त्वां नानापरमाण्वादिकं च कारणं पश्यन्ति न तु विपश्चितो विवेकिनः श्रुत्युक्तजगत्कारणविदो नाना पश्यन्ति ॥ २८ ॥

---

भाषा टीका।

अब देव लोग जगत् रूप वृक्ष आपके आधार है ऐसे स्तुति करें हैं-संसार [ शरीर ] रूप वृक्ष कैसो है, कि-एक ब्रह्म जाको आश्रय है, सुख दुःख दो जाके फल है, सत्व, रज, तम, तीन गुण जाकी मूल हैं, धर्म, अर्थ, काम, मोक्ष, चार जाके रस हैं, पांच इन्द्रियें ज्ञान कों उपजावन वारी जा में मोटी शाखा हैं, जरा, मरण, क्षुधा, पिपासा, शोक, मोह, येई छै स्वभाव जाके हैं, वसा, रुधिर, मांस, मेद, मज्जा, अस्थि, रेत, ये सप्त धातु त्वचा [ छीलका ] जाके हैं, पांच महाभूत मन बुद्धि अहंकार ये आठ पतरी शाखा जाकी है, सात ऊपर दो नीचे ऐसे नौ द्वारही कोटर ( छिद्र ) जामें हैं, प्राण, अपान, उदान, व्यान, समान, नाग, कूर्म

बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥ २९ ॥
त्वय्यम्बुजाक्षा[१]खिलसत्त्वधाम्नि समाधिनावेशितचेतसैके ।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ३० ॥

भाषा टीका ।

कृकल, देवदत्त, और धनंजय ये दश प्राण ही पत्र जामें हैं, जीवात्मा परमात्मा दो पक्षी जामें हैं, ऐसो ये देहात्मक संसार रूप वृक्ष है सो आपही के आधार है ॥ २७ ॥

हे भगवन् ! आप एकही या सत्य संसार के उत्पन्न करन वारे हौ, और अन्त में ये विश्व आप में ही लीन होय है। और वर्त्तमान समय में आपही या के अनुग्रह ( पालन ) करन वारे हौ । आपकी मायासों आच्छादित चित्त वारे आप कों नाना देखें हैं और जो विपश्चित् ज्ञानीजन हैं वे तौ शरीर शारीरी भाव सों सब जगत् को ब्रह्मात्मक ही देखें हैं ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, देवकीपुत्रं त्वां कथमेवं वर्णयथेति चेत्तत्राहुः--बिभर्षीति । अवबोधैकस्वरूप आत्मा त्वमेव रूपाणि मूर्तीर्बिभर्षि धत्से नतु त्वं कस्यापि पुत्र इत्यर्थः । क्षेमाय पालनाय सतां धर्मवर्तिनां सुखकराणि खलानामभद्राणि नाशकानि ॥ २९ ॥

न केवलमेतावद्भक्तानां मोक्षार्थमपीत्याहुः—त्वयीति । त्वयि समाधिना आवेशितचेतसा निमित्तेन त्वत्पादपोतेनाऽश्रितेन एके सुधियो विवेकिनः महद्भिः कृतेन सेव्यतया सम्पादितेन यद्वा, इदमपि मायामयमित्यनादरं परित्यज्येदमेव मद्रस-सौख्यदमिति मनसि कृतेन बहुमतेनेत्यर्थः । भवाब्धिं तुच्छी-कुर्वन्ति अनायासेनैव भजनानुनिष्पादिनी तेषां मुक्तिरित्यर्थः॥३०॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अवबोधरूप आत्मा सर्वमूलस्वरूपः श्रीदेवकीनन्दनाख्यस्त्वमेव स्वत्वेन सच्चिदानन्दघनत्वेन उपपन्नानि श्रौतपुराणादिवाक्य-युक्तिसिद्धानि रूपाणि पुरुषाख्यादीनि मुहुर्बिभर्षि जगत्सृष्टि प्रभृतित्वे प्रकटयसीत्यर्थः । अतो देवकीलक्षणनिजशक्तिद्वारा प्राकट्यात्तव तन्नन्दनत्वेपि तादृशत्वं च न व्याहन्यत एवेति भावः लोकक्षेमार्थत्वे हेतुः सुखत्वादि सत्पालनखलदण्डाभ्यामेव तत्सिद्धेः खलानामपि दुष्टकर्मतो निवृत्तेः सम्लोऽत्र धर्ममर्यादा-कारकाः खलास्तल्लोपका इति अभ्यसे: । यद्वा त्वमेक एवा-त्येश्वाद्यादाधेव श्रीदेवकीनन्दनरूपस्यैव तस्य तादृशत्वं निर्धार्थे-दमेवावतार्य्य तेषां नानारूपाणां प्रयोजनमाहुः—बिभर्षीति । तदेवं सर्वेषामेव त्वद्रूपाणां तादृशत्वे सिद्धे किमुत स्वयं भग-वतस्तवेति भावः ॥ २९ ॥

अस्तु तावत्त्वद्रूपाविर्भावसमर्थगतानां तेषां वार्त्ता अन्यदापि मनोमात्रेणापि———त्वद्ध्यानधारणाभ्यामनायासेनाऽखिलसंसार-दुःखनाशः परमसुखरूपत्वत्प्राप्तिश्च भवति तत्प्रसङ्गेनान्येषामपि तादृशत्वं सम्पद्यत इत्याहुः त्वयीति द्वाभ्यां परमसुखात्मके तत्पार*तीरायमाने त्वयि हे अम्बुजाक्षेति परमसौन्दर्य्यमुद्दिष्टम् प्रथमावेशे हेतुः किञ्च अखिलस्याखण्डस्य सत्त्वस्य चिच्छक्ति-वृत्तिविशेषाचिन्त्यापरिमितसर्वसद्गुणात्मकत्वदीयस्वरूपसुखाभि-व्यञ्जकशुद्धसत्त्वस्य धाम्नि आश्रये अमलेतिपाठे तस्य माया-मलराहित्येन यत् शुद्धसत्त्वसंज्ञत्वं तदेव साक्षादुक्तम् ॥ ३० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवबोधः ज्ञानस्वरूपो रूपाणि अवताररूपाणि सत्त्वोपपन्नानि शुद्धसत्त्वमयानि ॥ २९ ॥

त्वयीति महद्भिरुपदेशकृतेन समाधिना त्वय्यावेशितेन चेत-सोपलक्षिता एके अवताररूपप्रवणाः पुरुषाः त्वत्पादपोतेन भवाब्धिं गोवत्सपदं कुर्वन्ति ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वमनुग्रह इति स्थितिकारणत्वमुक्तं तच्चान्तर्यामित्वस्या-वतारमन्वयानुप्रवेशेनेत्यभिप्रायेणाहुः——बिभर्षीति । अवबोध आत्मा ज्ञानस्वरूपः प्रत्यगर्थः यद्वा, अवबोधः ज्ञानस्वरूपः आत्मा सर्वान्तरात्मा च सन्नित्यसमस्तं पदद्वयं यद्वा अवबोध इति सप्तम्यन्तमवबोधे ज्ञानस्वरूपे जीवे आत्माऽन्तरात्मतया वर्त्तमानस्त्वमस्य चराचरात्मकस्य लोकस्य क्षेमार्थं रूपाणि अवताररूपाणि बिभर्षि कथम्भूतानि सत्त्वोपपन्नानि शुद्धसत्त्व मयानि सतां साधूनां सुखावहानि खलानां दुष्कृतां मुहुर्मुहुरभद्राणि मुहुर्बिभर्षीति वान्वयः ॥ २९ ॥

एवं निखिलजगदुत्पादककारणत्वेन स्तुत्वाऽथ "कारणन्तु ध्येयम्" इति कारणत्वसमनियतत्वेन मुमुक्षूपास्यत्वमपि त्वय्येव-मेवेत्यभिप्रायेण स्तुवन्ति, ब्रह्मादयो देवाः श्रीदेवकीगर्भगतं श्रीनिवासम्-त्वयीति । हे अम्बुजाक्ष ! अमलसत्त्वधाम्नि शुद्धसत्त्वमयं धाम स्थानं शरीरं श्रीविग्रहो वा यस्येति यावत् तद्रूपस्य तस्मिन्

* द्वीपायमाने इति पाठान्तरम् ॥

(१) अमलसत्त्वधाम्नि इति वीर० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

विशुद्धसत्त्वमयदिव्यनित्यमङ्गलश्रीविग्रहविशिष्टे त्वयि एके विपश्चितः अवताररूपचरित्रगुणकथाश्रवणकीर्तनस्मरणादिपराः पुरुषाः समाधिना आवेशितं चेतो यैस्तथाभूताः चेतसैक इति सन्धिरार्षः समाधिना त्वय्याविशितचेतसोपलक्षिताः इति वा महत्कृतेन महता सदाचार्येण कर्णधारस्थानीयेन कृतेन सन्निधापितेन प्रदर्शितेन तव पादपोतेन श्रीपादपद्मरूपप्लवेन भवः संसारः स एवाब्धिः सागरस्तं गोवत्सपदं कुर्वन्ति तद्वित्व सुखेनातितरन्तीत्यर्थः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तत्तत्कालप्राप्तानार्थपरिहारलक्षणपालनं चावतारलक्षणस्वरूपग्रहणेनेत्याह–बिभर्षीति । अवबोध आत्मन् ज्ञानस्वरूपे त्वय्यभिकरणे इत्यनेन शुक्रशोणितसम्बन्धं निवारयति, क्षेमाय तत्तत्कालप्राप्तविपत्परिहारलक्षणपालनाय "क्षेमो नाप्राप्तरक्षायाम्" इति यादवः सत्त्वोपपन्नानि बलज्ञानसमाहारयुक्तानि सतामस्माकं सुखकराणि कंसादिखलानामभद्राणि तम आद्यमङ्गलकराणि ॥ २९ ॥

सतां सुखावहानीत्येतद्विवृणोति–त्वयीति । अखिलसत्त्वधाम्नि सदा सर्वगुणानामाधारभूते त्वयि समाधिना उपास्त्या आवेशितचेतसः तात्स्वाप्तचित्ताः ये पुरुषाः ते महत्कृतेन तयैवोपास्त्या यथा महद्भिस्तीर्णो भवति तथा विरचितेन प्लवेन भवाब्धिं संसारसागरं घोरं गोवत्सपदं कुर्वन्ति यथा वत्सचरणभारकृतनिम्नस्थितजलमयत्नेन तरन्ति तथेत्यन्वयः ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

बिभर्षीति लोकदृष्टिं प्रतिधत्से प्रकटयसीत्यर्थः । अतो देवकीलक्षणनिजशक्तिद्वारा तव प्राकट्येन तत्पुत्रत्वेऽपि तादृशत्वं न व्याहतमिति भावः । न केवलं पालनार्थं किन्तु भक्तजनानां स्वानुभवानन्दावेशार्थमपि रूपं बिभर्षि येनोत्तीर्णमाणमुतांश्च भवाब्धिं जानन्ति तत्संसर्गेनान्येऽपि तादृशा न भवन्तीत्याहुः ॥ २९ ॥

त्वयीति । हे अम्बुजाक्ष ! इति सौन्दर्यं व्यञ्जितम् अखिलसत्त्वधाम्नीति अप्राकृत सत्त्वहेतुक निरतिशयानां न गुणा त्वं प्राकृतसत्त्वस्य खण्डत्वेन सातिशयत्वाद् परिमितकार्यत्वाच्च अमलेति पाठे प्रक्षिप्तसत्त्वाख्यानेनापि तादृशत्वं व्यक्तं तादृशे त्वयि भवसमुद्रपारपरमसुखद्वीपायमाने महत्कृतेन परमादरविषयीकृतेन त्वत्पादेनैव पोतेन आवेशितं प्रवेशितं तच्चेतः तेन भवाब्धिं गोवत्सपदं कुर्वन्ति तद्दानन्देन तदास्तित्वमपि न जानन्तीत्यर्थः ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

फलमाह—बिभर्षीति । त्वम् अवबोधे आत्मनि रूपाणि बिभर्षि ये त्वां सेवन्ते पूर्वोक्तप्रकारेण तेषां रूपाणि ज्ञानरूपे आत्मनि बिभर्षि सायुज्यं तेभ्यः प्रयच्छसि अथवा अवबोधे आत्मनि शुद्धात्मसिद्ध्यर्थं रूपाणि अवताररूपाणि बिभर्षि येषु भक्ताश्चिद्रूपमात्मानं लभन्ते रूपाणां ग्रहणस्यान्यदपि निमित्तमित्याह, क्षेमाय लोकस्य चराचरस्येति । चराचरशब्देन ब्राह्मणाः क्षत्रियाश्चेति न्यायविदः चराः प्राणिनः अचरा भूरादयः उभयेषामपि क्षेमाय अनेनैहिकफलदानार्थमपि भगवदवतार इति गुणोक्ष्माद्दीनामपि भगवत्वादञ्जसा तमसाप्यवतारः सम्भवतीति तद्व्यावृत्त्यर्थमाह—सत्त्वोपपन्नानीति । सत्त्वेन गुणेनोपपन्नानि लोकानुसारीणि मत्स्यादीनि ब्रह्ममहादेवयोरप्याधिदैविकयोरप्यवताराः सत्त्वरूपा एव तत्र निदर्शनं सुखावहानीति । ये सर्वप्राणिषु सुखमावहन्ति पक्षपातरहितत्वात् दैत्यानामपि सुखदानि भविष्यन्तीत्याशङ्क्याह—सतामेव सुखदानि खलानां त्वभद्राणि लक्षणपूर्वकं दैत्यानां निर्देशः खलानामिति सर्वदोषनिधानं खलाः ये परेभ्यो दुःखदातारः मुहुरिति सर्वेषां खलानां वारं वारम् ॥ २९ ॥

एवं लौकिकप्रकारेण चतुर्णां निरूपणमुक्त्वा स्मृतिप्रकारेण पुनश्चतुर्णां निरूपणमाह–त्वयीति चतुर्भिः । स्मृतिषु योगो धर्मः स च योगो बहुविध इति यो देवहितो धर्मरूपस्तं निरूपयति, हे अम्बुजाक्ष ! अखिलसत्त्वधाम्नि त्वयि समाधिना आवेशितचेतसा करणेन त्वत्पादपोतेन भवाब्धिं गोवत्सपदं कुर्वन्ति योगे प्रत्यक्षो भगवान् संसारात्तारयतीति सिद्धम् अम्बुजाक्षेति दर्शनेनैव पापनाशकत्वमुक्तं यो योगस्तृतीयस्कन्धे निरूपितस्स सर्वात्मको भगवद्विषयकस्तदाह–अखिलसत्त्वधाम्नीति । अखिलानां सत्त्वानां प्राणिनां धाम स्थानं सर्वसत्त्वगुणनिधाने वा तादृशे भगवत्यासमन्तात् वेशितं चित्तं यस्मिन् तादृशेन समाधिना करणेन कृत्वा त्वत्पादः पोतो भवति समुद्रतरणसाधनं पोतः चरणस्य पृथ्वीरूपस्य आकाशरूपस्य वा असुररूपस्य वा पोतत्वं भूमिश्चेत्सर्वजनीना आकाशं च भगवद्भावकसमाधौ भगवति विद्यमाने पादस्य पोतत्वाभावात्समाधिकल्पितस्य च संसारमध्यपातात् कथं पोतत्वमित्याशङ्क्याह–महत्कृतेनेति । महद्भिः कृतेन महान्तो हि सर्वस्यापि पदार्थस्य साध्यसाधनतामवगच्छन्ति अतः समाधावेव भगवत्स्फूर्तौ स पादसंसारतारको भवतीत्यलौकिकसामर्थ्येन न युक्तिविरोधः शङ्कनीयः "अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्मृतेः यथा यागादि स्वर्गसाधनं तथेदमप्यदृष्टद्वारा भविष्यतीत्याशङ्क्य तन्निराकरणार्थमपि महत्कृतेनेत्युक्तं पादपोतो महान् कृतः हृदयं संसारपारं चाभिव्याप्य यथा तिष्ठति तावान् कृत इत्यर्थः । करणं समाधिरेव गोवत्सपदमिति तीर्णसंसारस्थापितत्वात् वत्सपदकरणम् अनेन संसारे स्थित एव संसारं तुच्छं मन्यते अनतिगम्भीरत्वाय वत्सपदं समाधौ स्थितः समाधिनिर्वाहकं संसारमतितुच्छत्वेन मन्यते सिद्धो योगः स्वयमेव सर्वमेव संसारं शोषयित्वा स्वनिर्वाहकमेव स्थापितवान् न च ते महापुरुषाः अन्येषामुद्धारमकृत्वा वत्सपदत्वमात्रे जातेऽपि स्वयमेव तरन्ति अतो वत्सपदमेव कृत्वा यावदन्येषामुद्धारो भवति तावत्तूष्णीं तिष्ठन्ति अतः उक्तं वत्सपदं कुर्वन्तीति प्रमाणसमाप्तः ॥ ३० ॥

---

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् ! भवार्णवं भीममदभ्रसौहृदाः।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ३१ ॥
येऽन्येऽरविन्दाक्ष ! विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अन्येऽपि मत्स्यकूर्मादयो बहवस्त्वदवतारा: सन्तीत्याहुः बिभर्षीति। अवबोधः चिद्घनरूपः सत्त्वोपपन्नानि शुद्धसत्त्वस्वरूपाणि खलानाम् अभद्राणि अभद्रकराणि ॥ २९ ॥

क्षेमायेत्युक्तं तदेव क्षेमं वास्तवमाभिव्यञ्जयति-त्वयीति। खिलं निकृष्टसत्त्वं गुणात्मकम् अखिलसत्त्वं विशुद्धसत्त्वं निर्गुणं धाम स्वरूपं यस्य तस्मिन् अमलसत्त्वेति च पाठः समाधिना पृथिव्यामवतीर्णस्य तव रूपगुणलीलादिध्यानातिशयेन स्वस्वावेशितं यच्चेतस्तेन हेतुना प्राप्तेन त्वत्पादपोतेन महत्कृतेन महद्भिर्भवाब्धेः पोततुल्यीकृतेनेत्यर्थः। गोवत्सपदं कुर्वन्ति भवाब्धेः रहितत्वमपि न जानन्तीत्यर्थः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अत एव स्वकृतचराचरक्षेमाय साधवसाधुजनसुखदुःखप्रदानाय च तवावतारा: भवन्तीत्याहुः-बिभर्षीति। अवबोधः ज्ञानस्वरूपः आत्मा सर्वात्मा त्वं रूपाणि पुरुषादीनि तत्तत्काले बिभर्षि धत्से अत्र तु स्वयमागतोऽसीति भावः ॥ २९ ॥

त्वदवतारा: सतां सुखावहा: यदा तदा साक्षादवतारिणस्तव पदाम्बुजं लभमानानां सुखावहमिति किं वक्तव्यमित्याहुः त्वयीति। अखिलं देशतः कालतो वस्तुतः सम्पूर्णं यदप्राकृतं सत्त्वं तद्धाम मूर्तिर्यस्य तस्मिन् त्वयि समाधिना आवेशितचेतसोपलब्धितात्त्वत्पादपोतेनाश्रितेन एके मुख्याः सत्तमा महत्कृतेन महद्भिः गुरुभिः कृतेनोपदिष्टेन सम्प्रदायप्राप्तेनेत्यर्थः। भवाब्धिं संसारजलधिं गोवत्सपदं कुर्वन्ति अनायासेनैव संसारमवलंघ्य मोक्षसुखं प्राप्नुवन्तीत्यर्थः ॥ ३० ॥

---

भाषाटीका।

ज्ञानात्मा जो आप हैं सो चर अचर लोक के कल्याण के तांई सत्व युक्त और धर्मात्मान के तांई सुख को प्राप्त करने वाले खलन के दुखदायी ऐसे रूपन को वारंवार धारण करी हो ॥ २९ ॥

हे कमलदल लोचन ! कितने एक जन अखिल सत्व गुण मंदिर ऐसे आपके विषैं समाधिसों चित्त लगाय के बड़े २ महान जनों ने से व्यवहार स्वीकृत ऐसे आपके चरण कमल रूप नौका सों संसार समुद्र कों गौ के बछरा के खुर सरीको कर देवें हैं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, तेन पोतेन पूर्वे चेत्पारं गतास्तर्हीदानीन्तनानां का गतिस्तत्राहुः-स्वयमिति। अयमर्थः हे द्युमन् स्वप्रकाश ! त्वत्पादपोतसामीप्यमात्रेण भवाम्बुधौ वत्सपदमात्रे जाते अतस्तन्निरपेक्षं स्वयमेवान्येषां भीमं दुस्तरमपि भवार्णवं समुत्तीर्य भवत्पदाम्भोरुहरूपां नावमत्रैव निधाय भक्तिमार्गसम्प्रदायं प्रवर्त्येत्यर्थः। पारं याताः तत्किम् यतोऽदभ्रसौहृदाः सर्वभूतेष्वतिप्रीतियुक्ताः अतस्तेऽन्येषां तरणाय निधायेति. कथं मत्पादपोताश्रयणमात्रेण तीर्णाः ? अत उक्तम् भवान् सदनुग्रहः सतो भक्ताननुगृह्णातीति ॥ ३१ ॥

ननु, विवेकिनां किम्मद्भजनेन मुक्ता एव हि ते तत्राऽऽहुः-येऽन्य इति। विमुक्तमानिनो विमुक्ता वयमिति मन्यमानाः त्वयि अस्तो निरस्तोऽत एवासन् यो भावस्तस्मात् भक्तेरभावादित्यर्थः न विशुद्धा बुद्धिर्येषां ते तथा। यद्वा त्वयि अस्तभाः इति च्छेदः अस्तमतयो वादेष्वेव विशुद्धबुद्धयः कृच्छ्रेण बहुजन्मतपसा परं पदं मोक्षसन्निहितं सत्कुलतपःश्रुतादि. पतन्ति विघ्नैरभिभूयन्ते न आदृतौ युष्मदङ्घ्री यैस्ते ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक् उत्तीर्त्वेति, वत्सपदमात्रताकरणेन नावस्थितितीर्षोश्च चेष्टामात्रं निरस्तं द्युमन्निति तच्च तव प्रकाशस्वभावादेवेति भावः। अत्र पूर्वत्र च पादादिशब्दस्य साधनलक्षणभक्तौ तात्पर्यम् अत उक्तमत्र निधायेति, अन्यस्तैः तत्र कथं मत्पादे-त्वादौ ज्ञानं विनेति शेषः। यद्वा, एवं तेषामेव तत्तारणकारणत्वे हेतुः सन्त एवाऽनुग्रहरूपा यस्येति ॥ ३१ ॥

ननु, विनापि मत्पदाश्रयं ज्ञानेनैव संसारोत्तरणादिकं भवेत् किन्तेन तत्राहुः-य इति। हे अरविन्दाक्ष इति दृष्टिमात्रेण सर्वतापहारित्वमुक्तं तादृशेऽपि त्वयि बहुतरपर्यवसितेन युष्मत्पदेन तदर्थाश्च गृह्यन्ते अन्यस्तैः तत्र श्रुतादीत्यादिग्रहणात् मनननिदिध्यासनादि। यद्वा, प्रथमतस्तावदस्तभावादविशुद्धबुद्धयः तथापि ज्ञानमार्गमाश्रित्य विमुक्तमानिनः देहद्वयातिरिक्तत्वेनात्मानं भावयन्तः ततः "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।"

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्युक्तेः कृच्छ्रेण परपदं जीवन्मुक्तिरूपम् आरुह्य प्राप्यापि ततोऽधः पतन्ति कदेत्यपेक्षायामाहुः—अनादृतेति । यदीति शेषः तेषां भक्तिप्रभावस्यानुवृत्तेरबुद्धिपूर्वकस्य त्वदनादरस्य निवर्त्तकाभावात् तथापि दग्धानामपि पापकर्मणां महाशक्तिश्रीभगवत्पादपद्मावज्ञया पुनर्बन्धनविरोहात् तथा च वासनाभाष्यधृतं श्रीभगवत्परिशिष्टवचनम्—

"जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः ।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः "॥ इति

अत एव तत्रैव—

"जीवन्मुक्ताः प्रपद्यन्ते क्वचित् संसारवासनाम् ।
योगिनो न विलिप्यन्ते कर्मभिर्भगवत्पराः "॥

रथयात्राप्रसङ्गे श्रीविष्णुभक्तिचन्द्रोदयधृतं पुराणान्तरवचनं च

"नानुव्रजति यो मोहाद्व्रजन्तं जगदीश्वरम् ।
ज्ञानाग्निदग्धकर्मापि स भवेद्ब्रह्मराक्षसः" ॥ इति

तदेवं भक्तिसोपानज्ञानमार्गे "तत्रापि चित्तबडिशं शनकैर्वियुङ्क्ते" इत्यादौ "तत्र षडङ्घ्रपदं चित्तमाकृष्य व्योम्नि धारयेत्" इत्यादौ च यत्तत्त्यागो धारणान्तरं सिद्धिश्च श्रूयते तत्रानादरो न मन्तव्यः किन्तु ब्रह्मकैवल्येच्छासंस्कारवशात्कैवल्यमेव यथा निद्रासंस्कारवशाद्विषयाविष्टानां विषये तद्दृश्यते तत्र श्रीभगवता वञ्चना च क्रियत इति ब्रह्मणयेव मग्नता स्यात् ।

"अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो—
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" ॥

इत्यादेः अनादरे तु नरकोऽपि श्रूयते "नातः परमभद्रवतः स्वरूपम्" इत्यादिषु "योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः" इत्याद्युक्तेः तस्मात् सर्वं समञ्जसम् ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्युमत्स्वर्गादिस्थानोपेतम् अदभ्रसौहृदाः मैत्र्यादिगुणोपेताः भवत्पदाम्भोरुहनावं निधाय भवार्णवं समुत्तीर्य स्वयं याता इत्यन्वयः । एवं भवान् सदनुग्रहः सदनुग्रहशीलः ॥ ३१ ॥

विमुक्तमानिनः विमुक्ता वयम् इति वृथाऽभिमानिनः परम्पदं वर्णाऽऽश्रमादिरूपं स्थानमारुह्य अनादृतयुष्मदङ्घ्रयः त्वच्चरणे आदररहितमनसः वर्णाश्रमधर्मं क्रियमाणा अपि तद्भावात्वयि भक्तिशून्यत्वादविशुद्धबुद्धयः अधः पतन्ति ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं ते स्वयमेव गोवत्सपदं कुर्वन्ति किन्त्वन्येषामपि तथैवास्तिवति तादृशशास्त्रप्रकाशनाद्यविच्छेदसम्प्रदायपरम्पराऽत्रैव दृढतया विस्तार्य भवत्कृपया श्रीमद्धाम प्राप्ता इत्यभिप्रायेण स्तुवन्ति—स्वयमित्यादिना । हे द्युमन् ! नित्यविभूतिमन् ! विभूतिद्वयनायक ! द्युमिदिति पाठे द्युमद्भवार्णवमिति समस्तं पदं स्वर्गादिस्थानोपेतं भवार्णवं भीमं दुस्तरमपि अदभ्रमनल्पं सौहृदं त्वद्भक्तिरूपं येषां तथाभूतास्ते स्वयं समुत्तीर्य त्वत्पादपोतेनेत्यनुषङ्गः श्रीभगवतः पादाम्बुजमेव नौस्तामत्र निधाय इयमेव संसारसागरोत्तारणसाधनभूतेति प्रदर्श्य यातास्त्वत्पदं प्राप्नुवन्ति बिभर्षि रूपाणीत्यादिनोपक्रान्तमनुगृहीतृत्वप्रतिपादनमुपसंहरन्ति एवं भवान् सदनुग्रहः साधूनामनुग्रहशीलः ॥३१॥

तन्निहितश्रीभवत्पदाम्बुरुहनावमननुवर्त्तमानानां समाधिनावेशितचेतसैक इत्युक्तविपरीतानां गतिं वदन्तः स्तुवन्ति—य इति । हे अरविन्दाक्ष ! येऽन्ये पूर्वश्लोकद्वयप्रस्तुतेभ्योऽन्ये ये जना विमुक्ता वयमिति वृथाभिमानिनः त्वय्यस्तभावाद्भक्तिशून्यत्वाद्धेतोरविशुद्धा बुद्धिर्येषां ते तथाभूताः परं पदं वर्णाश्रमादिरूपं परं, पदमुत्कृष्टं स्थानं कृच्छ्रेण प्रयासेनारुह्यापि सुकृतविशेषाद्विप्रादिरूपं श्रेष्ठं जन्म प्राप्यापीत्यर्थः । अनादृतयुष्मदङ्घ्रयः अनुपासितभगवच्चरणाः सन्तस्ततस्ततोऽधः पतन्ति पुनर्निहीनं जन्म प्राप्नुवन्तीत्यर्थः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वस्तु गोवत्सपदोपमो भवाब्धिर्महान्तः ते तमुत्तीर्य कुत्र यान्तीति तत्राह—स्वयं समुत्तीर्येति । हे द्युमन् ! तेजोमूर्ते, ये अदभ्रसौहृदाः स्वाश्रयभक्तिपूर्णाः स्वयमकृत्रिमया भवत्पदाम्भोरुहनावा दुस्तरं भवार्णवं समुत्तीर्य तीर्त्वा स्थितास्तेऽत्र योग्यादिषु शिष्यादिषु उपदेशेन निधाय तां भवत्पदाम्भोरुहनावमेव याताः नान्यथाता भवन्तीति यदतो भवान् सत एवानुगृह्णातीति सदनुग्रहो नामेत्यर्थः । ननु, सत्त्वोपपन्नानीत्यादौ सत्त्वगुणात्मकत्वप्रतीतेस्तीर्त्वा पुनस्तत्प्राप्तिः कथं मुक्तिः स्यात् ? तस्या निर्गुणरूपत्वात्; उच्यते अत्र सत्त्वशब्देन न सत्त्वगुणविवक्षा किन्तु ज्ञानादिगुणसामग्रीप्रामाणिकत्वात् तदुक्तं "सदा सर्वगुणाढ्यत्वात्" इत्यादि त्वत्पादपोतेनेत्यनेन भगवद्भक्तस्य शिवादिपादपोतपुरुषाद्वैशिष्ट्यं ज्ञाप्यते तदुक्तम् "भगवत्पादपोतोऽसौ" इत्यादि लोके नौतीर्णस्य तां विहाय देशान्तरगतिदर्शनात् कथं तामेवाश्रिता इतियुज्यत इतिचेन्न भगवत्पादनावो वैलक्षण्यादर्थवैलक्षण्यस्य सम्भवात् तदुक्तं "भगवत्पादनौका इयं अन्यनौकोपमौका वा" इत्यादि । अस्यार्थः या भगवत्पादनौका इयं अन्यनौकोपमा न भवति कुतः यथा भगवत्पादनावा भवाब्धिं तीर्त्वा श्रीहरिपादनावं तां प्राप्य सुखं तिष्ठन्तीति अस्मात्कस्मादिति लोके च कर्णधारादयः तथाब्धिं तीर्त्वा नद्यादिरेव तामाश्रित्य तिष्ठन्तो दृश्यन्ते इत्यतोऽविषमो दृष्टान्त इति सन्तोष्टव्यम् ॥ ३१ ॥

खलानामित्युक्तं विवृणोति—येऽन्ये इति । रविन्दमन्धकारः स न भवतीत्यरविन्दं प्रकाशः ज्ञानमिति यावत् "अन्धकारो रविन्दोऽस्त्री तिमिरं तम उच्यते" इत्युत्पलमाला, ये तद्भ्योऽन्ये खलाः ते ततः परमपदात् योगारूढाः पतन्तीत्यन्वयः पतने कारणमाह, अनादृतेति । "अधिरधिलधिगत्यर्थाः" इति धातोः अनुपासितभगवज्ज्ञानाः ज्ञानाभावे कारणमाह, त्वयीति । त्वय्यस्तभावात् त्वद्विषयभक्त्यभावात् अविशुद्धबुद्धयः दुष्टान्तःकरणाः दुष्टज्ञाना वा किं कृत्वा पतन्तीति तत्राह, आरुह्येति कृच्छ्रेण महताऽऽयासेन परम्पदं भगवत्प्राप्तिनिमित्तयोगमारुह्य सन्न्यासाश्रमं प्राप्य तदनुष्ठानसामर्थ्याभावात् पतन्तीत्यर्थः । योगमवाप्य तद्भ्रंशे निमित्तमाह, विमुक्तेति । विमुक्ता वयमित्यभिमानो येषामस्तीति ताच्छीलिको णिनिः । हे विमुक्त ! इति वा अभिमान एव भ्रंशे कारणमित्यर्थः ॥ ३२ ॥

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं [1] शङ्खगदायुदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥ ९ ॥
महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ १० ॥
स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा ।
कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥ ११ ॥
अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ।
स्वरोचिषा भारत ! सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आविर्भावमाह—तद्दिने निशीथे प्राच्यां दिशि अष्टम्याम् इन्दुरपुष्टोऽपि मद्वंशं मत्प्रभुर्जन्मनाऽलञ्चकारेत्यानन्दोद्रेकेण पुष्कलः पूर्णिमाया इन्दुरिव पुष्टकलः सन् यथा आविरासीत्तथैव देवक्यां विष्णुरपि सर्वांशकलापरिपूर्णः आविरासीदित्यन्वयः आविर्भावश्च कंसवञ्चनार्थमष्टमे मासि यदुक्तं हरिवंशे—

"गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ ।
देवकी च यशोदा च सुषुवाते समं तदा" ॥ इति

खमाणिक्यनाम्नि ज्योतिर्ग्रन्थे जन्मपत्रीचोक्ता "उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषो लाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनो राहवः । नैशीथस्समयोऽष्टमीबुधदिनं ब्रह्मर्क्षमत्र क्षणे श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परंब्रह्म तत्" इति ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अजने "अजायमानो बहुधा विजायते" इतिश्रुतिप्रोक्ते कर्मनिबन्धनजन्मरहिते जायमाने दुन्दुभयः स्वतो नेदुः अयमर्थः चेतनाचेतनेषु प्रहर्षः सर्वगतेन हरिणोत्पद्यमानेन कृत इति ॥ ५ ॥

तुष्टुवुः स्तुतिं कृतवन्तः ॥ ६ ॥

तमसा उद्भूते व्याप्ते निशीथे जनार्दने जायमाने पूर्वमेव सुमनांसि मुमुचुरित्यन्वयः विष्णुराविरासीदित्यनेनैव व्यापकस्यावतारो दर्शितः हैतुकानामंशेनैव विष्णोरवतारः व्यापकस्य चैकत्र प्राकट्यासम्भवादिति तर्कतिरस्कारार्थं पुनराह—सर्वगुहाशय इति । हेतुवादो नोऽस्माकं सच्छास्त्रानुवर्तिनामिष्टः तथाह भगवती श्रुतिः "नैषामतिस्तर्केणापनेया" इत्यादि श्रीपुरुषोत्तमविग्रहोऽपि नित्यसिद्ध एवेति दृष्टान्तमुखेन दर्शयति । दिशि पूर्वायां पुष्कलः पूर्णः इन्दुश्चन्द्रः पूर्वसिद्ध एव न तु दिक्सम्बन्धिद्रव्योपचितो जायते तद्वद्देवक्यां यथास्ति तथैवाविरासीत् ॥ ७।८ ॥

---

भाषा टीका ।

और वा समय पै साधुजनन के मन आपतें आप प्रसन्न है गये, अजन श्रीकृष्ण जव उत्पन्न होयवे कूं भये तव स्वर्ग में देवतान के दुन्दुभि वाज नें लगीं ॥ ५ ॥

गन्धर्व और किन्नर गान करन लगे, सिद्ध और चारण स्तुति करन लगे, और वा समय पै अप्सरान के सहित विद्याधरन की स्त्रियें नाचनें लगीं ॥ ६ ॥

हर्ष युक्त हो करकें मुनिजन और देवतन ने पुष्पन की वर्षा करी और अंधकार सों व्याप्त अर्द्धरात्र के विषै जा विरियां जनार्दन भगवान् जन्म लेवे कूं भये वाविरियां समुद्रन के किनार पै समुद्र के शब्द के पीछें मंद मंद मेघ भी गर्जत भये ॥ ७ ॥

इतनेई के बीच में सर्व के हृदय गुहा में रहवे वारे श्रीविष्णु, देवतारूपश्रीदेवकीजी में प्रकट भये, ( बोलो श्री कृष्ण चन्द्र की जय ) भगवान् देवकी जी में कैसें प्रकट भये, जैसें पूर्व दिशा के बीच में षोडश कलान सों पूर्ण चन्द्रमा प्रकट होवै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तमद्भुतं बालकं वसुदेव ऐक्षतेति द्वितीयश्लोकेनान्वयः अद्भुतत्वे हेतुगर्भाणि विशेषणान्यम्बुजेक्षणमित्यादीनि श्रीवत्सलक्ष्मं श्रीवत्सलक्ष्माणम् गलेन शोभत इति गलशोभी स कौस्तुभो यस्मिन् ॥ ९ ॥

परिष्वक्तसहस्रकुन्तलं किरीटकुण्डलादीनां त्विषा स्फुरदपरिमितकेशमित्यर्थः ॥ १० ॥

विस्मयेनोत्फुल्ले विकसिते लोचने यस्य सः गवामयुतमस्पृशन्मनसा दत्तवान् कंसनिगृहीतस्य दानासम्भवात् स्पर्शे हेतुः कृष्णावतारेति मुदा आप्लुतो व्याप्तः स्नात इति वा ॥ ११ ॥

कृतधीः शुद्धबुद्धिः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमिति युग्मकम् । बालकं मृदुस्वल्पाकारतया बालकत्वेनैव

---

(१) शङ्खगदायुदायुधम् इति वीर० विज० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रतीयमानं शङ्खादीनि उदिति झटिति कंसादिहिंसनज्ञापनाय उद्यतानि उत्कृष्टानि वा आयुधानि यस्य तम् आयुधक्रमश्चाको गौतमीये बृहद्गौतमीये चैतद्ध्यानकमन्त्रविशेषप्रसङ्गे 'दक्षस्योर्द्ध्वं स्मरेच्चक्रं गदां च तदधः करे । वामस्योर्द्ध्वं शार्ङ्गधनुः शङ्खं च तदधः स्मरेत्' इति, किन्तु शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजामिति वक्ष्यमाणानुसारेणात्र शार्ङ्गस्थाने पद्मं ज्ञेयं तत्र तु शार्ङ्गोपदेश उपासनाविशेषार्थमेव भगवति तु सर्वदा सर्वसमावेशाच्छा-सम्भावितमिति सान्द्रपयोदादपि सौभग वर्णसौन्दर्यं यस्य तं महार्हं तत्रत्यरत्नेष्वपि परमोत्कृष्टं यद्वैदूर्यं बालवायजाख्यं नील-पीतरक्तच्छविरत्नं तद्विद्यते मध्ये महिष्ठतया यस्मिन् तादृशस्य किरीटस्य त्विषोर्द्ध्वं कुण्डलयोस्त्विषा त्वधः किर्मीरितबहुलकुन्तल-मित्यर्थः । यद्वा त्विषेति टाबन्तं हलन्ताच्चेति विधानात् दिशादि-वत् ततश्च महावैदूर्यमिव किरीटकुण्डलत्विषा परिष्वक्त सहस्रकुन्तलं यस्य तं तद्भासानाच्छादितया शोभमानकुन्तलवृन्दमित्यर्थः । किरीटं त्रिकोणं पत्रावलिरूपं मुकुटं तु समस्तकचावरकमिति भेदः । उद्दामभिः तेजसात्युद्धतैः काञ्चनादिभिः कृत्वा विशेषतो रोचमानम् यद्वा तैरुपलक्षितं स्वयमेव विरोचमानं किन्तु स्वरूपलावण्याद्भिन्नथामाभिरेव तैः स्वयमसौ प्रतिभूषितो भवतीति भावः । अत एव घनतमस्यापि तादृशमैच्छत वक्ष्यते च स्वरोचिषेति अत्र गौतमीये मकरसङ्ख्योपरि तिलिष्टत्वमष्टमहिषी-समावृतत्वं ब्रह्मशिवादिभिः स्तूयमानत्वं चोक्तं तन्नोक्तं पितृभ्रा-महष्टत्वादिति ज्ञेयम् ॥ ९ ॥ १० ॥

सः परमभाग्यवान् हरिं कंसादीनां सर्वज्ञानहरं भगवन्तं सुतं पुत्रतां प्राप्तं विलोक्य साक्षाद्दृष्ट्वा विस्मयेन विकसित-लोचनः सन् तदा तत्क्षणमेव अस्पृशत् अकल्पयत दानाय सङ्कल्पमकरोत् । ननु, कंसेन पीडितस्य हृतसर्वस्वस्य बद्धस्य सङ्कल्पोऽपि कथं घटेत ? कथं वा स्नातं विनैव दानं ? तत्राह— कृष्णेति. कृष्णप्रादुर्भावस्वभावेन य उत्सव उल्लासस्तेन सम्भ्रमो मनस्त्वरा यस्य सः ततो विचारमपि न कृतवानिति भावः ततश्च मुदा व्याप्तो बभूव यथा मुग्ध इवासीदित्यर्थः । यद्वा मुदा हर्षपूर्वकं स्नातः सन् कृष्णोत्थादिलक्षणो भूत्वा ऽस्पृशदिति ॥११॥

अथानन्तरं तच्च एवेत्यर्थः । पुरुषं परमेश्वरं तथापि परं परिपूर्णतयाऽवतीर्णम् अवधार्य निश्चयेन ज्ञात्वा अत्र हेतुः कृतधीः तत्र न्यस्तचित्त इति, ततश्च नतानि कृतप्रणामानि अङ्गानि भुजादीनि यस्य सः साष्टाङ्गं प्रणम्येत्यर्थः । यद्वा अवनतशिराः सन् अवधारणे हेत्वन्तरमप्याह—स्वीयेन असाधारणेन मनो-नयनाह्लादकेन मिलितार्केन्दुकोटितुल्येनापि रोचिषा तमोव्याप्तं सूतिकागृहमेव न तु तादृशं विशेषेण रोचयन्तं प्रकाशयन्तम् एवमेकस्यैव युगपन्मिलितेजसः क्वचिद्विस्तारणेन क्वचिच्च संवरणेन पारमैश्वर्यशक्त्युतिशा कीदृशः समस्तौत्, तत्राह- गतभीः अपगतकंसभयः सन् । ननु, स्तवशब्दं कंसप्राहारिकाः श्रोष्यन्तीति भयहेतुस्तवस्येति तत्राह, प्रभावं तदैश्वर्यं वेत्तीति तथा सः किं करिष्यन्त्येते वराकाः सोऽपि वेति मात्रायित्वेति भावः । भारत ! हे भरतवंश्येति श्रीवसुदेवभाग्यतरेण प्रीत्या सम्बोधयति श्लेषेण भाः श्रीकृष्णस्य तादृशी कान्तिः हेतुगर्भत एव तस्यां रतेति ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आप्लुतः स्नातः स्पृशतः अदात् दत्तवान् ॥ ११ ॥

अस्तौत् स्तुतवान् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमद्भुतं भगवन्तं वसुदेव ऐक्षत अपश्यदित्यन्वयः । कथं-भूतम् ? अद्भुतमदृष्टरूपत्वादाश्चर्यविषयम् अम्बुजे इवेक्षणे नेत्रे यस्य चत्वारो भुजा यस्य शङ्खादीन्युद्धृतान्यायुधानि यस्य आदिशब्देन चक्रपद्मसंग्रहः श्रीवत्सं लक्ष्म चिह्नं यस्य आर्षत्वाट्टिलोपः यद्वा श्रीवत्समेव लक्ष्म तदस्याऽस्तीति श्रीवत्सलक्ष्मः अर्श आदित्वा-"न्मत्वर्थायेऽच" नस्तद्धिते" ( ६ । ४ । ११४ ) इति टिलोपः श्रियां लक्ष्म्यां वत्सला सापत्न्यदोष निवृत्त्याऽनुकूला क्षमा भूमिर्यस्येति व्याख्यानान्तरं गले कण्ठे शोभि शोभावान् कौस्तुभो यस्य पीतमम्बरं यस्य सान्द्रनीलाम्बुदस्येव सौभगं सौन्दर्यं वर्णो द्युतिर्वा वत् यस्य तथाभूतं यस्य महार्हाण्यनर्घाणि वैडूर्यादिरत्नानि यस्मिंस्तस्य किरीटस्य कुण्डलयोश्च त्विषा कान्त्या परिष्वक्ताः अनुविद्धाः सहस्रकुन्तलाः यस्य उद्दामैः श्लाघ्यैः काञ्च्यादिभिर्विरोचमानम् ॥ ९ ॥ १० ॥

स वसुदेवस्तं हरिं सुतं पुत्रभूतं विलोक्य विस्मयेनो-त्फुल्ले विकसिते लोचने यस्य कृष्णावतारोत्सवात्संभ्रमो यस्य तथाभूतः तथैवाप्लुतः स्नातः द्विजेभ्यो गवामयुतमस्पृशत् दातुं सङ्कल्पितवान् इत्यर्थः । तदा कंसनिगृहीतस्य दाना-सम्भवात् ॥ ११ ॥

अथ हे भारत ! स्वरोचिषा सूतिकागृहं विरोचयन्तम् एवं कुमारं परमपुरुषम् अवधार्य निश्चित्य नतं प्रणतमङ्गं यस्य, कृतो बद्धोऽञ्जलिर्येन कृता सामाहिता धैर्येण गता भीः कंसनाशा यस्य तथाभूतो वसुदेवः तस्य भगवतः प्रभावं जानन् अस्तौत् तुष्टाव ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शङ्खगदे आदी येषां तानि शङ्खगदादीनि तानि चोत्कृष्टानि चायुधानि यस्य स तथा तं श्रीवत्सलक्ष्मं श्रीवत्स लाञ्छनं सान्द्रपयोदसौभगं सान्द्रपयोदस्य जलपूर्णमेघस्येव सौभगं कान्तिविशेषो यस्य स तथा तम् ॥ ९ ॥

महार्हाणि अनर्घाणि वैदूर्यमयकिरीटकुण्डलानि महार्ह-वैदूर्यकिरीटकुण्डलानि तेषां त्विषा शोभया किरीटं च कुण्डले च किरीटकुण्डलानि परिष्वक्ता आलीढाः सहस्रकुन्तला यस्य स तथा ॥ १० ॥

अस्पृशत् दास्यामीति मनसा संकल्पितवान् मुदा आप्लुतः ॥११॥

कृतधीः शिक्षितबुद्धिः पण्डित इत्यर्थः । गतभीस्त्वे निमित्तं प्रभावविदिति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमद्भुतमिति परिच्छदानामपि तत्स्वरूपभूतत्वे लिङ्गमिदं

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्साहितानामेवाविर्भावात् परिष्वक्तेति किर्मीरितानेककेश-मित्यर्थः ॥ ९—१० ॥

सुतं हरिं विलोक्येति अवतारसामान्यज्ञानं तत्र कृष्णेति मुनीन्द्रवाक्यं तत्स्वभावं बत एत्रात्यन्तोल्लासजचेतस्त्वरा-बोधनाय ततो विशेषज्ञानाय ततो विशेषज्ञानमाह ॥ ११ ॥

परं पुरुषं श्रीकृष्णाख्यं स्वयं भगवन्तमेव निश्चित्य तत्र हेतुः कृतधीर्न्यस्तचित्तः तथैवाह ॥ १२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतः प्रादुर्भावमैश्वर्येण निरूप्य वीर्यनिरूपणार्थं भगवन्तमनुवर्णयति—तमद्भुतमिति द्वाभ्याम् । अत्र निर्वृताः सर्वे श्रोतारो बहिः संवेदनरहिता जाता इति ज्ञापयितुं पुनः शुकोक्तिकथनम्—

दश लीलानिरूप्योऽयं पुरुषो द्वादशात्मकः ।
द्विगुणो भगवानत्र प्रादुर्भूत इतीर्यते ॥
सर्वेषां प्राणरूपश्च ऐहिकः पारलौकिकः ।
ज्ञानक्रियोभययुतो दशलीलाप्रवर्तकः ॥
सगुणां नवधा भक्तिं निर्गुणां च प्रवर्तयन् ।
काण्डद्वयार्थं तनुते सोऽत्र द्वादशधा मतः ॥
सर्वप्रकाशकश्चैव कालात्मेन्द्रियनायकः ।
आत्मा कार्यं च भूतानि अहं तत्त्वमुभौ त्रयः ॥
अक्षरं भगवांश्चेति द्वादशात्मा हरिः स्वयम् ।

तत्र प्रथमं दशधा स्वरूपलक्षणानि वर्णयति—तमिति । तं प्रसिद्धं लोकवेदयोः "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति आश्रयभूतः सर्वमूलभूतत्वात्सृष्टिरूप इति केचित् अद्भुतमिति अलौकिकमेव ह्यद्भुतं न तु लोकवेदसिद्धम् इदं हि प्रमेयबलं प्रमाणा-द्व्यतिरिक्तं तदेव हि वीर्यं भवति यल्लौकिकवैदिकैश्चानुल्लङ्घ्यम् आश्चर्यं तदैव भवति अनेन तद्रूपं दृष्टमेवोपपद्यते न तु स्मर्तुं वर्णयितुं वा शक्यत इत्युक्तम् एवं सर्वैर्वर्णयितुं शक्यमशक्यं चोक्तं पदद्वयेन बालकमिति बाले बाले को ब्रह्मा ब्रह्माण्डविग्रहो यस्य अद्भुतश्च बालको न स्वरूपतो वक्तुं शक्यः बालानामपि कं सुखं यस्मा-दिति बालको ब्रह्मा यस्य बलसम्बन्धिनो ये बालास्तेषां कं शिरोभूतम् एवमद्भुतपराक्रमत्वेन यशो निरूपितम् अलौकिकशोभां निरूपयति अम्बुजेक्षणमिति अम्बुजतुल्ये कमलतुल्ये ईक्षणे यस्य अम्बुजा वा लक्ष्मीरीक्षणे यस्य अम्बुजौ वा सूर्याचन्द्रमसावीक्षणे यस्य अम्बुजेवा पञ्चाग्निविद्यया साधितरूपवति ईक्षणं ज्ञानं यस्य अम्बुजायाः इः कामस्तदेव क्षणं सुखं यस्य अम्बुजे ब्रह्माण्डे वा पाल-नार्थमीक्षणं यस्य अम्बुजायां लक्ष्म्यां क्षणं सुखं यस्य वा भोगायत-नत्वात् अम्बुजायां पृथिव्यामेव ईक्षणं यस्य नान्यत्र एवमनेकधा भगवतः श्रीर्निरूपयितव्या ज्ञानात्मिका मध्ये निविष्टभ्रमरमेव अम्बुजं नेत्रतुल्यं भवति निश्चलश्च भ्रमरस्तेन मकरन्दपूरस्तत्र निरू-पितः दयामृतादयोऽत्र मकरन्दाः तत्सम्बन्धे सर्वोऽपि मधुपो भव-तीति निरूपयितुं प्राकृतैरप्युपमीयते यथा वा जलेऽद्भुतरूपं भवति कमलमेवं सम्पूर्णोऽपि रूपेऽद्भुतरूपे नेत्रे भवतः अनेनाद्भुता ज्ञान-शक्तिर्निरूपिता क्रियाशक्तिं निरूपयन् चतुर्विधमपि ज्ञानमाह चतुर्भुजमिति । चत्वारो भुजाः क्रियाशक्तयो चतुर्विधकार्यार्थं हि भगवदवतारस्तान्येव कार्याणि चतुर्भुजरूपेणोच्यन्ते चत्वारो वा पुरुषार्थाः, धर्मादयः भूतानि वा दिक्पाला वा भुजा भुजेषु वा यस्य अनेन द्विगुणः पुरुष उक्तः लौकिकोऽलौकिकश्च—

"घातकौ रक्षकौ चोक्तौ विरोधेऽप्यतिसङ्कटे ।
वेदोक्तं द्विविधं ज्ञानं भक्तिर्भगवतस्तथा" ॥

शङ्खगदाद्युदायुधमिति वैराग्यं । शङ्खः तदादिश्च गदा तदादिश्च अपां तत्त्वं दरवरं भुवनात्मकं कमलं प्राणात्मको वायुर्गदा तेज-स्तत्त्वं सुदर्शनम् एवं शङ्खपद्मगदाचक्राणि क्रमेण निरूपितानि "मधुसूदनो माधवश्च त्रिवृन्नारायणस्तथा" शंखगदादीन्येव उद-तान्यायुधानि यस्य इन्द्रियदेहप्राणान्तःकरणैरेव सर्वमारणा-मित्याकाशलक्षणं शरीरम् अन्यानि महाभूतान्यायुधानि उदायुधानि वा तत्रैव सर्वान्मज्जयन्ति न तु क्वचिदपि त्यजन्ति एवं षड्गुणो भगवान् निरूपितः पुनरैश्वर्यादयो वैदिका उच्यन्ते श्रीवत्स-लक्ष्ममित्यादि श्रीवत्सो लक्ष्म यस्य श्रीवत्सा यस्य यल्लक्ष्म्या जनकं तद्भगवतश्चिह्नं व्यावर्तकं सा हि ब्रह्मानन्दो भवति तस्या मूलं ब्रह्मैव यत्सर्ववेदप्रतिपाद्यं स भगवतः असाधारणो धर्मः सर्वा-त्मकस्य भगवतो जगद्ब्रह्मकारणादि लक्षणधर्मवतो ब्रह्म हि मुख्यं लक्षणं भवति अत एव हि सर्वब्रह्माधारवतो भृगोः पदं तत्र प्रतिष्ठितं भवति स्वाश्रयत्वात् लक्ष्म्याश्च स जनको भवति "भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वम्" इति वाक्यात् ब्रह्मलक्षणत्वेनैवैश्वर्यं निरूपितं वीर्यं निरूपयन् कथंचिद्द्वैरूप्यया अवस्थितं ब्रह्म जीवाख्यं लक्षणान्तरत्वेनाह, गलशोभिकौस्तुभमिति गले शोभायुक्तः कौस्तुभो यस्य स हि सर्वजीवानां स्वरूपभूतः चैत्यस्य तत्त्वमिति वाक्यात् क्रियाशक्तिज्ञानशक्तिरूपमिति मुक्तजीवानां सरस्वतीस्थान-प्रापणार्थं कण्ठे कौस्तुभस्थापनं जीवानामुभयविधत्वज्ञापनाय मध्ये स्थापनं केचन क्रियानिष्ठाः केचन ज्ञाननिष्ठा इति अत एव सर्वाङ्ग-वर्णनायां कौस्तुभो मणिरुभयत्र निरूपितः "कण्ठं च कौस्तुभ-मणेरधिभूषणार्थं चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे" इति च अत एव शोभा द्विविधा क्रियाकृता ज्ञानकृता च जीवस्तूभय-धर्मयुत इति शोभायुक्त उक्तः एवं ब्रह्मद्वयसम्बन्धं भगवति निरूप्य जीवास्तो तथात्वहेतुभूतां मायां भगवतः प्रदेशविशेषावरिकां स्पीताम्बरं निरूपयति पीतमम्बरं यस्येति आकाशतमो रविकर-सम्बन्ध एव शोभाहेतुर्भवति पीतत्वं तामसराजससम्बन्धात् अन्यथा त्रिविधमेव रूपमिति पीतत्वं नोपपद्येत "यदग्नेरोहितं रूपं तेजस-स्तद्रूपं यत् शुक्लं तदपां यत् कृष्णं तदन्नस्य" इतिश्रुतेः । श्यामो-हिकातु माया तथैव भवति लयविक्षेपात्मिका । प्रभां वर्णयति, सान्द्रपयोदसौभगमिति. सान्द्रो हि स्निग्धो नीलः पयोदो मेघः परमानन्दस्य नीलरूपत्वे प्रकारचतुष्टयं पूर्वं निरूपितम् आकाश-कालभूमिवैकुण्ठैस्तस्य धर्माः इदानीं निरूप्यन्ते यस्तु स्वकाले सर्वानन्ददायी अन्नोत्पादकस्तापनाशकश्च स सान्द्रः, पयोदः एव-मेव भगवानपि पृथिव्याः स्वर्गस्य धर्मस्य भक्तानां च सर्वा-निष्टनिवृत्तिपूर्वकसर्वेष्टकर्ता सर्वत्र पूर्णगुणकोऽपि तदुपमोऽभूदिति प्राकृतोपमा न दोषः अन्यथा बोधनं न सङ्कल्पेन स्निग्धप्राचुर्य-घनश्याम इत्यर्थः अनेन कान्तिलक्षणा श्रीर्निरूपिता ॥ ९ ॥

एवं मूलभूते ब्रह्मणि स्वयं स्थित्वा स्वांशान् जीवान्

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतार्थान् कृत्वा भूमिष्ठान् जीवान् व्यामोहेन स्वरूपज्ञानरहितान् विधाय तेभ्यश्चतुर्विधपुरुषार्थान् प्रयच्छतीत्युक्तं तत्र ज्ञानक्रिययोः प्रकारभेदाः सन्तीति ज्ञापयितुं सर्वशास्त्ररूपाणि भगवदाभरणान्यनुवर्ण्यन्ते ज्ञानवैराग्यरूपेण । महार्हेति, महानर्घो मूल्यं यस्य तादृशवैदूर्ययुक्तं किरीटं कुण्डले च तेषां त्विषा कान्त्या परिष्वक्तान्यालिङ्गितानि सहस्रं कुन्तलानि यस्य भगवन्मुखनिरीक्षकाः शास्त्राभिज्ञा जीवाः भगवन्मुखामोदपानरताः षट्पदा इव भक्तौ परितश्चकासन्ते तेषां वेदः साङ्ख्ययोगौ च शोभाजनका भवन्ति वेदसाङ्ख्ययोगानां प्राप्तिश्च सर्वलोकप्रसिद्धात् गुरोरेव भवतीति महार्हवैदूर्यरूपेण निरूपितः वेदे काण्डद्वितयं योगोपि साधनफलरूपो द्विविधः साङ्ख्यमपि न्यासंज्ञानभेदेन द्विविधम् एवं षट् शास्त्राणि निरूपितानि भवन्ति तान्येव पदानि त्रयाणामपि भेदाः सहस्रं सन्तीति ज्ञापयितुं कुन्तलानां सङ्ख्या निरूपिता लौकिकज्ञानविस्मारणार्थं परिष्वङ्गो निरूपितः एवं लोके ज्ञानं निरूप्य क्रियां निरूपयति—उद्दामेति । कर्माण्यनन्तान्येव तथापि त्रिविधानि निरूप्यन्ते काञ्च्यङ्गदकङ्कणरूपाणि तमःसत्त्वरजोरूपाणि एतानि त्रीणि वेदादिभूतानि स्वसजातीयानि बहून्येव जनयिष्यन्ति लोके काञ्ची सदामा भवति इयं तूद्दामा दामरहिता हिंसाप्रचुराऽपि वैदिकी कृतिर्न लोकानुसारिणी भूमौ मायाव्याप्तानामेव तत्राधिकार इति पीताम्बरोपरि काञ्ची तिष्ठति लौकिकानि तानि व्यावर्तयितुं लौकिकसूत्राभाव उक्तः उत्कृष्टानि वा लौकिकानि तत्र साधनानि निरूपितानि अङ्गदानि बाहुमध्ये तिष्ठन्ति अङ्गं द्यति खण्डयतीति राजसं तत् भवति. सात्त्विकराजसयोर्विभागहेतुत्वात् आदिशब्देन मुद्रिकाः अङ्गदस्थानीयान्यन्यान्याभरणानि क्षुद्रघण्टिका नूपुरादीनि च निरूप्यन्ते तैः सर्वैरेव धर्ममार्गवर्तिभिर्भगवत्सम्बन्धिभिर्विरोचमानो भगवान् भवति "वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते तथा मध्ये हरिः सर्वत्र गीयते" इति. नन्वेतादृशो भगवानिति किमर्थमुच्यते तत्राह, वसुदेव ऐक्षतेति । तत्पूर्वोक्तानां धर्माणां लौकिकत्वमलौकिकत्वं च सम्भवति यदि वसुदेवो न ज्ञास्यति तदा लौकिकान्येवैतानीति मंस्यते अथ ज्ञास्यति तदोक्तं व्याख्यानमुभयार्थं तादृशधर्मयुक्तं दृष्टवानिति शुक आह——एतज्ज्ञानं स्तोत्रे स्पष्टं भविष्यति ॥ १० ॥

एवं भगवन्तं दृष्ट्वा शुद्धसत्त्वात्मको वसुदेवः क्रियां ज्ञानं च प्रकटीकृतवानित्याह—द्वाभ्याम् । दानं क्रिया स्वरूपज्ञानबोधकं स्तोत्रं कर्मण्यधिकारचतुष्टयं श्रद्धा चाङ्गम् अर्थी विद्वान् समर्थः शास्त्रेणापर्युदस्तश्च इदं च कर्म नैमित्तिकं तस्यापेक्षाज्ञापको हर्षः स चासाधारण एव भगवन्निष्ठो भवति तदाह, "स विस्मयोत्फुल्लविलोचन" इति एतत्सर्वपरिज्ञाने स इति पूर्वोक्तो वसुदेवो हेतुः अलभ्यलाभाद्विस्मयः स विस्मयोऽन्तः प्रविष्टः उत्फुल्ले विलोचने करोति पूर्वं हरिः सुतो भविष्यतीति श्रुतम् इदानीं हरिं सुतं विलोकयतानेन विलोकिता निमित्तज्ञानेनैव नैमित्तिकमपि ज्ञानं करणात्स्पष्टं भविष्यति आनकदुन्दुभिरिति सामर्थ्यम् असामर्थ्ये आनका दुन्दुभयश्च कथं नेदुः ? कृष्णावतारे च उत्सवो मनसो विलासस्तस्मिन् जाते सम्यक् प्रमो यस्य तादृशश्च भगवच्छास्त्रे स्मृतिशास्त्रे चोत्सवाविष्टस्तादृशे कर्मणि शास्त्रेणापर्युदस्तः पुत्रस्य सर्वलक्षणसंपन्नावेव तथाऽधिकार इति कृष्णपदम् मुदेति हर्षः स्नेहात्मक इति भक्तिसूचकः गवाम् अयुतं द्विजेभ्यः अस्पृशत् ब्राह्मणानुद्दिश्य दशसहस्रं गावो दत्ताः । ननु, स्नात्वा गावो देयाः कथमेवमेव सङ्कल्पं कृतवानित्याशङ्क्याह—मुदाऽऽप्लुत इति । हर्षजलेनैव स्नातवानित्यर्थः ॥ ११ ॥

ननु, पुत्रः संस्कर्तव्यो जातकाख्येन कर्मणा तत्कथं न कृतवानित्याशङ्क्य प्राकृत एव तस्य संस्कार इति । नास्मिंस्तदपेक्षेति तत् ज्ञानं स्वस्य वर्तत इति ज्ञापयन् भगवन्तं स्तौतीत्याह—अथैनमिति । अथ कर्मसमाप्तिं विधाय तदनन्तरमेनं पुत्रत्वेनाविर्भूतं भगवन्तमस्तौत् स्तोत्रमुत्कृष्टं कर्तव्यमिति कथं पुत्रे स्तोत्रमित्याशङ्क्याह—अवधार्य पुरुषं परमिति । पूर्वोक्तवर्णनप्रकारेण परः पुरुषः पुरुषोत्तम एवायमित्यवधार्य अभिनन्दनात्मकमपि स्तोत्रं भवतीति तद्व्युदासार्थं नताङ्गः नतमङ्गं यस्य नमस्कारं कृत्वेत्यर्थः । यो भगवान् जातो यादृशस्तं तथैव ज्ञात्वा स्तोत्रमुचितमन्यथा सन्तमन्यथा चेत्प्रतिपद्यते तदा अयुक्तमिति तद्व्युदासार्थमाह—कृतधीरिति । यद्यपि पूर्वं पुरुषोत्तम आविर्भविष्यतीति ज्ञातं न स्थितं तथापि प्रदर्शितैर्भगवता अवयवादिभिः कृता धीर्यस्य समानयोरपि तथात्वं सम्भवतीति तद्व्युदासार्थं कृताञ्जलिरिति. अञ्जलिर्महत एव क्रियते स्तोत्रं कायवाङ्मनोभिः कर्तव्यं तत्र कृताञ्जलिरिति स्तोत्रे कायस्थितिः कृतधीरिति मनसः, स्तोत्रं वाचनिकम् । ननु, स्तोत्रमुच्चैः कर्तव्यं तथा सति प्राहरिकाणां जागरणं भवेदित्याशङ्क्य कंसभयं तस्य नास्तीत्याह—गतभीरिति । तत्र हेतुः प्रभावविदिति । भगवतः कालादिनियमनं जानातीति प्रभाववित् । ननु, विद्यमानमपि सामर्थ्यं न प्रकटयेच्चेत् प्रमाणसिद्धं वा सालग्रामादिवत् सामर्थ्यं स्यात् तदा विपरीतं भवेदित्याशङ्क्य प्रकटतेजःपुञ्जेन प्रकटमेव सामर्थ्यं तस्येत्याह, स्वरोचिषा स्वस्वरूपकान्त्या सूतिकागृहं विरोचयन्तं कोटिमणितेजसा यथा गृहं प्रकाशितं भवति तथा प्रकाशयन्तं भारत ! इति सम्बोधनं विश्वासार्थम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तमद्भुतं बालकं वसुदेव ऐक्षतेति द्वितीयेनान्वयः । अद्भुतत्वहेतुगर्भाणि विशेषणानि अम्बुजेक्षणमित्यादीनि वैदूर्यं नीलपीतरक्तच्छविरत्नं तद्युक्तं किरीटं त्रिकोणपत्रावलिरूपम् ॥ ९ ॥ १० ॥

स विस्मयेत्यहो महा मुक्तमुनीन्द्राणामपि दुर्लभदर्शनः परमेश्वरो मम पुनरविद्या बद्धजीवस्याविद्याबद्धजीवेन कंसेनापि बहिरपि बद्धस्य गृहेऽवतीर्य दृश्यो बभूवेत्येको विस्मयः सर्वव्यापकं परं ब्रह्मापि मानुषगर्भादजनिष्टेति द्वितीयः विविधास्त्रवस्त्रकटककुण्डलकिरीटाद्यलङ्कारविशिष्ट एव बालको गर्भान्निष्क्रान्त इति तृतीयः साक्षान्महाभयस्यापि भीषण आदिपुरुषो भगवानपि कंसभयभीतं मां स्वपितृत्वेनाङ्गीचक्रे इति चतुर्थः इत्येवमनन्ता एव विस्मयास्तस्याभूवन्निति भावः । हरिं सुतं विलोक्येति तस्मिन् स्वेष्टदेवत्वपुत्रत्वयोर्भावना यौगपद्येनैव तस्याभूदिति भावः । कृष्णा-

वसुदेव उवाच ॥

विदितोऽसि भवान् साक्षात्पुरुषः प्रकृतेः परः ।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १३ ॥
स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ १४ ॥
(१)यथेमेऽविकृता भावास्तथा ते विकृतैः सह ।
नानावीर्याः पृथग्भूता विराजं (२)जनयन्ति हि ॥ १५ ॥
सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतारेत्यहो सामान्यबालकस्यापि जन्मनि पिता दानध्यानाद्युत्सवं करोति मम तु कृष्ण एव पुत्रत्वेनावतीर्णः सम्प्रत्यहं कमुत्सवं करोमीति प्राप्तसम्भ्रमः मुदा आप्लुतः आनन्दसमुद्रेण निमज्जितः सन्नस्पृशत मनसा ददौ "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यभिधानात् स्पृशि दानार्थकोऽपि ज्ञेयः ॥ ११ ॥

कृतधीस्तस्मिन्नेव यौगपद्येन कृतैश्वर्यज्ञानसत्वबुद्धिः गतभीः प्रभावविदिति हन्तहन्ताऽस्मिन्नपत्ये कंसः सहसाऽऽगत्याक्रं प्रयोक्ष्यते इति पुत्रबुद्ध्या भयमुद्बभूव तदैश्वर्यबुद्ध्या प्रभावज्ञानेन गतमित्यर्थः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ तं परममङ्गलं स्वासाधारणाभरणवस्त्रायुधयुतमद्भुतं सर्वाश्चर्यमयं वसुदेव ऐक्षतेति द्वयोरन्वयः गलेन शोभते गलशोभि कौस्तुभो यस्मिन् ॥ ९ ॥

महानपरिमितः अर्हो मूल्यं येषान्तेषाम्महार्हाणां किरीटादीनां त्विषा कान्त्या परिष्वक्ता आलिङ्गिताः सहस्रपरिमिताः कुन्तलाः "हिरण्यकेशः" इति भगवच्छ्रुत्या प्रदर्शिताः केशाः यस्य तम् ॥ १० ॥

स श्रीवसुदेवः हरिं सुतं विलोक्य मुदाऽऽप्लुतः गोदानं कर्तुं स्नातः यद्वा मुदा आप्लुतः हर्षजलेनैव स्नातवान् कृष्णावतारे य उत्सवः कुतूहलस्तेन सम्भ्रमः किं मया पुण्यं कृतं कोऽस्मि यः सर्वेश्वरेणोत्तमादृत इत्येवं रूपो यस्य गवामयुतं द्विजेभ्य अस्पृशत् मनसा द्विजानुद्दिश्य दत्तवानित्यर्थः ॥ ११ ॥

अथानन्तरमेनं शास्त्रार्थभूतं भगवन्तम् आनकदुन्दुभिः आस्तौत्

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा" ॥

इत्यन्यथा स्तुतौ दोषपरिहाराय कृतधीः कृता भगवत्स्वरूपगुणादियाथार्थ्योऽर्पिता धीर्येन सः परं पुरुषमवधार्य अत एव नताङ्गः कृतप्रणामः ॥ १२ ॥

---

भाषा टीका ।

कमल सदृश प्रसन्न नेत्र जाके चार भुजा जाके शंख गदा चक्र ये आयुध ऊंचे उठाय राखे जाने, श्रीवत्स के चिन्ह वारो, श्रीकण्ठ में शोभायमान है कौस्तुभ मणि जाके, पीताम्बर को पहरे भयो, सघन मेघकी छटा वारो, बहु मूल्य वैडूर्य मणि आदि से जटित किरीट और कुण्डलन की कान्ति सो स्फुरायमान अपरिमित केश जाके, अतिश्लाघा करवे योग्य कोंधनी बाजूबन्द और कुण्डला इत्यादि भूषणन सों दीप्ति पायवे वारो, ऐसे वस्त्र भूषण आयुधन सहित प्रकट होयवे वारे वा अद्भुत बालक कों वसुदेवजी देखत भये ॥ ९ ॥ १० ॥

उन वसुदेव जीने जब वा अपने बालक को देख्यो तब देखकें वा समय में विस्मयसों वसुदेवजीके लोचन प्रफुल्लित होगये और कृष्णावतार रूप उत्सव के संभ्रम वारे वसुदेव जी हर्षसों ब्राह्मणो के ताईं दश हजार गाये मनसूं सङ्कल्प करत भये ॥ ११ ॥

तदनन्तर वा अपने बालक कों "ये परमपुरुष परमात्मा हैं" ऐसो निश्चयकरकें अपने शरीर को झुकाय कें शुद्ध बुद्धिवारे होयकें हाथ जोड के स्तुति करत भये, काहे सो, कि—वसुदेवजी भगवान् के प्रभाव को जानते रहे। हे राजन्! वा समय की शोभा कूं मैं कहा कहूं वो बालक अपनी कान्ति सों वा सोवर के घर को प्रकाशित कर रह्यो रह्यो ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वसुदेवः प्रथमं पुत्रबुद्ध्या पश्यंस्तं परिज्ञायाह—विदितोऽसीति । कथं विदितोऽस्मि ? भवान् प्रकृतेः परः पुरुष इति । ननु,

(१) य एतेऽविकृताभावास्तस्तथा ते विकृतैस्सह । (२) जायन्तं तव इति च विज० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किमाश्चर्यं पुरुषस्य प्रकृतेरन्यत्वादेवेत्यत आह—साक्षादिति । प्रत्यक्षत इत्यर्थः । नन्वक्षिसन्निकृष्टं प्रत्यक्षत उपलभ्यते किञ्चिन्न-मित्यत आह—केवलेति । केवलश्चासावनुभवश्चानन्दश्च तावेव स्वरूपं यस्य सः किञ्च सर्वबुद्धिदृक् न ह्येवम्भूतो दृश्यो भवती-त्यर्थः ॥ १३ ॥

ननु, देवकीजठरं प्रविष्टस्य किमियम् प्रतिस्तुतिः क्रियतेऽत आह—स एवेति । स एव उक्तस्वरूप एव त्वं न देवकी-जठरे प्रविष्ट इत्यर्थः । ननु, विश्वं सृष्ट्वा तदनुप्रविष्टस्य किमे-तद् बहु अत आह—स्वप्रकृत्येति । स्वमायया सृष्ट्वा तदनु त्वमप्रविष्ट एवेति । ननु, तर्हि कथं श्रुत्योच्यते "तत्सृष्ट्वा तदेवानुप्राविशत्" इति अत आह—प्रविष्ट इवेति । भाव्यसे निरूप्यसे प्रत्यक्षतो वा सद्रूपेण वा प्रविष्ट इव लक्ष्यसे ॥ १४ ॥

अत्र दृष्टान्तः यथेति इमेऽविकृता भावा महदादयो यथा तथेति दृष्टान्तं विवृणोति—ते विकृतैरिति । ते विकृतैः षोडश-विकारैः सह सन्निपत्य विराजं ब्रह्माण्डं जनयन्ति सन्निपतने हेतुः यतः पृथग्भूताः सन्तो नानावीर्या विशिष्टकार्यसमर्था न भवन्ति अतः सन्निपत्येति एवं समुत्पाद्यानुगताः प्रविष्टा इव दृश्यन्ते न पुनः प्रविष्टाः कुतः उत्पत्तेः प्रागेव कारणतया विद्यमानत्वात् तेषामिह सृष्टे कार्ये पश्चात्सम्भवः प्रवेश इति ॥ १५ ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विदित इति तैर्व्याख्यातं तत्र कथमिति किं प्रकारक इत्यर्थः भवानित्यादौ हेतुरूपे वाक्यान्तरे तत्तल्लक्षणदृष्ट्या परमपुरुषत्वेन सिद्धो भवान् प्रकृतेः परः इति व्याख्येयं मन्यित्वादौ ननु तर्हि आश्चर्यवत्कथं विदितोसीति वदसि ? पुरुषस्य प्रकृतेरन्यत्वं प्रसिद्धमेवेत्यत आह—साक्षादिति । यद्वा परमदुर्लभस्यापि साक्षात् प्राप्त्याऽतिप्रहृष्टस्तमाह—विदितोसीति । मया ऽद्य त्वमुपल-ब्धोऽसीत्यर्थः । वेदनप्रकारमेवाह—यः प्रकृतेः परः प्रकृतिद्रष्टा पुरुषः स भवान् यथा यः केवलानुभवानन्दस्वरूपः परब्रह्माख्यो निर्विशेष आत्मा सोऽपि भवान् यश्च सर्वबुद्धिदृक् सर्वान्तर्यामी परमात्मा सोपि भवानिति तत्तद्रूपकत्वात् स्वयं भगवत्त्वेन विदितोसीत्यर्थः । तथापि साक्षाद्विदितोसि चक्षुषा दृष्टोऽसीत्यहो मम भाग्यमहिमेति भावः ॥ १३ ॥

तत्र दैन्येन तस्मिन्निजपुत्रत्वापलपनाय "सा देवकी सर्व-जगन्निवासनिवासभूता" इति दिष्ट्याम्बते कुक्षिगतः परः पुमा-नित्यादि लब्धमपि तत्प्रवेशं वारयति—स एवेति चतुर्भिः । तस्मात् सर्वव्यापकस्य तवात्र सम्प्रति प्रकाश एव न तु प्रवेश इति तात्पर्यम् वास्तवार्थस्त्वेवं न केवलं साक्षात्प्राप्तोसि अपितु पुत्रतयाऽपीत्याशयेनाह—स इति । स एव पूर्वोक्तमदनुभवरीत्या अनेनैव रूपेण स्वयं भगवद्रूप एव त्वं ततो हेतोरप्रविष्टः असम्भा-वितप्रवेश इत्यर्थः । "परो जरत्सोढः" (१।४।२६) इति वसिष्ठार्थवैशिष्ट्यं तथाभूतोपि स्वप्रकृत्या प्रेमवशात्वेन परमाचिन्त्यशक्तित्वेन च निजस्वभावेन इदं देवक्युदरं हि निश्चितं प्रविष्टो भाव्यसे क्रियसे तत्र दृष्टान्तः अग्रे सृष्ट्यादौ कारणार्णवशायिरूपेण त्रिगुणा-त्मकं ब्रह्माण्डं सृष्ट्वा गर्भोदकशायिरूपेणानु पश्चात्सदिवेति अत्र सामान्यतोऽयं भावः वक्ष्यमाणानुसारेणायोग्येपि तत्र यदि प्रविष्ट-स्तदात्र योग्ये किमुतेति विशेषतः स्वयं ब्रह्मादिभक्त्या तत् प्रवेशे सत्यपि ब्रह्माण्डस्य जडत्वेन त्वत्प्रेमाभावात् प्राकृतगुण-मयत्वेन त्वत्स्पर्शित्वाभावाच्च तत्रोदासीन एवासि अतः प्रविष्टो-प्यप्रविष्ट एव अस्यास्तु तद्विपरीतत्वादस्त्येव तत्तद्योग्यतेति तदु-दरं च ममेति स्वविग्रहप्रविष्टत्वेन पुत्रतयापि त्वं प्राप्तोसीति अत एव । यद्वा तदनु हि निश्चितमप्रविष्टस्त्वम् इदं तु प्रविष्ट इव भाव्यसे यथा अन्यत्रान्यः प्रविष्टो भवति तथैव क्रियसे इति । एत-दुक्तं भवति "न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम्" इत्यादि-रीत्या परमकारणतत्त्वैकरूपमपि विभुमपि निजविग्रहं निज-जनप्रेम्णा स्वल्पदेशमध्यस्थितमेव सन्दर्शयसि तेन चानन्दयसि ब्रह्मानुभविनोपीऽत्यन्यथानुपपत्त्या मणिमन्त्रमहौषधादिवत् काप्य-चिन्त्या शक्तिरेव निमित्तमुपपद्यते तथैव निजजनप्रेमप्रवर्ति-तया लोकवल्लीलाकैवल्यविनोदशीलशालिनस्तव प्रवेशोपि सम्पा-दितः तथा पुत्रभावोपीति तत एव भगवता वरादिकं च निर्व्यूढ-मिति ज्ञेयम् अत्र श्रीदेवक्या तदर्थमस्मिन्नेव जन्मनि व्रतं विधाय तस्मात्तद्वरो लब्ध इति श्रीविष्णुधर्मप्रसिद्धिश्चानुसन्धेया ॥ १४ ॥

अन्यत्र महदादीनामिव भवतः सुतरां प्रवेशोपि न सम्भ-वेदित्याह—यथेति युग्मकेन । बहिर्गतस्यान्तर्गमनमेव प्रवेशः पूर्वं विद्यमाना एव हि कारणे कार्याणामभिव्यक्तिश्चेति न तेषां प्रवेश इत्यर्थः ॥ १५ ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वबुद्धिदृक् सर्वज्ञानभरः ॥ १३—१४ ॥

सप्तमहदहङ्कारतन्मात्राः विकृतैः स्थूलभूतैः सन्निपत्येति पञ्चीकरणमुक्तं विराजं ब्रह्माण्डं शयनस्थानभूतम् अनुगताः अण्डान्तर्गताः इवशब्दोऽनतिरिक्तार्थः क इवेति यत तत्प्रागेव अण्डो-त्पत्तेः प्रागेव विद्यमानत्वात् पृथिव्यादीनामण्डान्तरं नोत्पत्ति-रित्यर्थः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्तुतिमेव दर्शयति—विदितोऽसीत्यादिभिर्दशभिः । तावत् "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दम्, 'यतो वा इमानि भूतानि'" इत्यादिभिर्वेदान्तवाक्यैरवगतं स्वरूपतः स्वभावतश्च प्रकृतिपुरुष-विलक्षणं ब्रह्म तदेव त्वमिति स्तौति—विदितोसीति द्वाभ्यां । प्रकृति शब्देनात्र "भूमिरापोऽनलो वायुः, अपरेयमितस्त्वन्याम्" इति श्लोकद्वय प्रतिपादितं चिदचिदात्मकप्रकृतिद्वयं तन्त्रेण विवक्षितं तत्राचेतन-प्रकृतिरेव सर्वबुद्धिदृगिति सर्वसाक्षित्वोक्तेः जीवाद्व्यावृत्तस्य च-वगमात्मुक्तजीवस्वरूपस्य तत्सम्भवेऽपि स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणा-त्मकमित्यवगतजगद्व्यापारासम्भवात्तदसम्भवस्य जगद्व्यापारवर्जं "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" (४।४।१७) इति सूत्रित-त्वात् यद्वा प्रकृतेः पर इत्यनेनाचेतनप्रकृतेः परत्वमुच्यते सर्वबुद्धिदृक् स एवेत्यादिना बद्धमुक्तजीवाभ्यां परत्वमुच्यते यः प्रकृतेः परो

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विलक्षणोऽसौ केवलमनुभवः ज्ञानमानन्दश्च स्वरूपं यस्य सः अनुभवस्वरूप इत्येतावदुक्ते दुःखस्यापि ज्ञानात्मकत्वेन तत्स्वरूपत्वं प्रतीयेत अतस्तद्व्यावृत्तये आनन्द इत्युक्तम् आनन्दोऽनुकूलं ज्ञानं स्वरूपं यस्येत्यर्थः । केवलशब्देन दुःखसंभिन्नानुभव व्यावृत्तिः सर्वा बुद्धीः तद्वृत्तीः युगपत् पश्यतीति तथा एवमनेन बद्धजीवाद्व्यावृत्तिरुक्ता ॥ १३ ॥

अथ मुक्तजीवाद्व्यावर्त्तयितुमाह—स एवेति । यः प्रकृतेः परः सर्वबुद्धिदृक्स एव त्वमग्रे सृष्टेः प्राक्कारणत्वेनावस्थित इति शेषः । स्वप्रकृत्या स्वशरीरभूतया महदादिपृथिव्यन्त रूपेण परिणतया त्रिगुणात्मिकया इदं परिदृश्यमानं स्थूलचिदचिदात्मकं सत्त्वादिगुणत्रयपरिणामरूपत्वेन तद्वश्यजीवप्रचुरत्वेन च तदात्मकं जगत् सृष्ट्वा अनु पश्चात्तज्जगत्प्रविष्टः स्थित्यर्थं सङ्कल्परूपज्ञाने प्रविष्टः सृष्टिदशायामपि प्रविष्टत्वात्तथाप्यप्रविष्ट इव भाव्यसे प्रविष्टजगद्गतविकारैरस्पृष्ट इव भाव्यसे विभाव्यसे विज्ञायस इत्यर्थः । तथा च श्रूयते "तत्सृष्ट्वा तदेवानुप्राविशत् सत्यञ्चानृतं च सत्यमभवत्"इति विचित्रचिदचिद्रूपेण विक्रियमाणमपिब्रह्म सत्यमेव भवत् निरस्तनिखिलदोषमपरिच्छिन्नज्ञानानन्दमेकस्वरूपमेवाभवदित्यर्थः । इवशब्दोऽनतिरिक्तार्थः । अप्रविष्ट इव तद्गतदोषास्पृष्ट एव विभाव्यस इत्यर्थः ॥ १४ ॥

ननु, कार्यानुप्रविष्टस्य मम कार्यात्प्रागेव तत्कारणतयाऽवस्थानं कथम् ? कथन्तरां कार्यगतविकारास्पृष्टत्वम् ? चेत्याशंक्य तदुभयं महदादिपृथिव्यन्ताचेतनदृष्टान्तमुखेनोपपादयति—यथेति चतुर्भिः । तावद्दृष्टान्तं शिक्षयति—यथेति द्वाभ्यां । सप्तमहदहङ्कारतन्मात्ररूपाः विकृताः प्रकृतिविकारात्मकाः भावाः पदार्थाः ये त इमे तैः विकृतैस्तद्विकाररूपैराकाशादिस्थूलभूतैरिन्द्रियैः साधिदैवतैश्च सह तथा तैरिति पाठे ये च विकृता महदादयो भावास्तथा ये च तद्विकाराः स्थूलभूतरूपास्तैस्तैस्सहेत्यन्वयः । नानानावीर्याः विभिन्न शक्तयः ब्रह्माण्डरूपैककार्योत्पादनोपयुक्तैकरूपसामर्थ्यरहिता इत्यर्थः । अत्र हेतुः पृथग्भूताः परस्परसंमेलनरहिताः तावदेव भूतास्सन्तः "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि नामरूपे व्याकरोत्त्रिवृतं त्रिवृतमेकैकामकरोत्" इति श्रुत्युक्तरीत्या तदनुप्रवेशपूर्वकस्वस्वकर्तृकत्रिवृत्करणद्वारा त्रिवृत्करणं पञ्चीकरणस्याप्युपलक्षणम् ॥ १५ ॥

किञ्च संनिपत्य समुत्पाद्य संहतत्वं समागतत्वञ्चेत्यवस्थाद्वयं प्राप्य "समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः" इति वैष्णववचनात्तत्र संहतत्वं नाम पृथक्स्थित्यनर्हसंयोगमात्रं समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः विराजं ब्रह्माण्डं स्वच्छयनस्थानं जनयन्ति हि हिशब्देन "महदादिविशेषान्ताह्यण्डमुत्पादयन्ति ते" इति वैष्णवादिपुराणान्तरप्रसिद्धिर्द्योत्यते एवं सम्यग्विराजम् उत्पाद्यानुगता इव दृश्यन्तेऽण्डान्तर्गता इव दृश्यन्ते इवशब्दोऽनतिरिक्तार्थः अण्डान्तर्गता इव तत्रैव उत्पन्ना इव दृश्यन्ते न स्वाण्डोत्पत्तेः प्रागेव विद्यमाना इवेत्यर्थः । न चैतावता तेषां तत्रोत्पत्तिरिति शक्यं वक्तुमित्यभिप्रायेणाह प्रगेवेति अण्डोत्पत्तेः प्रागेव विद्यमानत्वात्पृथिव्यादीनामण्डान्तर्गोत्पत्तिरित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रकृतेः परत्वेन केवलाऽनुभवानन्दस्वरूपत्वेन सर्वबुद्धिसाक्षित्वेन च पुरुषः षड्गुण इति भवान् पूज्यस्त्वं विदितोऽसि साक्षान्नोपचारमात्रम् ॥ १३ ॥

ननु, साक्षित्वेनोदासीनश्चेत् जगत्स्रष्टा क इति तत्राह-स एवेति । तदनुसृष्टेरनन्तरं बहिरपि विद्यमानत्वात् अप्रविष्टः पूर्णस्वरूपात्प्रविष्टः सर्वगतस्य प्रवेशाप्रवेशौ उपचारतो न तु देवदत्तवन्मुख्याविल्यत इव शब्दः "बहिश्च विद्यमानत्वादप्रविष्टो जगत्पतिः । प्रविष्टवच्च तत्रैव पूर्णरूपत्वतो विभुः" इत्यादेः सर्वगतरूपेणाप्रवेशः पुरुषरूपेण प्रवेशः जले प्रतीयमानाकाशादिवदिति वा हि शब्दोऽसङ्गत्वमाह, ॥ १४ ॥

सृष्टिप्रकारं दर्शयति--य इति । य एते सप्ताविकृताः महदहङ्कारपञ्चतन्मात्राणि भावाः पदार्थास्ते विकृतैः स्थूलीभूतैः पृथिव्यादिभिर्जन्यप्राणिकामकर्मादिभिर्वा सह सन्निपत्यान्योन्यं मिलित्वा विराजं ब्रह्माण्डं समुत्पाद्य अनुगताः प्रविष्टा इव दृश्यन्ते बहिरपि विद्यमानत्वात् कथम्भूता भावाः पृथग्भूता विश्लिष्टाः नानावीर्याः अवकाशकालादिशक्तीनां नानाविधित्वाद्विभक्तशक्तित्वात्तदभिमानिदेवतानामिति शेषः । ननु, तर्हि मेलनकर्ता क इति तत्राह—शयनमिति । तव शयनस्थानीयत्वात्त्वमेव मेलनकर्त्ता इत्यर्थः ॥ १५ ॥

व्यक्तिविशेषादण्डे प्रवेशमात्रमेवोत्पत्तिर्न तु साक्षादित्याह, प्रागेवेति । इह ब्रह्माण्डे सम्भवः साक्षादुत्पत्तिर्नास्ति किं तु व्यक्तिविशेषेण प्रवेशमात्रमेव कुतः प्रागेव विद्यमानत्वात् लब्धसत्ताकत्वात्पूर्वमेवोत्पन्नत्वादित्यर्थः । प्रकृतिविकृतत्वमन्तरेणावान्तरविकृतत्वाभावात् महदादयोऽविकृता इत्युच्यन्ते. "महदादिस्त्वविकृतः" इत्यारभ्य "अण्डेत्वेषामभिव्यक्तिर्जनिरित्यभिधीयते" इत्यन्तेन सम्यग्व्याख्यातमाचार्यैरिति भावम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विदितोऽसि भवान् विज्ञातोऽसि कथं यः प्रकृतेः परः पुरुषस्तद्द्रष्टा स भवान्, यः केवलानुभवानन्दः परब्रह्माख्य आत्मा, स भवान् सर्वबुद्धिदृक् सर्वान्तर्यामी सोऽपि भवानिति स्वयं भगवत्त्वेनेत्यर्थः । तत्रापि साक्षादेव विदितो दृष्टोऽसीत्यहो मम भाग्यमिति भावः । कियत् एतद्वा यतः पुत्रतयापि प्राप्तोऽसीति तमवतारकारणेन सह वक्तुं तादृशप्राप्तिदुर्लभताख्यापनाय प्रकृतिपरादित्वं योजयन् तस्य घटनाय सर्गादिपरिपाटिञ्चानुवदन् सर्गप्रवेशौ तावदाह ॥ १३ ॥

स एवाह—तत्र प्रवेशोऽपि ततः परत्वमाह—एवं भवानित्यन्त्याभ्यां यथेति द्वाभ्याम् ॥ १४ ॥

यथेमे पृथिव्यादयस्तथा ते महदादयोऽपि कथं हि यस्मात् कृतैरिति पूर्वत्र तु सजलादिभिः परत्र षोडशविकारैः पूर्वत्र विराजं तत्प्रायं घटं परत्र ब्रह्माण्डम् ॥ १५ ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वादशात्मा हरिर्ज्ञेयस्त्रिधा च नवधा तथा ।
नवधा वैदिकः प्रोक्तास्त्रिधा लौकिक उच्यते ॥
यज्ञस्तु पञ्चधा प्रोक्तश्चतुर्धा भगवानिति ।
पञ्चात्मकश्चतुर्मूर्त्तिस्तन्त्रे वेदेन सम्मितम् ॥
लौकिकास्त्रिगुणाः प्रोक्तः स्मृतिश्चैव हि लौकिकी ।
नवधा वसुदेवोऽस्तौत् त्रिधा चैव हि देवकी ॥
एकेन प्रार्थनं पूर्वं द्वाभ्यां चैव तथा परम् ।
दशभिः पञ्चभिश्चैव निरूप्येते स्तुती उभे ॥
शास्त्रतो भगवानेव प्रतीत्यापि दृढीकृतः ।
बाधकं त्वन्यथा ज्ञानमज्ञानं चापि हेतुतः ॥

तत्र प्रथमं बाधकधर्मैश्चाक्षुषत्वादिभिर्ब्रह्मत्वं नोपपद्यत इति चाक्षुषत्वनिमित्ताज्ञानात् भगवद्विषयकमज्ञानं सम्भवति तदादौ निराकरोति–विदितोऽसीति । ज्ञातस्वरूपो स्तोत्रे एते भवान् विदितः मया सम्यक् ज्ञातः आर्षेण ज्ञानेन तत्त्वमस्यादिवाक्योत्थेन बहव एव जीवमपि भगवत्त्वेन जानन्तीति चेत्तत्राह–असीति । यस्तु युष्मच्छब्देनापि व्यवह्रियते चतुर्भुजः सोऽपि त्वं विदितोऽसीत्यर्थः । अप्रयुज्यमानेऽपि युष्मच्छब्दे मध्यमपुरुषप्रयोगः अतः शास्त्रतो लोकतश्च प्रतीयसे स मया विदित इत्यर्थः । अनेन परम्परया यः प्रतीयते अचेतनश्च यो वा साक्षात्प्रतीयते तदुभयरूपो भवानित्युक्तम् अथवा विदितोऽसीति प्रतिज्ञाय भगवतो ब्रह्मत्वमुपसंहरिष्यन् सर्वत्वं प्राप्तस्य ब्रह्मत्वं भवतीति भवान् पुरुष इति पदद्वयेन बाह्याभ्यन्तररूपः त्वमेवेत्याह--प्रत्यक्षोऽप्यप्रत्यक्ष इति ज्ञापयितुं वा सम्मुखोऽप्यसम्मुख इति वा पुरुषत्रयरूपो वा भगवानिति वा वक्तुम् असि भवान् साक्षात् पुरुष इति पदत्रयं अन्नमयादिरपि पुरुषविधत्वात् पुरुषो भवतीति तद्व्युदासार्थं साक्षादित्युक्तम्. पुरुषप्रवेशात् परंपरया ते पुरुषाः नन्वात्मस्फूर्तौ ब्रह्मविदामपि साक्षात्पुरुषत्वं भवतीति ततोऽप्याधिक्यमाह--प्रकृतेः पर इति न हि ते जीवाः प्रकृतिनियन्तारः प्रकृतिनियमनं च गुप्तानामर्थानां मायाजीवादीनां प्राकट्यकरणात् प्रत्यक्षदोषस्तु असि भवानिति पदाभ्यां परिहृतः ज्ञातत्वदोषश्च सर्वभावेन प्राकट्यात् विरुद्धा धर्मा एकैकांशेन चरितार्था भवन्ति तर्ह्ययमात्मा चतुर्भुजदेहे विद्यमानस्तथा भविष्यामीति चेत्तत्राह-केवलानुभवानन्दस्वरूप इति । केवलः देहेन्द्रियप्राणान्तःकरणरहितः नापि जीववत् केवलं चिद्रूपः किन्तु अनुभवानन्दः अयोगोलके वह्निरिव भगवानस्मिन् देहे चिदानन्दः संक्रान्तो भविष्यतीत्यत आह–स्वरूप इति । यत्स्वरूपं दृश्यते तदेव चिदानन्दरूपं न तु चिदानन्दो स्वरूपे यस्मिन् अतः चिदानन्दस्वरूपः सच्चिदानन्दविग्रह इत्यर्थः । एवं परोक्षापरोक्षान्तर्यामिरूपः परिदृश्यमानो भवानित्युक्तम् आत्मानोक इत्यात्मत्वेनापि भगवन्तं निरूपयति सर्वबुद्धिदृगिति सर्वेषां बुद्धीः पश्यतीति सर्वेषां बुद्धिदृक् ज्ञानं यस्येति वा एवं षड्विधोऽपि भगवानयमेवेत्युक्तं प्रत्यक्षव्यवहारादयश्च धर्मा अंशेन समर्थिताः ॥ १३ ॥

दूषणान्तरमाशङ्क्य परिहरति—स एवेति । यद्यहं सर्वरूपो भगवानेव कथं देवक्या उदरे प्रविष्टः ? इति चेत्तत्राह—अप्रविष्ट एव तत्र विद्यमान एव प्रविष्ट इव भाव्यसे न हि दर्शनमात्रेण प्रविष्टत्वनिर्द्धारः कर्तुं शक्यः यावत् शास्त्रेण दर्शनं संवादि न भवति स एष इह प्रविष्टः आनखाग्रेभ्यः यथा क्षुरः क्षुरधाने विश्वम्भरो वा विश्वम्भरकुलाये "तत्सृष्ट्वा तदेवानुप्राविशत्" "गुहां प्रविष्टौ परमे परार्द्धे" एवं वेदे स्थित्यर्थं कार्यार्थम् अनेकरूपभवनार्थमन्यप्रवेशनार्थं च प्रवेशः श्रूयते तथा देवक्यामपि कश्चन प्रवेशनप्रकारो भविष्यति न तु तथापि सोपाधिक एव कार्याभिनिविष्ट एव प्रविशतीति मुख्यः कृष्णः कथं स्यात् तत्राह, अप्रविष्ट इवेति योगबलादपि इन्द्र इव प्रवेशः सम्भवति दाक्षिणायां वा जननार्थं प्रवेशः सम्भवति "यो वा इतो जनिष्यते स इदं भविष्यतीति तां प्राविशत्तस्या इन्द्र एवाजायत" इति श्रुतेः । दितेर्जठरे च मरुतां छेदनार्थम् इन्द्रः प्रविष्टस्तथा भगवानत्र न प्रविष्ट इति वक्तुमप्रविष्ट इत्युक्तं प्रवेशधर्मो भगवति वर्त्तत इति तज्ज्ञापनार्थं प्रविष्ट इवेति विभाव्यते तर्हि कः प्रकारः प्रवेश इत्याकांक्षायामाह—यः पूर्वं सच्चिदानन्दरूप उक्तः स एवाग्रे पूर्वमेव स्वप्रत्याधिदैविकस्वभावेनेदं भगवदर्थमेव जगत् त्रिगुणात्मकं सृष्ट्वा अन्यार्थं जगत्सृष्टौ प्रवेशोपेक्ष्यते न स्वार्थसृष्टाविति अप्रविष्ट एव भोगार्थं कारणत्वेनैवाविर्भूतः सृष्ट्यन्तरन्यायेन प्रविष्ट इव भाव्यसे अयमत्र प्रवेशदर्शने प्रकार उक्तः भगवान् स्वार्थं सृष्टानस्मानुपभोक्तुमस्मासु स्थित एवाविर्भूत इत्यप्रविष्ट एव प्रविष्टो विभाव्यस इत्यर्थः । यथा सृष्ट्यन्तरन्यायेन प्रवेशभावना तथा स्नेहद्वेषसाधारणभावानामपि प्रभुविषयकाणां लीलास्थजनेषु दर्शनात्सृष्ट्यन्तरन्यायेन तेषामेवात्र सत्त्वादिरूपत्वमित्याशयेन त्रिगुणात्मकत्वोक्तिर्ज्ञेया अत्रिगुणात्मकामिति वा यद्वा अग्रे पूर्वं त्रिगुणात्मकं जगत् सृष्ट्वा तदनु तदनन्तरमुक्तरूपया स्वप्रकृत्येदं लीलात्मकं जगत्सृष्ट्वेत्यग्रे पूर्ववत् अन्यथा क्त्वाप्रत्ययेनैव पूर्वभावत्वप्राप्त्यर्थादेव प्रवेशस्यानन्तर्यमपि लभ्यत एवेति तदन्वितिपदं व्यर्थं स्यात् । यद्वा सृष्ट्यनन्तरं यस्तत्र प्रवेशस्तस्यानुप्रवेश इति रूढं नामेति ज्ञेयं तथा सति नोक्तदोषः अत एव श्रुतिरपि "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्युक्तवती अन्यथा अन्वित्युपसर्गवैयर्थ्यं स्यात् ॥ १४ ॥

उक्तरीत्या दूषणान्तरमप्याशंक्य पुनः परिहरति द्वाभ्याम् । यथेमे विकृताभावा इति । नन्वस्मिन् रूपे प्राकृतेष्विव पृथिव्यादीनि भूतानि प्रतीयन्ते ततः कथमानन्दमय इति चेत्तत्राह–यथा इमे अस्मिन् रूपे विद्यमाना अविकृताभावाः आधिदैविकानि चतुर्विंशतितत्त्वानि "चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः" इत्यादिश्रुतिप्रतिपादितानि तत्तत्कार्यार्थं तत्र तत्र स्थितानि विकृतैस्तथैव चतुर्विंशतितत्त्वैः प्राकृतैः सह नानावीर्यारूपरसादिज्ञापनादिसमर्थाः अन्योन्यमामिलिताः भिन्नान्येव कार्याणि कर्तुम् एकस्मिन्नेव कार्ये सर्वे संहत्य विराजं ब्रह्माण्डविग्रहं स्वराड्देहं जनयन्ति युक्तश्चायमर्थः आधिदैविकव्यतिरेकेण आधिभौतिकात् केवलात् कार्यं न सम्भवतीति तथा प्रकृतेपि सर्वांशो भगवानिति तान्याधिदैविकानीह प्रतीयन्त इति न कोपि दोषः ॥ १५ ॥

ननु, त्वक्चर्मादयोपि प्रतीयन्ते लोमदन्तनखानि च ततः कथमानन्दमयमिति चेत्तत्राह—सन्निपत्येति । सन्निपत्य मिलित्वा सम्यगुत्पाद्येति पूर्वानुवादः कार्येपि कारणेष्विवाधिदैविकं रूपं वर्त्तत इति ज्ञापनार्थः अनुगता इव दृश्यन्ते पुनः कार्ये त्वक्

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चर्मादिरूपेण पृथिवीसमष्टौ तद्रूपा वा सर्वत्र रुधिरादिरूपं जलम् एवमन्यदपि तर्हि दर्शनप्रामाण्यादनुगता इव भवन्त्विति चेत्तत्राह प्रागेव कारणत्वेन इह विद्यमानत्वात् पुनस्तेषामिहोत्पत्तिर्न सम्भवति कारणानां विलक्षणत्वात् साक्षात् प्रवेशस्तु प्रतीत्यैव बाधितः यथा आधिदैविकानि कारणरूपाणि एवं दन्तादीन्यप्याधिदैविकानीति पूर्ववत्तेषामप्यत्र प्रतीतौ न कोऽपि विरोधः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे भगवंस्त्वं मामेवं निजस्वरूपं यद्दर्शयसि तस्यायमभिप्रायः प्रतिपत्तः मदर्थं कंसाद्बिभेति तन्मामीश्वरं प्रतीत्य निर्भयो भवत्विति तत्सत्यं त्वयीश्वरत्वेन मम प्रतीतिः जातैवेत्याह--विदितोऽसि, कीदृशत्वेनेति चेद्तत आह--यः प्रकृतेः परः पुरुषस्तदीक्षणकर्त्ता स भवानेव यः केवलानुभवानन्दस्वरूपः परब्रह्माख्य आत्मा स भवान् यः सर्वबुद्धिदृक् सर्वान्तर्यामी सोपि भवान् साक्षादेव स्वं भगवत्त्वेनैवेति सर्वमहं जानाम्येवेत्यर्थः ॥ १३ ॥

ननु, भोः तात ! त्वद्गृहे प्रविष्टं मां परिच्छिन्नमेव आत्मजं जानासि अतः किमपि मे तत्त्वं न जानासीत्याशङ्क्य स्वज्ञानमाविष्कुर्वन्नाह स एव त्वकस्वरूप एव त्वं स्वगकत्या स्त्रीयप्रधानस्वरूपया इदं जगत् सृष्ट्वा तदनु अप्रविष्ट इव प्रविष्ट इव च भाव्यसे निरूप्यसे जगतोऽन्तरुपलभ्यमानत्वात् अप्रविष्ट इव नत्वप्रविष्टः वहिश्चोपलभ्यमानत्वात् प्रविष्ट इव न तु प्रविष्ट इत्यर्थः । एवमेव सर्वत्र वर्तमानस्त्वं मद्गृहे प्रविष्ट इव न तु प्रविष्टः सर्वदैव वर्त्तमानस्त्वं जात इव न तु जातस्तेन च सर्वव्यापकमूर्तेस्तव कंसः किमपि कर्तुं न शक्नुयादिति जानाम्येवेति भावः ॥ १४ ॥

अत्र दृष्टान्तः यथा इमे अविकृता भावा महदादयो ब्रह्माण्डे प्रविष्टा अपि न प्रविष्टाः तत्र पुनर्जातवत् प्रतीता अपि न जातास्तथैव त्वमित्यर्थः । दृष्टान्तं विवृणोति ते अविकृताः विकृतैः षोडशविकारैः सह नाना वीर्याः परस्परविसदृशस्वरूपा अपि पृथग्भूताः परस्परममिलिता अपि सन्निपत्य चैतन्यभैरणवशात् मिलितीभूय विराजं जनयन्ति ततश्च विराजं समुत्पाद्य अनुगता इव तत्र प्रविष्टा इव दृश्यन्ते न तु प्रविष्टास्तद्बहिरपि तेषां वर्त्तमानत्वादित्यर्थः । तथा तत्र विराजि समुद्भूतास्तत्र हेतुमाह प्रागेवेति इह विराजि सम्भव उत्पत्तिः समुद्भूता इव दृश्यन्ते न तु ॥ १५—१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्ञानी भक्तो भगवतोऽतिप्रिय इत्यत आत्मनो भगवत्स्वरूपादिज्ञानेऽधिकारं निवेदयति—विदितोऽसि मया ज्ञातोऽसि कोऽस्मि ? भवान् प्रकृतेः कार्यकारणरूपायाः मायायाः परः पुरुषः अप्राकृतलोकस्थः पुरुषोत्तमोऽसि किं लक्षणः ? इत्यत्र सत्यत्वादिमत्वे सति जगज्जन्मादिहेतुत्वं ब्रह्मत्वमिति पुरुषोत्तमलक्षणमाह-सार्द्धेन केवलेति । केवलश्चासावनुभवश्चानन्दश्च स एव स्वरूपं यस्य सः केवलशब्दोऽत्र सत् शब्दार्थबोधकः तथा च "सत्यं ज्ञानमनन्तं ब्रह्म, प्रज्ञानमानन्दम्ब्रह्म" इत्यादि श्रुतिप्रोक्तसत्यत्वादिगुणयुक्तस्वरूपः सर्वबुद्धिदृक् सर्वज्ञः ॥ १३ ॥

स एव सत्यत्वादिगुणयुक्तस्त्वं स्वप्रकृत्या त्रिगुणमय्या शक्त्या इदं विश्वं सृष्ट्वा तदनु "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः विश्वान्नियमनाय प्रविष्ट एव तथापि प्रवेशात्पूर्वं सर्वकारणस्य सर्वशक्तेः सर्वात्मनस्तव विद्यमानत्वादेवाप्रविष्ट इव भाव्यसे लक्षणं तु सत्यत्वादिमत्वे सति जगज्जन्मादिहेतुत्वं ब्रह्मत्वमिति विस्तरस्तु वेदान्तकौस्तुभे द्रष्टव्यः ॥ १४ ॥

भगवतः प्राग्विद्यमानत्वमात्रे दृष्टान्तमाह—यथेति, द्वाभ्याम् । इमे स्वकार्यापेक्षया अविकृताः महदादयो यथा तथेति एतत् प्रपञ्चयति—ते इति । ते महदादयः विकृतैः स्वकार्यैः सह विराजं सावर्णी समभिहारं जनयन्ति ॥ १५ ॥

ननु, पृथग्भूतानां तेषां विराड्जनने का शक्तिरित्यत आह—सन्निपत्य सम्यगेकीभूय जनयन्तीति सम्बन्ध एवं समुत्पाद्य विराजं सम्यगुत्पाद्य अनुगता इव प्रविष्टा इव दृश्यन्ते न तु प्रविष्टाः यतो हि कारणरूपेण तेषां प्रागेव विद्यमानत्वात् न सम्भवः न प्रवेशसम्भवः ॥ १६ ॥

---

भाषा टीका ।

वसुदेव उवाच ॥

वसुदेवजी बोले, कि—भगवन् ! आप मोकूं जाने गये, कि आप साक्षात् प्रकृति से पर पुरुष है, और ज्ञानानन्द स्वरूप वारे हैं, सबन की बुद्धीन की वृत्ति के देखन वारे हैं ॥१३॥

सोही प्रकृति सों पर और सबन की बुद्धि वृत्ति के द्रष्टा आप सृष्टि सों पहिले अपनी तीन गुणवारी प्रकृतिसों गुणत्रयात्मक या जगत् कों रच करके ताके पीछे वामें आप नहीं प्रविष्ट हो करकें भी प्रविष्ट सरीके जाने जाय हौ और वैसें तो आप प्रथम ही सर्वत्र प्रविष्ट होरहे हौ काहे सों, कि—विभु हौ ॥ १४ ॥

हे भगवन् ! आप जगत् में कोन तरियां से अप्रविष्ट हो क प्रविष्ट से जाने जाओं हौ ताहे में यह दृष्टांत है, कि—जैसें प्रकृति के विकार ये महदादिक, त्रिविध अहंकार के कार्य षोडश ( १६ ) विकारन के सहित नानाशक्ति वारे होकर के भी पहिले पृथक् रह करकें विराज को नहीं उत्पन्न करसकें हैं तो भी पंची करण प्रक्रिया सों महत् सों लेकें पृथिवी पर्यन्त सब इकट्ठे मिलकरकें ब्रह्मांड को उत्पन्न करें हैं परंच फिर भी वाहे के भीतर अनुगत सरीके दिखाई देवें है । परंच ये सब प्रथम ही विद्यमान रहे हैं तासों कछु पीछे प्रवेश कृत भान नहीं जानों जाय है ॥ १५-१६ ॥

एवं भवान् बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः।
अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १७ ॥
य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः।
विनाऽनुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दार्ष्टान्तिकेऽतिदिशति—एवं भवानिति। ननु, यद्यहमप्रच्युतस्वरूप एव कारणतया कार्येषु वर्ते तर्हि तेष्विन्द्रियैर्गृह्यमाणेषु मम ग्रहणं किं नास्ति? तत्राह—बुद्ध्यनुमेयलक्षणैरिति, बुद्ध्या रूपादिज्ञानेनानुमेयं लक्षणं स्वरूपं येषां तैर्गुणैरिन्द्रियैर्ग्राह्यैर्गुणैः सह सन्नपि वर्त्तमानोऽपि तद्गुणाग्रहस्तैर्गुणैः सह न गृह्यते अयं भावः न हि ग्राह्यैः सहभावमात्रं ग्रहणे कारणं किन्त्विन्द्रियाणां शक्तिः सा च कार्यैकसमधिगम्या यथा कार्यमेव कल्प्यते अतो यथा चक्षुषा रूपग्रहणे रसादिग्रहणं नास्ति तथैव विषयग्रहणे त्वद्ग्रहणमपीति अविषयत्वेन च ग्रहणमहं त्वयुक्तमेव सर्वबुद्धिदृगित्यत्र एवं तावत्प्रागेव विद्यमानत्वात्प्रवेशो नास्तीत्युक्तम् किञ्च परिच्छिन्नस्य नीडे पक्ष्यादेरिव प्रवेशो भवेन्न त्वनावृतत्वादपरिच्छिन्नत्वेन बहिरन्तर्भेदो नास्ति कुतः प्रवेश इत्याह—अनावृतत्वादिति। अनावृतत्वे हेतुनाह—सर्वस्येति। न हि सर्वरूपस्यान्यदावरकमस्ति सर्वात्मनः न ह्येकेनावृतोऽन्यस्यात्मा भवेत् आत्मवस्तुन इत्यात्मनो वस्तुनश्चेति हेतुद्वयम् "अत सातत्यगमने" इत्यस्मादतति व्याप्नोतीत्यात्मा न हि व्यापकस्यावरणं घटते। तथा वस्तुनः परमार्थवस्तुन आवरणं न घटत इत्यर्थः। तस्मात्सर्वात्मत्वेन प्रवेशो न मुख्योऽस्ति कुतस्तरां गर्भे प्रवेशः अतः केवलानुभवानन्दस्वरूप एव त्वं विदितोऽसीत्याश्चर्यं मम भाग्यमित्यर्थः ॥ १७ ॥

नन्वेतद्धेतुचतुष्टयं प्रपञ्चस्यावस्तुत्वे घटेत तत्तु न सम्भवति सत्यत्वेन प्रतीतेरित्याशङ्क्याह—य इति। आत्मनो दृश्येषु गुणेषु देहादिषु स्वव्यतिरेकत आत्मव्यतिरेकेण पृथक्सत्त्वं देहादिरिति व्यवस्यते निश्चिनोति यः पुमान् सोऽबुधोऽविद्वान् व्यतिरेकदर्शनात्। किञ्च मनीषितं विचारितं तद्देहादिसर्वं यतो विना अनुवादं वाचारम्भणमात्रं विना न सम्भवति अतोऽवस्तुत्वेन त्यक्तं बाधितमेव वस्तुबुद्ध्या उपाददत् स्वीकुर्वन्नबुध इत्यर्थः ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

भवतस्तु परमकारणत्वेन न सुतरां प्रवेशो नच स्पर्श इत्याह—एवमिति। तस्मादेवंभूतस्य तव साक्षात्कोऽयं प्रकाशः सोपि तव परमप्रसादमय इति भावः। अन्वयैः तत्र गुणैरिति विशेषणभेदेनार्थभेदाद्द्विधा व्याख्यातं यद्वा, अत्रैवार्थविशेषेण प्रेमवश्यत्वादिगुणशालित्वं योजयति एवमुक्तप्रकारेण प्रेमवश्यत्वादिभिर्गुणैः सह नित्यं वर्त्तमानोपि तेषु गुणेष्वाग्रहः पुनः पुनः आसक्तिर्यस्य तथाभूतो भवान् भवति, कथंभूतैः? बुद्ध्यनुमेयमेव न तु प्राप्यं लक्षणं स्वरूपं येषां तैः "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः। तत्र हेतवः सर्वस्येत्यादयः सर्वमयस्य सर्वात्मनः सर्वचेतयितुः सर्वव्यापकस्य वा आत्मना स्वयमेव वस्तु यतस्तस्य स्वतः परमपुरुषार्थस्वरूपस्येत्यर्थः। तथापि तद्गुणाग्रह इति सततभक्तप्रेमवश्यत्वेन सतताशेषसद्गुणाभिव्यञ्जकत्वं दर्शितं तत आवयोर्यत्पुत्रतया प्रविष्टः प्राप्तोऽसि च तद्भवतो युक्तमेव तदेव चावयोरपि परमफलमिति भावः ॥ १७ ॥

नन्वन्येषामन्येऽपि देवाः पुत्रादिरूपाः प्रकाशन्ते कथं मय्येवाग्रह इत्यत्राह—य इति युग्मेन। परमस्रष्टारं परमकारणञ्च त्वां विनाऽन्येषां स्वातन्त्र्येण सत्त्वाभावान्न तेषु पुरुषार्थत्वमिति भावः। यद्वा आत्मनः स्वस्य दृश्याः साक्षादनुभवनीया मनोहरा वा गुणा येषां तेष्वपि मध्ये स्वव्यतिरेकतः तेषामपि मूलस्वरूपं त्वां विना अयं देवस्सन् उत्तम इति यो निश्चिनोति स मूर्खः, यतः तन्मनीषितं दृश्यगुणोऽयं सन्निति विचारितं सम्यक् उत्तमं न भवति, कुतः? अनुवादं तत्त्वनिर्धारणार्थमन्योन्यवादं विना तत् तत्सङ्गमाभावेन तत्त्वानिश्चयादित्यर्थः। यतः स पुमान् सूरिभिस्त्यक्तं पुरुषार्थान्तरमेवोपाददत् स्वीकृतवान् ददैः परस्मैपदमार्षम् ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

बुद्ध्यनुमेयलक्षणैः बुद्धिनिरूप्यस्वभावैः गुणैः गुणमयकार्यैः सन्निति एककारणतया अस्तीति न ग्राह्यस्त्वं तद्गुणग्राह्यं तत्तद्गुणमयं कार्यं साक्षात्कर्तुं तत्र हेतुरनावृतत्वम् असङ्कुचितज्ञानत्वं बहिरन्तरं न ते बहिर्भागस्तत्प्रतिसम्बन्ध्यन्तर्भागश्च नास्ति व्यापित्वात्, तदेवाह; सर्वस्य सर्वशब्दवाच्यस्य सर्वात्मनः सर्वशरीरकस्य आत्मवस्तुनः सर्वेषामात्मवस्तुनः सर्वेषात्मभूतस्य बहिरन्तरं नेत्यन्वयः ॥ १७ ॥

यद्यात्मनः इति आत्मैव नित्यस्तथापि स्वव्यतिरिक्तेषु भोग्यपदार्थेषु सन्निति नित्य इति अबुधो व्यवस्यते अबुध्वा व्यवस्यति तन्मनीषितं न सम्यक् विनानुवादं अनित्यत्वनिषेधार्थमनन्यत्वमनुवादेनोक्तं चेत् तत्सम्यङ्नित्यत्वप्रतिपादनं तत्तु न सत्यमित्यर्थः। यतस्त्यक्तमुपाददत्पुमानिति विवेकिभिरितरानित्यतया त्यक्तं हि तद्बुद्ध्या पुमानुपादत्ते अतो न सत्यमित्यर्थः ॥ १८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

दृष्टान्ताभिप्रेतमर्थं दार्ष्टान्तिके निगमयति--एवमिति। यथा महदादिविशेषान्तानां भावानामयं(?)त्पत्तेः प्रागेव सत्कारणतया

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

द्वेतोरित्यनेनैतत् ज्ञापयति–यद्यपज्ञानीयादस्मादुत्पन्नो भगवान-न्यत्र तिष्ठतीति तदा निर्बन्धेन समानयनं वा प्रार्थयेत् पूर्वं प्रति-ज्ञातत्वात् अतोऽस्य ज्ञानाभाव एवोचितः ॥ २९ ॥

रूपान्तरस्वीकारे स्वस्यत्रापि स्थापयितुं शक्यते मत्वमेन रूपे-णेति उपसंहारं प्रार्थयते–उपसंहरेति । यद्वो वेद्येद्यमलौकिकं रूपं लोके उचितं न भवतीत्युपसंहर विश्वात्मन्निति रूप-ग्रहणे उपसंहारे च सामर्थ्यं द्योतितम् । स हि विश्वात्मन् सर्वाण्येव रूपाणि गृह्णाति उपसंहरति च अद इति पदेन चैतत् विज्ञापयति–अवतारो नोपसंहर्तव्यः अलौकिकत्वमात्रमुप-संहर्तव्यमिति सर्वमेवालौकिकमिति सर्वस्यैवोपसंहारे प्राप्तेऽलौ-किकसमानं तत् स्थापनीयमन्यदुपसंहर्तव्यमिति वदन्ती अलौकिक-मंशमाह शङ्खचक्रेति । शङ्खचक्रगदापद्मान्यायुधान्युपसंहर्तव्यानि अलौकिकी श्रीश्चोपसंहर्तव्या भुजानां चतुष्टयं चोपसंहर्तव्यं द्वयं स्थापनीयं उपलक्षणमेतत् प्राकृतमाधाव्यतिरिक्तं तदुप-संहर्तव्यं भविष्यमाणोऽपि प्राकृतो भावः स्थापनीयः । यद्यपि चतु-र्भुजरूपं देवादीन् प्रति प्राकृतमेव तथापि साधारणान् प्रति तादृशमपि न प्रकटनीयमिति प्रार्थना ॥ ३० ॥

एवं स्तुत्वा प्रार्थयित्वा च विरोधं परिहरति—विश्वमिति, अथवा मदुपसंहारेणाशङ्क्यते सामर्थ्यार्थं विरोधिगुणमनूद्य अन्यतरस्य प्रदर्शनपरत्वेनोपपादयन्ती समर्थयते—विश्वमिति, स्वतनौ स्वशरीरे विराजि ब्रह्माण्डाख्ये निशान्ते सृष्टिसमये यथावकाशं चतुर्दशभुवनलोकात्मकं विमार्वि प्रकटे सूक्ष्मतया निवेशनं भवतीति निशान्त इत्युक्तम् । किमीश्वरतया स्थितिर्निषिद्धा नन्वत्र किं प्रमाणमित्याशंक्याह–पुरुषः पर इति । पुरुषो व्यष्टिः परः समष्टिः भवानिति सप्तम्यर्थे तेन स्वस्वरूपे तादृङ्माहात्म्य ज्ञानवत्त्वसम्बोधनम् एवं विश्वाधारभूतोऽपि भवान् मम गर्भगो ऽभूत् यद्यपि विरुद्धसर्वधर्माश्रयस्य भगवतो नेदमाश्चर्यं तथापि स्वप्रतीत्या आश्चर्यं मत्वा परिहरति–महो नृलोकस्य विडम्बनं महदिति । महो इत्याश्चर्ये नृलोकस्य मनुष्यमात्रस्य महद्-तदनुकरणमिति समाधानं महानपि अल्पमनुकरोति यथा पुरुषो विडालं तथापि ब्रह्माण्डविग्रहस्य परमसूक्ष्मता आश्चर्य-रूपेत्याशंक्याह–महदिति । अनुकरणं सत्यमेव परमलौकिक-मनुकरणम् अनेन गर्भाभावोऽप्युक्तः ॥ ३१ ॥

एवमुभयोः स्तोत्रे सप्रार्थने कृते भगवान् स्वस्य पुत्रत्वे तादृश रूपेण प्राकट्ये च हेतुं वदन् तयोः पूर्ववृत्तान्तमाह–परिज्ञानार्थं त्वमेवेति चतुर्दशभिः । चतुर्दशविधानां प्रामाण्यार्थम्—

> पूर्वस्थितिः तथा कार्यं प्रकारो भजनं हरेः ।
> कालस्तोषश्च प्राकट्यं वरप्रार्थनया सह ॥
> अल्पबुद्धित्वभोगौ च जन्मत्रितयमेव च ।
> त्रिगुणं भगवत्सख्यं लौकिकाद्वैदिकान्महत् ॥
> रूपदर्शनकार्यं च साधनं प्रोच्यते महत् ।

प्रथमस्थितिमाह–पूर्वसर्गे प्रथमब्रह्माण्डे प्रथमकल्पे इतः पूर्वकल्पे वा साध्वी देवकी अत्येवाह भगवान्—तस्या दीनत्वेन स्नेहातिशयात् पृश्निरिति नाम त्वमेव प्राहितत्वम्: स्वायम्भुवे मन्वन्तरे सतीति सम्बोधनम् अनेनास्याः अधिककृपायां धर्मातिशयो हेतुरुक्तः तदा तस्मिन्नेव समये वसमपि सुतपा इति नाम प्रसिद्धः अयं च प्रजापतिर्ब्रह्मणः सुतः मरीच्यादिवत् कर्दमवत् स्वभावत एवाय-मकल्मषः कामक्रोधलोभादिरहितः एतादृशौ पूर्वं स्थितौ ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भो मातः यदीदं रूपमन्तर्धापयामि तदा कंस आगत्य गर्भस्ते क्व गत इति गर्भचौर्यापराधेन त्वामधिकं ताडयिष्य-तीति चेत्तत्र मम का शङ्केत्याह-जन्मेति । मा विद्यात् मा जानातु मधुसूदनेति मधुदैत्यं हतवतो मम कंसवधे कः प्रयास इति मामेत्थं त्वदीयज्ञानात् मधोरप्ययमिदानीन्तनः कंसः कोटि-गुणितबलाधिक इति भावः । भवद्धेतोरिति मदपराधं प्रकल्प्य मत्ताडनं यथाविधि कुर्यात् चेत्करोतु केवलं भवतः कल्याण-माशासे इति भावः । ननु, तर्हि रूपं यत्तादृश्यनेन नष्टे लोक इत्यनेन योऽयमित्यनेन मर्त्यो मृत्युव्यालेत्यनेन मदैश्वर्यं वृथैव किमवादीः सत्यं पुत्र ! भवन्माताऽहमेवमधीरबुद्धिरेव मा खिद्यस्व ममैव दोषोऽयं निर्मञ्छनं ते यामि मातृवात्सल्येनापि रूपमिदमुप-संहरेति भावः ॥ २९ ॥

विश्वात्मन्निति विश्वस्य मध्ये अहमप्यस्मि तन्ममान्तर्मध्ये स्थित्वा कथमेवमधीरां धियं प्रवर्तयसीति तवैवायं दोष इति भावः । अलौकिकमिति लौकिकनरबालकाकारो भव यथा झटिति त्वामहं क्वापि गोपयामीति भावः ॥ ३० ॥

ननु, किमित्युपसंहर्तव्यम् मया परमेश्वरेण पुत्रेण तव महती प्रतिष्ठैवाभिव्यक्तेति येनाहं प्रतिष्ठामाशासे इत्याह—विश्व-मिति । निशान्ते मन्दिरे "निशान्तवस्त्यसदनभवनागारमन्दिरम्" इत्यमरः । स्वतनुमन्दिरे यथावकाशमसङ्कोचतः नृलोकस्य मानुष्या मम विडम्बनमेव तदिदम् अयि मूढे कोटिब्रह्माण्डविग्रहो भगवांस्तव मानुषपुत्र्या गर्भे स्थितोऽभूदिति, छक्तुमभिमन्तु-मपि किं न लज्जसे ? इति प्रतिवेशिन्यो मामुपहासिष्यन्तीति प्रत्युताप्रतिष्ठैव मे स्यादिति भावः । ननु. परब्रह्ममूर्तेर्भगवतः साक्षादपरोक्षानुभविनोर्वसुदेवदेवक्योरपि किमिदमघटमानमा-धिक्यं भयशोकादिकं नैवं विद्याविद्याभ्यां बहिरङ्गाभ्यां पर-भूता खलु यान्तरङ्गा स्वरूपभूता चिच्छक्तिस्तस्या अपि सार-वृत्तिरूपो यः प्रेमा तद्विलासभूतमेवेदं भयशोकादिकमाविष्कर्त्तव्य-प्रभावपात्रीभवितुं नैवार्हतीति प्रेम्णो मायातीतत्वे किं प्रमाणमिति चेत् भगवतः प्रेमवश्यत्वान्यथानुपपत्तिरेव मायामयत्वे तस्य मायावश्यत्वमापद्येतेति किञ्चात्र चान्यत्र च व्युत्पत्त्यर्थमिदम-भ्यस्यते "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेस्तस्य स्वरूपं भक्त्यैव गम्यमित्यवसीयते सा च भक्तिस्त्रिविधा गुणीभूता प्रधानी-भूता केवला च तासां च क्रमेण ज्ञानं ज्ञानमयी रतिः प्रेमा चेति फलानि तत्र ज्ञानेन केवलं चित्सुखैकमयं ब्रह्मस्वरूपमेव ज्ञानमयरत्या चिदैश्वर्यसुखमयं भगवत्स्वरूपमेव प्रेम्णा तु माधुर्य-मयं कृष्णरामादिस्वरूपमेवास्वाद्यते कस्यचित्प्रेमवत्साधुसङ्ग-महिम्ना प्रधानीभूतापि भक्तिः प्रेमफला स्यात् किन्तु तदैश्वर्यमेवेत्याहुः, स्वरूपस्य वस्तुत ऐक्येऽप्यास्वादनभेदाच्छ्रेयतातिशयः तच्च माधुर्यं श्रीविग्रहनिष्ठरूपादिपञ्चकस्य भक्तवात्सल्यस्य लीला-

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥
वर्षवातातपहिमघर्मकालगुणाननु ।
सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३४ ॥
शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥ ३५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

याश्चेति सप्तविधं व्रजस्यस्य तस्य तु वेगवैश्वर्ययोराधिक्यश्चाव विधं यदुक्तम्—

"चतुर्धामाधुरी तस्य व्रज एव विराजते ।
ऐश्वर्यक्रीडयोर्वेणोस्तथा श्रीविग्रहस्य च" ॥ इति ।

प्रेमा च दास्यसख्यवात्सल्योज्ज्वलभेदाच्चतुर्विधः तेष्वपि मध्ये वात्सल्यप्रेमा स्वस्वभावमहिम्नैव कृष्णमनुकम्प्यत्वेन ममत्वातिशयाविषयीकृत्य स्पष्टमप्यैश्वर्यं स्वयमनुभूयमानत्वं प्राप्तमपि तथाऽऽच्छादयति, यथा तन्ममतारसनया निबद्धो वशीभूय स कृष्णः स्वमाधुर्यमपारमन्यानास्वाद्यं वात्सल्यप्रेमवज्जनमास्वादयति । ज्ञानेन वा ज्ञानमयरत्या वा सच्चिदानन्दात्मकवस्तूनां य आस्वादस्तस्मात् कोटिकोटिगुणितं ममता हेतुकमास्वादं प्रेमा प्रवर्त्तयति तथा हि सर्वसन्तापनिवर्त्तकात् परमाह्लादकात् दृश्यमानात् चन्द्रादपि सकाशात्सर्वगुणहीनोऽपि कालत्वादिदोषयुक्तोऽपि दृश्यमानः स्वपुत्रो यत्सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा सर्वगुणमण्डिते स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे पुत्रीभूते निरवधिकैव सा ममता प्रेमनिष्ठा किमुतेति ज्ञातप्रेम्णोर्भेदो विवृतः यथाद्याविद्यास्ववृत्त्या ममतया जीवं दुःखयितुमेव बध्नाति तथैव प्रेमा स्ववृत्त्या ममतयेश्वरं सुखरूपमप्यतिसुखयितुं बध्नाति यथा दण्डनीयजनस्य गात्रबन्धनं रज्जुनिगडादिना लालनीयजनस्यापि गात्रबन्धनमनर्घसुगन्धसूक्ष्मश्लक्ष्णकञ्चुकोष्णीषादिनेत्यविद्याधीनो जीवो दुःखी प्रेमाधीनः कृष्णोऽतिसुखीति किञ्च यथैवाविद्यया स्वतारतम्येन ज्ञानावरणतारतम्याज्जीवस्य पञ्चविधक्लेशतारतम्यं विधीयते तथैव प्रेम्णापि स्वतारतम्येन ज्ञानैश्वर्याद्यावरणतारतम्यात् स्वाविषयाश्रययोः अनन्तप्रकारं सुखतारतम्यं विधीयते इति तत्र केवलः प्रेमा श्रीयशोदादिनिष्ठः स्वविषयाश्रयौ ममतारसनया निबद्ध्य परस्परवशीभूतौ विधाय ज्ञानैश्वर्यादिकमावृत्य यथाधिकं सुखयति न तथा देवक्यादिनिष्ठः ऐश्वर्यज्ञानमिश्रितत्वेन प्राबल्याभावात् तत्तत्प्रेम्णस्तथा तथा भूतत्वे कारणं तु नान्वेष्टव्यं तासां यशोदादिदेवक्यादीनां नित्यसिद्धत्वादेव तत्तत्प्रेमविशेषाणामपि नित्यसिद्धत्वादिति सर्वं निरवद्यम् ॥ ३१ ॥

भो मातर्न केवलमस्मिन्नेव जन्मनि त्वद्गर्भगतोऽहमपि तु जन्मान्तरेऽप्यतस्त्वं किमिति स्वदैन्यं मन्यसे न त्वं प्राकृत्येव मानुषीत्याह—त्वमेवेत्यादिचतुर्दशभिः । अभूः आसीः स्वायम्भुवे मन्वन्तरे सति वर्तमाने अयं वसुदेवः ॥ ३२—३३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भवतः एव हेतोः कंसात्समुद्विजे मयि सति क उद्वेगः अत्राह—अधीरधीरिति ॥ २९ ॥

पौरुषं रूपं प्रत्यक्षं मा कृषीष्ठा इति यदुक्तं तद्विवृणोति, उपसंहर इति ॥ ३० ॥

निशान्ते प्रलयान्ते विश्वं यथावकाशमसङ्कोचतः स्वतनौ भवान् बिभर्ति स भवान् मम गर्भगोऽभूदिति मम भाग्यं परन्तु असम्भावनया नृलोकस्य विडम्बनमुपहासास्पदं भवेदत उपसंहरेति पूर्वेणान्वयः ॥ ३१ ॥

प्रार्थितं स्वीकृत्य आवयोः प्रार्थनयैव जन्मान्तरे कृतयैव जातोऽस्मीति विज्ञापयति भगवान्—त्वमिति चतुर्दशभिः । हे सति ! मातः ! स्वायम्भुवे मन्वन्तरे अभूः आसीः ॥ ३२ ॥

### भाषा टीका ।

हे मधुसूदन ! वे पापी कंस भी मैं आपके जन्म को न जानलेवे, मैं अधीर बुद्धिवारी तुमारे कारण सों वा कंस सों बड़ी डरूं हूं॥२९॥

हे विश्वात्मन् ! शंख, चक्र, गदा, और पद्म, की शोभा सों सेवित या अलौकिक चतुर्भुज रूप का आप छुपाय लेओ ॥ ३० ॥

जो परमपुरुष आप प्रलय के अंत में या विश्व को अवकाश पूर्वक अपने उदर में धारण करो हो, सो आप मेरे गर्भ में आये। अहो येई तो आप को मनुष्य लोक को अनुकरण है ॥ ३१ ॥

श्रीभगवान् उवाच ।

श्रीभगवान बोले, कि–हे सति ! स्वायंभुव मन्वन्तर में पूर्व जन्म में ये वसुदेवजी सुतपा नामक प्रजापति रहे और पृश्नि नामवारी तुम इन की पत्नी रहीं हो ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तेपाथे तपः कृतवन्तौ ॥ ३३ ॥ ३४ ॥ ३५ ॥

एवं वां तप्यतो(१)स्तीव्रं तपः परमदुष्करम्।
दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तप्यतोराचरतोः ईयुर्गतानि मदात्मनोर्मच्चित्तयोः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

वै प्रसिद्धौ स्मरणे वा ततस्तदानीमेवेति ब्रह्मादेशपालनपरतोक्ता सन्नियम्येति च शान्तिनिष्ठा अत एव परमम् अनेकार्थस्य तपेः तपः कृत्यर्थव्यक्तय एव तपःशब्दो ऽनूद्यते इत्यभिप्रेत्य तैर्व्याख्यातं तेपाथे तपः कृतवन्ताविति किन्तु उक्तार्थानामप्रयोग इति तत्र कृतवन्ताविन्येवार्थः। पर्यवस्यति तत एव चान्वितं स्यादिति ॥ ३३ ॥

तप एव दर्शयति–वर्षेति युग्मकेन। वर्षादीन् कालस्य गुणान् अनु निरन्तरं सहमानौ आतपः साक्षात् रविरश्मितापः घर्म औष्ण्यम् यद्वा आतपः शारदस्य रवेः घर्मो नैदाघस्य किञ्च श्वासरोधः प्राणायामस्तेन प्रथमं सामान्यतो धूता नाशितास्ततो यावदुपलक्ष्यन्ते तावन्निःशेषेण धूतास्ततः स्वयमनुपलक्ष्यमाणाया अपि सूक्ष्मतमवासनाया उच्छेदनेन विशेषेण निर्धूता मनसो मलाः कामादयो याभ्यां तौ एतेन यत्किञ्चित्त्वमध्यमत्वयावत्वक्रमेण तयोराग्रहाधिक्यं बोधितम् अत एव उपशान्तेन सुस्थिरेण किंवा मन्निष्ठेन शमो मन्निष्ठता बुद्धेरित्युक्ते इति शान्तिनिष्ठा मत्तः पुत्रभूतात् कामान् जनकभावोचितसुखानि प्रजासर्ग इत्युक्तत्वात् मादृशो वां वृतः सुत इति वक्ष्यमाणत्वाच्च ॥ ३४ ॥ ३५ ॥

भद्रे ! हे परमभाग्यवतीति तत्र योग्यतोक्ता यद्वा भद्रवने माथुरक्षेत्र एवात्र मय्येव आत्मा चित्तं ययोरिति कामान्तरं निरस्तम् इत्युपरतिनिष्ठा ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं सति यदा युवां ब्रह्मणा चतुर्मुखेन प्रजासर्गे निमित्ते आदिष्टावाज्ञप्तौ तत इन्द्रियग्राममन्तर्बाह्येन्द्रियगणं सम्यक् नियम्य निगृह्य परममुत्कृष्टं तपः तेपाथे चक्राथे पाकं पचतीतिवन्निर्देशः ॥ ३३ ॥

तपसः परत्वमेव दर्शयितुं तौ विशिनष्टि–वर्षवातातपेत्यादि। वर्षादीन् कालगुणान् ऋतुधर्माननुक्रमेण प्राप्तान् सहमानौ घर्मातपजं स्वेदोदकं "घृक्षरणे" इति धातुः श्वासनिरोधेन प्राणवायुनिरोधेन निर्धूतं मनसो मलं रजस्तमोभ्यामभिभवरूपं ययोः शीर्णानि वृक्षेभ्यो गलितानि पर्णान्यनिलश्च आहारो ययोस्तथाभूतौ मत्सकाशात्कामानभीष्टार्थानभीप्सन्तौ उपशान्तेन रागादिभिरकलुषितेन चेतसा मदाराधनमीहतुः ईहाञ्चक्रान्ते कृतवन्तौ इत्यर्थः। आर्षत्वादिजादेरित्याममभावस्तङभावश्च अनुदात्तेत्वलक्षणात्मनेपदस्य चक्षिङ्ङित्करणादनित्यत्वाद्वाऽधिजिहीर्षिभवच्छब्दसामानाधिकरण्याभिप्रायकः प्रथमपुरुषप्रयोगः ॥ ३४–३५ ॥

हे भद्रे ! एवमित्थं परमदुष्करं च तपश्चरतोर्मय्येवात्मा मनो ययोस्तयोर्युवयोर्दिव्यादि न देवमानपरिमितानि वर्षाणि वर्षाणां वत्सराणां सहस्राणि द्वादश ईयुर्व्यतिक्रान्तानि बभूवुः ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रजासर्गे तादर्थ्ये सप्तमी ततस्तदा ॥ ३३ ॥

अनुक्रमेण वर्षादिगुणान् सहमानौ श्वासरोधः प्राणायामस्तेन ॥ ३४ ॥

शीर्णपर्णा वायुना पतितपत्रं कामान् पुत्रादिलक्षणान् ॥ ३५ ॥

वां युवयोः ॥ ३६–३७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अनेकार्थस्य तपेः तपःकर्मकृत्यर्थव्यक्तय एव तपःशब्दोऽनूद्यते आतपः शारदस्य रवेः घर्मो नैदाघस्य मत्तः पुत्रभूतात् कामान् जनकभावोचितसुखानि प्रजासर्ग इत्युक्तं मादृशो वां वृतस्सुत इत्यग्रतश्च वक्ष्यते ॥ ३४–३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतादृशौ पूर्वं स्थितौ तादृशी प्रति ब्रह्मणा आज्ञामाह–युवामिति। प्रजासर्गे ब्रह्मणा आदिष्टौ तदा ततः तदनन्तरमेव क्वचिद्देशविशेषे सन्नियम्येन्द्रियग्रामं ततः प्रभृतिसम्बन्धमकृत्वा परमं तपस्तेपाथे सर्वेन्द्रियनिरोधेन सर्वाहारपरिवर्जनेन वाय्वादि निरोधे विहिते शरीरे सन्तापजननात् तपो भवति परममुत्कृष्टं भगवद्विषयकत्वात् एवं तस्मिन् जन्मनि कार्यमुक्तम् ॥ ३३ ॥

तस्य तपसः प्रकारमाह–वातवर्षेति। वर्षवातयोः सहनं प्रावृट्काले अनावृतदेशे अन्तरिक्षे स्थित्वा आतपसहनं पञ्चाग्निप्रकारेण. हिमसहनं जलवासादिना. घर्मः कालान्तरीयोपि, कालगुणाः अन्येऽपि शीतादयः साधारणा स्तेषामप्रतीकारेण स्थितिरेव सहनम् उभावपि सहमानौ नत्वेकस्तपः करोत्यपरस्तत्सेवामिति ॥ ३४ ॥

तादृशयोर्भगवत्सेवामाह–शीर्णेति। कियत्कालं तपसा चित्ते शुद्धे भगवत्सेवयैव कार्यं नान्यथेति ज्ञात्वा तपः कुर्वाणावेव परिचर्यां कृतवन्तौ सर्वथा आहाराभावे बहिः संवेदनाभावे च उभयोः परिचर्या न भवतीति यादृशेन तपसा सह परिचर्यां कृतवन्तौ स विशेष उच्यते, शीर्णपर्णेति शीर्णानि पर्णानि अनिलो वायुश्च आहारो ययोः परमोपशान्तिः शुद्धसात्त्विकगुणाविर्भावः स एवोपशमः सोऽपि चित्तस्य स्वभाव एव चेत्

(१) भद्रे इति वीर०।

तदा वां परितुष्टोऽहममुना वपुषाऽनघे ! ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३७ ॥
प्रादुरासं वरदाड्युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥
अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ[1] देवमायया ॥ ३९ ॥
गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ।
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

जातस्तदा उपशान्तं चित्तं भवति. एवं यमा नियमाश्चोक्ताः मत्तो हरेरेव कामान् पुत्रादीन् अभीप्सन्तौ सकामौ मदाराधनं मत्-परिचर्यामीहतुः कृतवन्तौ ॥ ३५ ॥

एवं तिष्ठतोर्यावान् कालो जातस्तमाह—एवमिति । भद्रे ! इति सम्बोधनं स्त्रीपुंभावेन स्थितयोः सौभाग्यबोधनार्थम् उत्त-रोत्तरतपोवृद्धौ परमदुष्करता द्वादशदिव्यवर्षसहस्राणि चतुर्युगं युगधर्मा अपि तयोर्बाधका न जाता इति ज्ञापनार्थं तावत्कालं देहस्थितौ हेतुः मदात्मनोरिति अहमेवात्मनि ययोः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आतपः सौरकिरणोत्थस्तापः घर्मो निदाघोत्थः ॥ ३४–३५ ॥
मदात्मनोर्मच्चित्तयोः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परमं ममाराधनात्मकं तपः तेपाथे कृतवन्तौ ॥ ३३ ॥

वर्षादीन् कालगुणान् सहमानौ तत्र घर्मशब्दः प्रस्वेद-वाचकः "घृ चरणे" "स्वेदे घर्मः स्वेदने च" इति हैमः ॥३४–३५ ॥

तपस्तप्यतोः आचरतोः ईयुर्गतानि ॥ ३६ ॥

---

भाषा टीका ।

वा समय में जब ब्रह्माजी ने प्रजा की सृष्टि के तांई तुम दोनों कों आज्ञा दीनी तब तुमन ने विषयन सूं इन्द्रियन कों रोक कर कें परम तप कियो ॥ ३३ ॥

वर्षा पवन आतप घर्म इत्यादि काल के गुणन को सह करकें प्राणायाम के बल सों तुम दोनोंने अन्तःकरण के मल को दूर कियो ॥ ३४ ॥

गिरे परे वृक्षन के पत्र और पवन को अहार करके शान्त भयो जो चित्त तासों मो मात्र सों वरदान की इच्छा करकें तुम दोनों हमारो आराधन करत भये ॥ ३५ ॥

या प्रकार सों मेरौ विषैं चित्त लगाय के परम दुष्कर तीव्र तप करत २ तुम दोनों को देवतान की बारह हजार वर्षें बीत गईं ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमुना वपुषा प्रादुरासं प्रादुर्भूतोऽस्मि ॥ ३७ ॥

वरदराट् वरदेषु श्रेष्ठ इत्यर्थः । तेन सकृद्वरेण च वारं वार-माविर्भावं कारणमुक्तं कामस्य दित्सया दातुमिच्छया मादृशो मया सदृशः ॥ ३८ ॥

मे मत्तोऽपि युवामपवर्गं न वव्राथे न वृतवन्तौ ॥ ३९ ॥

वरं दत्वा मयि गते ॥ ४०—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेति सार्द्धकम् । अनघे ! हे सर्वापराधरहिते ! इति तपोनिश्छि-द्रता सूचिता अत एव वां युवयोःसम्बन्धेन युनां प्रतीत्यर्थः । परितः तुष्टः सन् परीतिकर्मप्रवचनीयं वा तच्च वीप्सायां वीप्सा च जन्मभेदेनेति तथैवार्थः । ननु, भक्त्यैव परितोष्यस्त्वं न तु तपसा सत्यं पारम्परिकमेव कारणं तदित्याह, तपसा मत्सन्तोषार्थं प्रयुक्तेन जातायां नवधा साधनभक्तौ श्रद्धा तया जाता या तल्लक्षणा भक्तिस्तया नित्यं हृदि भावितः यत्नेन प्रापितः चकाराद्भिन्नैव यत्नं च प्रेमलक्षणया प्रापितः पुत्रत्व-भावनामय्येवेति ज्ञेयम् अमुना एतेन श्रीकृष्णाख्येन वपुषेति परि-तोषादौ सर्वत्र योज्यम् अमुना वपुषा हृदि भावितः अत एव परि सर्वतो भावेन तुष्टोऽहम् अत एवामुनैव वपुषा प्रादुरासमिति वरदराडिति तैर्व्याख्यातम् । किञ्च तपसोऽधिकफलदाने तत्र चो-त्तरोत्तराधिक्ये च कारणं ज्ञेयम् ॥ ३७ ॥

व्रियतामित्यर्द्धकम् वां युवाभ्यामित्यर्थः । तृतीयायाः षष्ठी मादृशः मत्सदृश एव वृतः न तु साक्षादहं लज्जाविना तथा वरणा-शक्तेरिति भावः ॥ ३८ ॥

(१) मग इति वीर विज० वैष्णवतोषिणी । सुबो ०

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तादृशेन च मद्भावेन युवां केवलं विषयान्तरोत्पादनं नादृतवन्तौ अपि तु तदनादरेण मोक्षाय योग्यावपि मत्प्रसादनेन तं हस्तप्राप्तमपि नादृतवन्तावित्याह—अजुष्टेति । तत्राजुष्टग्राम्यविषयावित्यनेनाहङ्काराऽस्पदद्देहाद्येषो निरस्तः अनपत्यावित्यनेनापत्योपलक्षितममतास्पदाभाव उक्तः ततश्चापवर्गोचरणयोग्यता दर्शिता तदुक्तं "विनिर्धूतमनोमलौ" इति तत्रापि मे भक्त इति प्राप्तिभावना दृढीकृता तदुक्तं वरद्राडिति । तादृशावपि युवां तादृशादपि भक्तो न वव्राथे तत्र क्रमप्राप्तं हेतुं निर्दिशति मोहितौ मम माययेति मम मदीयया मायया झटिति स्वविषयक पुत्रस्नेहरूपया दिकया मायया कृपया बद्धा, मद्विषयकपुत्रोचितलालनेच्छामय्या कृपया तिरस्कृतान्यभावत्वादित्यर्थः । दृष्टान्तस्तु सालोक्यसार्ष्ट्यादिषु प्रसिद्ध एवेति नोक्तः ॥ ३९ ॥

अतः साधिते मयि मदेकार्थवैराग्यादपि शिथिलौ जातौ उत्फुल्लमनस्त्वेन स्वस्य मल्लक्षणपुत्रसम्पत्तियोग्यतेच्छया च विषयानप्यर्जितवन्तावित्याह, गते मयीति । पश्चात् ग्राम्यान् भोगानपि युवां भुक्तवन्तौ यतो युवां प्राप्तमनोरथौ भूतौ युवां प्रतिगते इति वा अत्र टीकायां वरं दत्त्वेत्यध्याहृत्यैव व्याख्यातं दत्त्वेति पाठस्य कुत्राप्यदर्शनात् वरं मत्सदृशमित्यत्र च वरशब्दः कर्मसाधनः ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्ममायया स्वस्वाश्रयशक्त्या सङ्कल्परूपज्ञानाख्या ॥३९-४८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो हे अनघे ! नित्यं भक्त्या हृदि भावितोऽनुध्यातः वां युवयोस्तपसाऽनशनादिरूपेण श्रद्धया च परितुष्टस्सन् वरद्राडहं युवयोः कामदित्सया वरान् दातुमिच्छया अमुना चतुर्भुजादिमता वपुषा प्रादुरासं प्रादुर्भूतोऽस्मि प्रादुर्भूतोऽभवमित्यर्थः । ततः प्रादुर्भूतेन मया वरोऽभिमतोऽर्थः व्रीयतामित्युक्ते सति वां युवाभ्यां शेषषष्ठीयं मादृशः सुतः पुत्रो वृतः याचितः ॥ ३७ ॥ ३८ ॥

ननु, मुक्तिदं श्रीभगवन्तं भवन्तं साक्षात्कृत्य मुक्तिरेवाभ्यां किं न वृता ? इत्यत्राह-अजुष्टेत्यादिना । अजुष्टा असेविताः ग्राम्यविषयाः शब्दादयो याभ्यां न विद्यते अपत्यं ययोस्तौ दम्पती जायापती युवां मम मायया विमोहितावत एव मे भक्तः अपवर्गं मुक्तिं न वव्राथे अननुभूतविषयत्वादनपत्यत्वान्मन्मायामोहितत्वाच्च नापवर्गं वव्राथ इत्यर्थः ॥ ३९ ॥

मत्सदृशं सुतमेव वरं लब्ध्वा युवां मयि गते सति प्राप्तौ मनोरथौ याभ्यां तौ तथाभूतौ युवां ग्राम्यान् भोगान् विषयान् अभुञ्जाथामन्वभूतम् ॥४०॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरद्राट् वरदराजः कामदित्सया अभीष्टदानेच्छया ॥ ३८ ॥

अजुष्टग्राम्यविषयौ अननुभूतमैथुनादिविषयौ ॥ ३९—४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वां युवां परि प्रति तपसा मत्सन्तोषार्थं प्रयुक्तेन जाता साधनभक्तौ या श्रद्धा तया जाता तल्लक्षणा या भक्तिस्तया नित्यं हृदि भावितः प्रेमलक्षणया प्रापितः पुत्रभावना मय्येति ज्ञेयं वां युवाभ्यामित्यर्थः । चतुर्थ्यां षष्ठी तदा वामित्यादि ॥ ३७ ॥ ३८ ॥

अजुष्टेति मम मायया मद्गतपुत्रस्नेहमय्या कृपयेत्यर्थः । मद्विषयस्नेहस्यापवर्गसुखातिक्रमित्वादिति भावः ॥ ३९ ॥

युवां गते प्राप्तमिति मयि वरं लब्ध्वा अत उत्फुल्लमनस्त्वेन तादृशपुत्रार्हसम्पत्तियोग्यतेच्छया च विषयोपार्जनं ज्ञेयम् ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कृते अहं प्रसन्नो जात इत्याह—तदेति । वां युवयोः परितस्तुष्टः सर्वभावेन अहमिति न मदंशः नाप्यहं तस्यांशः परं वपुरिदं प्रदर्शितः आकारोऽयं वपुः पदेन पुत्रत्वं ज्ञापयति अन्यथा तयोः परमस्नेहो न स्यात् अनघे ! इति सम्बोधनं तादृशेपि रूपे इच्छाभावार्थं तदपि च बालरूपं रूपस्य बालिशत्वात् स्थानात् प्रच्युतिर्भविष्यतीति शेषे त्रयं हेतुः तपः श्रद्धा नित्यं परिचर्या च एवमपि बहिर्मुखानां न परितुष्यतीति हृदि भावित इत्युक्तं हृदये सर्वदा मानसपूजादिना भावितः चिन्तितः ॥ ३७ ॥

तदा अहमाविर्भूतो जात इति वदन् आविर्भावस्य फलैकत्वनियमार्थं वरप्रार्थनामप्याह—प्रादुरासमिति । वरान् ददते इति वरदाः अन्ये ब्रह्मादयः यावत्प्रार्थितमेव हि ते प्रयच्छन्ति तेषां राजा वरदराट् स तु ततो बहुगुणमलौकिकं च प्रयच्छति अत एव मादृशगुणतरगो सहमेव वारत्रयं सुतो जात इति वरदराजः आविर्भावे हेतुमाह—युवयोः कामदित्सयेति । युवयोरिति बहुकालतपस्तप्तौ निरूपितौ ताभ्यां बालमेव प्रार्थनीयं तपश्च बहु अत एव मन्निष्ठयोस्तपः स्वाभाविकादपि तपसः अधिकं फलमिति तद्दानार्थं वरदराडुक्तः साधारणेनैव ध्रियतां वर इत्युक्ते तावपि मां साधारणं ज्ञात्वा बालकसौन्दर्येण च सम्मुग्धौ त्वादृशः पुत्रो भूयादिति वृतवन्तावित्याह—मादृश इति, वां युवाभ्यां सुतो भूयादित्यर्थात् ॥ ३८ ॥

मोक्षावरणे हेतुमाह-अजुष्टेति । ग्राम्यविषयः स्त्रीसम्भोगः लौकिकः प्रीतिः स्थितैव सेवा न वृत्तेति न जुष्टो ग्राम्य विषयो याभ्यां वैदिकेनापि लौकिकफलसिद्धिर्भवतीति तत्सम्भवेऽपि लौकिकसिद्धिरिति तन्निषेधार्थमाह-अनपत्याविति । न विद्यते अपत्यं ययोः चकारादन्येपि अगादयो नाऽनुभूता इति सूचितं दम्पतीपदेनोभयोः सहभावो नियत उक्तः अतोऽपि मोक्षस्यावरणं रागस्यानिवृत्तत्वात् स्नुषाणामनिवर्तितत्वात् विरुद्धाश्रमनिष्ठत्वाच्च मोक्षस्यावरणं सर्वतः शास्त्रार्थपरिज्ञानेऽपि यदेतत् वितथं तत्र हेतुः, मोहितो मम माययेति । इयं विक्षेपमाया भगवद्धी-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नित्यप्राप्तस्येत्यस्य नियमेत्यादिनान्वयः । तत्र हेतुः प्राप्तांशेति यथा पाक्षिकतयांशेनाप्राप्ताश्वाभिधानी सर्वांशेन पूर्य्यते तादृशत्वाभावादित्यर्थः । अत्रापि नियमविधिस्तत्सदृश एव ज्ञेयः शनसीति । विध्यभावेऽप्यनुज्ञाविषयायां रागिणामप्यनुज्ञातिक्रमः स्यादेवेति भावः । अथवा लोकइति तथाहि—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र संप्राप्तौ परिसङ्ख्या विधीयते" ॥

अत्र विधिर्यथा "अहरहः सन्ध्यामुपासीत" इति इदं खलु सर्वथैव न प्राप्नोति अयमेवापूर्वविधिरित्युच्यते नियमो यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रेण ऋतस्य याज्ञिकपश्वोः रशनां रज्जुमगृभ्णान् अगृह्णन्नित्यर्थेन गर्दभाश्वाभिधान्योरेकतरस्यां स्वाच्छन्देन प्राप्तायां ग्रहणेन नियम्यते अश्वाभिधानीमादत्त इति परिसङ्ख्या च "पञ्च पञ्चनखा भक्ष्याः" इति अत्र रागप्राप्तेषु प्रायः सर्वेष्वेव मांसयत्सु भक्ष्येषु पञ्चैव परिसङ्ख्यायन्ते तदनुरोधेन तावन्त एवाभ्यनुज्ञायन्ते मात्रं न तु विधीयन्त इत्यर्थः । तत्र नियमे प्राप्यतोऽप्यर्थस्य प्रापणमनर्थकमिति अंशेनापूर्वविधिनाऽन्यनिवृत्तिस्तात्पर्य्यतो भवति । अतः परिसङ्ख्या चात्र पर्यवसिता तन्त्रवार्त्तिके यथोक्तं "अप्राप्तविधिरेवायमतो मन्त्रश्च निश्चितः । परिसङ्ख्या फलेनोक्ता न विशेषः पुनः श्रुतेः" इति अयमश्वाभिधानीविधिरप्राप्तविधिरेव लकारस्यास्यात् तस्मादतो विधेर्मन्त्रार्थश्च निश्चितः अश्वाभिधानीमेवादत्तेति अतोऽत्र परिसङ्ख्यात्वमपि फलेन तात्पर्येण प्राप्तम् ननु, सामान्यतो मन्त्रप्राप्तस्य रशनाद्वयस्याश्वाभिधानीमित्यनेन विशेष एवोक्तः अपरोऽपि ज्ञाप्यत इति वाच्यं तत्राह—पुनः श्रुतेः पुनरुक्तत्वादनर्थकत्वादित्यर्थः । अथ परिसङ्ख्यायामिदं विविच्यते न तावत्परिसङ्ख्याविधिशब्देनाऽन्यनिवृत्तिं वक्ति, तथा सति पञ्चनखभक्षणरूपस्य स्वार्थस्य त्यागः तथान्यनिवृत्तिरूपस्य परार्थस्य कल्पनं ततश्च प्राप्तस्य पञ्चनखभक्षणरूपस्य बाधश्च स्यात् । तस्माद्यादृशं नियमविधौ पाक्षिकतयांशेनाप्राप्ताश्वाभिधानीसर्वांशेन पूर्य्यते रागतो नित्यप्राप्तेषु नियमफले तादृशत्वाभावान्नियमद्वारा तात्पर्य्यतः परिसङ्ख्या भवतीति तस्मादयमर्थः लोके व्यवायादयो जन्तोर्मनुष्यादेर्नित्याः रागत एव नित्यप्राप्ताः । तत्र व्यवायः स्वभावत एव आमिषमद्ये तु मनुष्यस्य परम्पराप्राप्तत्वादिति शेषम् । अतस्तत्र चोदना अपूर्वविधिर्नास्ति किन्तु तेषु रागिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिः क्रियते नियमद्वारा परिसङ्ख्या क्रियते तद्यथा विवाहेत्युपलक्षणं विवाह एव तत्रापि ऋतावेव व्यवायः कार्य्यः । यज्ञ एवामिषसेवा सुराग्रहे सौत्रामण्यामेव मद्यसेवेति । ननु, परिसङ्ख्यात्वे सति व्यवायादौ विधित्वमस्त्येव लिङादिसद्भावात् ततस्ताः कथं निन्दया त्याज्यन्ते तत्राह—आसु व्यवयादिषु निवृत्तिरेवेष्टेति रागप्राप्तत्वादभ्यनुज्ञामात्रं क्रियते । नत्वपूर्वनियमयोरिव शास्त्रप्राप्तत्वादवश्यं कार्य्यत इति निवृत्तावेव तात्पर्य्यमित्यर्थः । ऋतुस्नातायां भार्य्यायां परित्यागदोषश्रवणं तु विध्यतिक्रमात् विध्यनुपपत्तेः । न च वैराग्येणाभ्यनुज्ञातातिक्रमात् तत्राभ्यनुज्ञाया अभावात् किन्तु सत्यप्यनुज्ञातायामन्यस्यां रागादौ तादृश्यां स्वभार्य्यायामरुच्यादिनैवाप्रवृत्तेस्तदतिक्रमात् तस्यो भ्रूणहत्याप्रत्यवायतात्र एवमामिषमद्ययोरपि ज्ञातव्यमिति ॥ ११ ॥ — ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रिया । अनादिसम्परया विभूत्या ऐश्वर्य्येण सतः साधून् अवमन्यन्ते ॥ ९ ॥

दृढतरं प्रबोध्यमाना अपि ते नैव प्रबोधयन्ते इत्याह—सर्वेष्विति । यथा स्वमाकामित्यक्ङ्करत्वम् अभीष्टमित्याराध्यत्वम् ईश्वरमित्यनाराधने सति दण्डदातृत्वं वेदोपगीतं चाति सर्वथा विख्यातत्वं चोक्तं न शृणवत इति केन प्रकारेणेत्यत आह—मनोऽव्यानाऽव्यवायामिषादिविषयायां वार्त्तयेति भगवत्कथायां साद्भिः प्रवर्त्तितायामपि तत्र विषयभोगवार्त्तां बलात् पातयन्तीत्यर्थः । प्रवदन्तीति तदा स्वयमेव प्रकर्षेण वक्तारो भवन्ति ॥ १० ॥

ननु, व्यवायादीनामपि "ऋतौ भार्य्यामुपेयात् हुतशेषं भक्षयेत्" इत्यादिना विहितत्वात् किमिति ते निन्द्यन्ते तत्राह—लोक इति । व्यवायः स्त्रीसङ्गः आमिषमद्ययोर्मांसमदिरयोः सेवा भक्षणानि नित्या रागत एव नित्यप्राप्ताः तत्र व्यवायः स्वभावत एव आमिषमद्यसेवा मानुषस्य कुलपरम्पराप्राप्तत्वादिति शेषम् । अतस्तत्र तासु चोदना शास्त्रविधिर्नास्ति अप्राप्तप्रापणस्यैव विधित्वात् ननु "ऋतौ भार्य्यामुपेयात्" इत्यादिर्विधिरेष एवेति तत्राह, व्यवस्थितिरिति । तेषु व्यवायादिषु विवाहयज्ञसुराग्रहैर्व्यवस्थितिर्व्यवस्थैव यथा यदि स्त्रीमांसमद्यादिकं विना स्थातुं न शक्यते तदा विवाहविषय एव व्यवायः कार्य्यः । यज्ञ एवामिषसेवा सौत्रामण्यां सुराग्रहान् गृह्णातीति श्रुतेस्तत्रैव मद्यसेवा कार्य्येति तत्र तत्रैवाभ्यनुज्ञा दत्ता । ननु, वस्तुतो विधिः अत आसु व्यवायादिसेवासु निवृत्तिरेवेष्टा निवृत्तावेव शास्त्रस्य तात्पर्य्यमिति तथाहि भार्य्यामेवोपेयात् न स्त्रीमात्रम् ऋतावेवोपेयात् नान्यत्र, तत्रापि पञ्चपर्वातिरिक्तसमय एव रात्रावेव पुत्रकामनयैवेति क्रमक्रमतो निवृत्तिरेवाभिप्रेता । अथ "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयत" इत्यस्यार्थः प्रवृत्तिकर्मैकनिष्ठानां मते यथा अत्यन्तमप्राप्तौ विधिः यत्र रागतो विध्यन्तरतो वा सर्वथैवाप्राप्तिर्नास्ति स विधिरुच्यते यथा "अहरहः सन्ध्यामुपासीत" इति माघस्नानं प्रकुर्वीतेति निशि न स्नायात् चन्द्रग्रहे स्नायादिति अत्यन्ताप्राप्तिरहिते स्थले तु विधिर्न भवति किन्तु नियमः परिसङ्ख्या वा तत्र कुत्र वा नियमः कुत्र वा परिसङ्ख्येत्यत आह—पाक्षिके असति नियमः पाक्षिके अंशे असति निन्दा प्रायश्चित्तादि सति नियमः यथा "ऋतौ भार्य्यामुपेयात्" इति ऋतुसमये हि भार्य्यायां गमनं च रागप्राप्तं तत्रागमनांशे निन्दितो यथा—

"ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इति स्मृतेः । अतोऽत्र नियम एव "ऋतौ भार्य्यामुपेयात्" एवेति ऋतौ भार्य्यागमनायोगो न कर्त्तव्य इति फलितार्थः । अथ तत्र च तन्मध्य इत्यर्थः । अन्यत्र च अन्यत्र तु अन्यस्मिन् भागे असति सति परिसङ्ख्या यथा "पञ्च पञ्चनखा भक्ष्याः" इति अत्र रागप्राप्ते पञ्चपञ्चनख्या भक्षणे च निन्दा न

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रूयते । किन्तु तदितरभक्षण एव अतः पञ्चैव पञ्चनखा भक्ष्या मान्ये इति परिसङ्ख्यैव अभ्यनुज्ञादान मात्रमतो मांसमात्रस्याप्यभक्षणे नास्ति दोष इत्यायातम् अथ निवृत्तकर्मैकनिष्ठानां मतेऽर्थो यथा अत्यन्तं सर्वथा अप्राप्तौ विधिः यथा"अहरहः सन्ध्यामुपासीत"इत्यादि पाक्षिके प्रापणे सति विधित एव एकत्र कोटौ पाते तस्यामन्यत्राप्राप्तौ च सत्यां नियम इत्यर्थः। यथा"इमामगृभ्णान् रशनामृतस्य"इति मन्त्रेण ऋतस्य यज्ञियपशोरशनां रज्जुमगृभ्णाञ्जीमामित्येकत्रवचनेन गर्द्दभाश्वाभिधान्योरशनयोरेकतरस्यां प्राप्तिर्वाच्यते । तत्र किमश्वाभिधान्यामुतगर्द्दभाभिधान्यामिति संशये नियम्यते आश्वाभिधानीमादत्त इति अश्वाभिधानीमेवाद्द्यान्न गर्द्दभाभिधानीमिति नियमे निषेधो वाक्यार्थः तदेवमपूर्व्वविधिरिति नियमविधिरिति द्वावप्येतौ विधी एव का खलु परिसङ्ख्येत्यपेक्षायामाह, तत्र च तन्मध्येऽपीत्यर्थः अन्यत्र विधिः इतरत्र रागस्थले प्राप्तौ सत्यां परिसङ्ख्या विधीयते । यथा रागतः सर्व्वमांसभक्षणप्राप्तौ पञ्चपञ्चनखेतरमांसानि सर्व्वाण्येव भक्ष्याणि भोक्तुः प्रत्यवायजनकानीत्यर्थः मांसभक्षणे पञ्चपञ्चनखमांसान्येव परिसङ्ख्यातानि अभ्यनुज्ञातानीति तत्रैव न प्रत्यवायः परिसङ्ख्याया अभ्यनुज्ञादानमात्रार्थत्वात् सर्व्वमांसाभक्षणे एव शास्त्रतात्पर्य्यं एवमेव मातृर्मेवाभिगच्छेन्न परस्त्रियाम् ऋतावेव गच्छेन्नान्यत्रेत्यभ्यनुज्ञामात्रदानात् स्त्रीमात्रानभिगमन एव शास्त्रतात्पर्य्यम् ऋतुस्नातायां भार्य्यायामगमनदोषभयं तु न विध्यतिक्रमात् विध्यनुपपत्तेरिति सन्दर्भः तस्मामरुच्या द्वेषादिना वा तदनभिगमन एव दोषभयमिति स्वामिचरणाः ॥ ११ ॥

तथा धनस्यापि इष्टोपभोगार्थमेव विनियोगादबुधा एव एते इत्याह—धने चेति । धर्म्म एव एकमुत्कृष्टं फलं यस्य तत् यतो धर्म्मात् सविज्ञानमपरोक्षज्ञानसहितं परोक्षज्ञानं भवेत् । अनु अनन्तरमेव शान्तिर्मोक्षो यस्मात्तत् एवम्भूतं धनं गृहेषु देहाद्यर्थे युञ्जन्ति ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानित्वं विहस्त्यच्युतप्रियानिति वाक्यार्थं च प्रपञ्चयति--श्रियेति श्रीः गृहकाञ्चनपाश्वादिरूपा विभूतिः आणिमादिरूपा अयादिना जातस्मयेन उत्पन्नेन मदेन अन्धधियो मलिनबुद्धयः खलाः सद्धेश्वरान् हरिसहितान् हरेः प्रियान् हरिर्वा प्रियो येषां तान् अतः साधून् निरपराधान् अवमन्यन्ति अवजानन्ति ॥ ९ ॥

किञ्च, कामुकत्वेन स्वोपास्यरत्यादिविषयाणां मनोरथानां वार्त्तयोपलक्षिताः अबुधाः वेदार्थानभिज्ञाः अत एव वेदोपगीतं वेदार्थभूतमीशं न प्रवदन्ति न च शृण्वते न शृण्वन्ति इति बुध्यस्तेषां मोहः कथम्भूतं ? सर्व्वेषु चराचरेषु अवस्थितम् "तत्सृष्ट्वा तदेवानु प्राविशत् अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिवेदं प्रपठन्तोऽपि तं न जानन्ति, अहो तेषां मोहाभिभूततेति भावः । पुनः कथम्भूतम् आत्मानामिति अन्तर्यामिणमित्यर्थः । एष ते आत्मान्तर्य्यामि"इति श्रुतेः । असङ्गतामाह, यथा खमिति । अमीष्टं परमपुरुषार्थरूपम् ॥ १० ॥

नन्, कामुकाः उपासितस्त्रिय इत्येवं पुनःपुनः स्त्रीसङ्गः निन्द्यत्वेनोक्ताहनः स किमनुपादेय एवेत्यत्र न केवलं स्त्रीसङ्गमात्रं वर्ज्यमपि तु स्त्रीसङ्गामिषभक्षणमद्यपानानि वर्ज्यानि तत्र तु नियमविधिद्वारा परिसङ्ख्याविधिवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियते इत्याह—लोके इति । लोके संसारे जन्तोः प्राणिमात्रस्य व्यवायामिषमद्यसेवास्तु नित्याः रागत एव नित्यप्राप्ताः तत्र तासु स्त्रीसङ्गमांसमद्यसेवासु चोदनाविधिर्नास्ति, अतः स्त्रीसङ्गमांसभक्षणमद्यपानानि वर्ज्यानि । ननु, "ऋतौ भार्य्यामुपेयात् हुतशेषं भक्षयेत् सौत्रामण्यां सुराग्रहान् गृह्णाति"ति विधिवाक्यानि सन्तीत्यत्रोच्यते अप्राप्तस्य प्रापको विधिरपूर्व्वविधिः यथा व्रीहीन् प्रोक्षतीति एवमुक्तवाक्यैर्न स्त्रीसङ्गमांसभक्षणमद्यपानानि विधीयन्ते, स्त्रीसङ्गादीनां रागत एव प्राप्तत्वात् अत उक्तवाक्यानि अपूर्व्वविधिरूपाणि न किन्तु मन्दाधिकारिणां पशुवत् स्वाभाविकप्रवृत्तिनिवृत्तये अभ्यनुज्ञामात्रमेभिर्नियमविधिरूपैर्वाक्यैः क्रियते, एतदेवाह—व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरिति । तेषु स्त्रीसङ्गादिषु "ऋतौ भार्य्यामुपेयात्" इत्यादिवाक्यैर्विवाहादिभिः व्यवस्थितिर्नियमः क्रियते । तथाहि पक्षे प्राप्तस्य प्रापको विधिर्नियमविधिः यथा व्रीहीनवहन्तीति अनेनावघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु अवघातं विहायोपायान्तरेण यदा वैतुष्यं कर्त्तुमारभते तदा अवघातस्य तेनांशेनाऽप्राप्तत्वेऽनेनाप्राप्तांशपूरणमेव क्रियते तदोपायान्तरं परित्यज्यावघातेनैव वैतुष्यं कुर्य्यादिति नियमः । एवं विवाहविषये एव स्त्रीसङ्गः कर्त्तव्यः यज्ञे एवामिषसेवा सौत्रामण्यामेव मद्यसेवेति नियमः । ननु, नियमविधिनाप्यावश्यकत्वं व्यवायादीनां सिद्धमतो निन्दा न युक्तात आह—आसु निवृत्तिरिष्टेति । व्यवायादीनां नित्यप्राप्ततयाऽप्राप्तांशाभावात् नियमविध्यसम्भव आसु व्यवायामिषमद्यसेवासु निवृत्तिः परिसङ्ख्यैवेष्टा उभयप्राप्तावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः यथा "पञ्च पञ्चनखा भक्ष्या" इति पञ्चनखाः "शशकः शल्लको गोधा कूर्म्मः खड्गी च पञ्चम" इति इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वान्न नियमपरमप्राप्तांशाभावात् अतो पञ्चनखभक्षणनिवृत्तिपरं तद्वदृतौ भार्य्यामुपेयादित्यादीन्यपीतरव्यावृत्तिपराणि । ननु, तर्हि व्यवस्थितिरित्युक्तिरसङ्गता स्यादत्रोच्यते परिसङ्ख्याविधिः श्रुतितोऽन्यव्यावृत्तिं न करोति यतः सा दोषत्रयग्रस्ता दोषत्रयं च श्रुतहानिरश्रुतकल्पनाप्राप्तबाधश्चेति श्रुतस्य पञ्चनखभक्षणस्य त्यागात् अश्रुतापञ्चनखभक्षणनिवृत्तेस्तु कल्पनात् प्राप्तस्य पञ्चनखभक्षणस्य बाधात् तस्मात्कचित्प्राप्स्यतोऽप्यर्थस्य प्रापणमनर्थकमित्यपूर्व्वविधिद्वारा निवृत्तिः फलिता भवति । यथा "इमामगृभ्णान् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र रशनालिङ्गतो गर्द्दभाश्वाभिधानीरशनाद्वये प्राप्स्यतो मन्त्रस्यापूर्व्वविधिद्वारा परिसङ्ख्योच्यते तदाह तन्त्रवार्त्तिककारः"अप्राप्तेर्विधेरेवाथमतो मन्त्रस्य निश्चितः। परिसङ्ख्या फलेनोक्ता न विशेषः पुनः श्रुतेरिति" पञ्च पञ्चनखा भक्ष्या इत्यादिन्तु नियमविधिद्वारा परिसङ्ख्याविधित्वं भवति तद्वदृतौ भार्य्यामित्यादीनामपि नियमद्वारा परिसङ्ख्याविधित्वात् रागिणामभ्यनुज्ञामात्रं तैः क्रियते । ननु, यद्युक्तवाक्यैः रागिणामभ्यनुज्ञामात्रं क्रियते तर्हि—

अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४१ ॥

तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४२ ॥

तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम् ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ! ॥ ४३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लौकिकी साधारणी तु शास्त्रान्निवर्तत एव अपवर्गं न च वव्राते जन्ममरणानां समाप्तिरपवर्गः । यदि साक्षादपवर्गमप्यप्रार्थयिष्यत् भक्तिं प्रार्थयेयुस्तथाप्यपवर्गो भवेत् सापि न प्रार्थितेति वै निश्चयेन अपवर्गो न प्रार्थितः । म इति पाठे मत्सम्बन्धी वा प्रमेयबलेन अपवर्गं न प्रार्थितवन्त इत्यर्थः ॥ ३९ ॥

वरदानमर्थसिद्धमिति तदनुक्त्वा भगवन्निगमे जाते प्रथमतो रागनिवृत्त्यर्थं ग्राम्यभोगा भुक्ता इत्याह—गते मयीति । मत्सदृशं सुतं वरत्वेन प्राप्य तन्निर्द्धारं कृत्वा ग्राम्यभोगेन तत्र विघ्नो भविष्यतीति शङ्कामकृत्वा ग्राम्यान् भोगान् अभुञ्जाथां यतो युवां प्राप्तमनोरथाविति भिन्नं वाक्यं नैश्चिन्त्यं हेतुत्वायमुक्तं पुनः युवामिति महता संस्काराद्बोधं सम्मत्यर्थम् ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मदीयव्रतरूपतपःश्रद्धाभक्तिपूर्वकं निरन्तरं मद्ध्यानमेव मत्परितोषकारणमित्याह—तदेति । अमुना अनेन चतुर्भुजेन अत्र भक्त्येति श्रद्धयेति नित्यमिति भावित इति पदत्रयाधिक्येन नेयं तपोयोगाङ्गभूता भक्तिर्व्याख्येया सा तु मदात्मनो स्थैर्ये तावन्मात्रेणैव सिद्ध्येदतस्तत्पृथग्भूता प्रेमहेतुभूतैव ततश्च तपोयोगावेवाधिकावनयोरैश्वर्यज्ञानहेतुभूतयाविति । केचिदाहुरन्ये तु नित्यसिद्धयोर्देवकीवसुदेवयोः प्रेमाऽप्यैश्वर्यज्ञानमिश्रो नित्य एव तदंशयोः पृश्निसुतपसोर्ज्ञानयोगौ स्वांशिनोस्तयोः किञ्चित्करावित्याहुः, अत्र चिन्तित इत्यनुक्त्वा भावितो भावविषयीकृत इत्यनेन रागभक्तिरवगम्यते ॥ ३७—३८ ॥

मायया पुत्रस्नेहमय्या "वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः" इत्युपरिष्टादुक्तेः पुत्रस्नेहोऽपि मायाशब्देनोच्यते मोहितौ तदास्वादानन्देन विचित्रीकृतौ ॥ ३९ ॥

ग्राम्यान् भोगानिति तादृशपुत्रोत्पत्तीच्छयेति भावः । "व्यवायो ग्राम्यधर्मश्च" इत्यमरः । पृश्निगर्भ इति सोऽयं त्रेतायुगावतारो लक्ष्यते "विष्णुर्यज्ञः पृश्निगर्भः" इत्येकादशे तत्रासङ्गिकोक्तेः ॥ ४० ॥ ४१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यां युवयोः अमुना वपुषा प्रादुरासमित्यग्रिमेणान्वयः ॥ ३७ ॥



वरदराट् आरम्भपर्यन्तदातृत्वेन वरदेषूत्तमः वां युवाभ्याम् मां दृष्ट्वा अथ मे पुत्रो भवेति साक्षात्कर्तुमशक्यत्वात् अहमेव सुततया वृत इत्यर्थः ॥ ३८ ॥

तत्त्वावबोधत्वे पुत्रत्वेन वरणे कोऽधिकारः ? इत्यत आह—अजुष्टग्राम्यविषयाविति । दम्पती सहचरावपि अजुष्टग्राम्यविषयौ असेवितलौकिकसुखौ ऐहिकसुखत्यागिनावित्यर्थः । अनपत्यौ अनुत्पादितपुत्रौ आमुष्मिकसुखसाधनपुत्रानुत्पादनेन आमुष्मिकसुखत्यागिनावित्यर्थः । एवंभूता अपि मुक्तिमिच्छन्ति तेऽपि प्रेष्ठं च माह—अपवर्गं मोक्षमपि न अवृणीतां एवंभूतौ युवां परमोत्तमाधिकारिणौ मम विषयिकया मायया वयुनापर्यायया हरिरावयोः सुतो भवत्विति वासनया मोहितौ सर्वोपरि तं पुत्रं कर्तुं प्रवृत्तावित्यर्थः । अहो युवयोर्मयि स्नेहातिशयः एतद्देव वारंवारं सुतभावे हेतुः ॥ ३९ ॥

युवयोर्वाञ्छितं स्वीकृत्य मयि गते ॥ ४०—४१ ॥

---

### भाषा टीका ।

ऐसे तप श्रद्धा और भक्ति सों नित्य हृदय में तुम दोनों जब हमारी भावना करत रहे तब मैं तुमारे ऊपर प्रसन्न भयो । और हे अनघे ! शुद्धान्तःकरण वारी ! तब वरदराज ( वर देन वारों को राजा ) मैं तुमारी कामनान को पूर्ण करवे के तांई याई शरीर से प्रकट भयो और मैंने जब तुम सों कही कि वर मांगो तब तुम दोनों ने येही वर मांगो कि तुमारे सदृश हमारे पुत्र होवै ॥ ३७ ॥ ३८ ॥

वा समय में ग्राम्य (लौकिक) विषयन को तुमने सेवन नहीं कियौ हो, और विना सन्तान के तुम दोनों पति पत्नी वा समय रहे, तासूं मेरी माया सों मोहित होकरकें तुमन ने मोसूं मुक्ति नहीं मांगी ॥ ३९ ॥

मेरे गये पीछे मेरे सदृश पुत्र रूप वर पायकें, अपने मनोरथ को प्राप्त होकें, तुम दोनों ग्राम्य ( लौकिक ) भोगन को भोगत भये ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अदित्यां कश्यपाच्चाहम आसेति यत्तदपि तद्रूपयोर्युवयोरहमेव पुनरासमित्यर्थः ॥ ४२—४३ ॥

**एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ।**
**नान्यथा [1]मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्राक्प्रथमं तावदेतद्रूपं मे जन्मेति स्मरणाय ज्ञानाय दर्शितं मद्भवं मद्विषयम् अनन्तरं त्वदिच्छया बालोऽपि भविष्यामीति भावः ॥४४॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहं तु भवद्भ्यां तदुक्तिचातुर्यच्छलित इव पश्चाद्विचार्य भवन्मनोगतमेव कृतवानित्याह—महद्वेति । शीलं सच्चरित्रम् औदार्यं महत्त्वं गुणास्तयोः कार्यं कारुण्यादि: तैरस्मिनेव समं तुल्यं स्मृतः ख्यातः श्रुत इति पाठः क्वचित् सोऽयमेव त्रेतायुगाधिष्ठाता यमुखेति लक्ष्यते "विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः" इत्यादिकं श्लोकावशे तत्प्रसङ्गतः श्रूयते ॥ ४१ ॥

तयोरिति तैर्व्याख्याते तत्र तदपीत्यादौ तदपि ममैव पुनरदितित्वमित्यर्थः । वामन आसेति यदितिं उपेन्द्र इति विख्यातो "वामनत्वाच्च वामनः" इति विख्यातो यः स आसेति यदित्यर्थः अस्तेर्लिटि रूपं भ्वादेशाभाव आर्षः । यद्वा, तथा तथा विख्यातः सन् यः कश्यपाददित्यामास बभूव सोऽहमेव तद्रूपयोर्युवयोरास बभूवेति ॥ ४२ ॥

येन पुरा वराय प्रादुरास तेनैवेति अत एव पृश्निगर्भादित्वे तेनैव वपुषेत्यनुक्तत्वात् न तु तदानीमधुनैव स्वयमेव किन्त्वंशेनैवेति "एते चांशकलाः पुंसः" इत्याद्युक्तेः "पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः" इत्यत्राप्येतदेव गीर्देव्या सूचितमस्ति अत एव वै निश्चये अथ कार्त्स्न्ये तृतीय एव भवे तत्सदृशसुतप्राप्तिलक्षणवरस्य परमपूर्णत्वापेक्षया च सत्यं मे व्याहृतमित्युक्तम् ॥ ४३ ॥

भवत्यस्मिन्निति भवो विषयः अहं विषयो यस्य तज्ज्ञानं निर्णयो मनुष्यरूपेण न स्यात् जन्यत इति चित्सुखपाठः यद्वा यच्चोक्तं रूपं चेदमित्यादि तत्राह एतच्चतुर्भुजाकारं यद्रूपं दर्शितं तत्तु वरदानमारभ्य प्राचीनतदाकारप्रादुर्भावत्रयस्मरणायैव न तु प्राधान्यापेक्षया नराकृतिपरब्रह्मत्वेनैव स्वयं भगवतो मम तत्र तत्र प्रतिपादनादित्यर्थः । किञ्च अन्यथा प्रकारान्तरेण मम भवो जन्म तत्प्रतीतिर्यत्र तज्ज्ञानं न जायते केनात्र प्रकारान्तरं तदेवाह—मर्त्यस्य द्विभुजत्वादिना प्राकृतमनुष्यस्येव लिङ्गं चिह्नं यत्र तेन गूढेन नराकृतिपरब्रह्मरूपेणेत्यर्थः । तस्माच्चतुर्भुजद्विभुजतया क्रीडतो मम मुख्योऽपि तदाकारः प्रथमं न दर्शित इति भावः । मुख्यत्वञ्चास्य दर्शितम् "एकोऽसि प्रथमम्" इत्यादि "तदमितं ब्रह्माद्वयं शिष्यते" इत्यन्तब्रह्मवाक्ये न चान्तर्न बहिर्यस्येत्यादि श्रीशुकवाक्ये "गोप्यस्तपः किमचरन्" इत्यादि श्रीशुकदेवेनापि स्वयमनुमोदमानेनानूदिते मथुरापुरस्त्रीवाक्ये "यन्मर्त्यलीलौपयिकम्" इत्यादिश्रीमदुद्धववाक्ये च ॥ ४४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदाऽहं रूपादिभिर्गुणैः समं मत्सदृशमन्यतममदृष्ट्वा "न तत्समश्चाभ्यधिकश्च दृश्यते" "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इत्युक्तरीत्या मत्सदृशपुरुषान्तराभावं दृष्ट्वाऽहमेव वां युवयोः सुतोऽभवं तदाऽहं पृश्निगर्भ इति स्मृतः पृश्नेस्तव गर्भभूतत्वात्तथा प्रसिद्धः ॥ ४१ ॥

तयोः पृश्निसुतपसोरेवानन्तरजन्मनि कश्यपादितिरूपेण जातयोर्वां युवयोरथ कश्यपाददित्यामहमासं पुत्रोऽभूवम् उपेन्द्र इति विख्यातः प्रसिद्धः इन्द्रानुजत्वादिति भावः । तथा वामनत्वाच्च खर्वमूर्तित्वाद्वामनश्चेति विख्यातोऽभुवम् ॥ ४२ ॥

एवं जन्मद्वयमुक्त्वाथ तृतीयं जन्मदमेवेत्याह—अस्मिन् तृतीये भवे जन्मनि तयोरेवादितिकश्यपयोरेव तद्रूपेण जातयोर्युवयोः तेनैव चतुर्भुजादिमता वपुषा भूयोऽहं जातः हि सति मे मम व्याहृतं भाषितं सत्यमेव हि ॥ ४३ ॥

वां युवाभ्यामेतच्चतुर्भुजादिमद्रूपं दर्शितं किमर्थं ते तत्प्राग्जन्मस्मरणाय पूर्वमप्यावयोरेव पुत्रोऽयम् इति ज्ञापनार्थमन्यथा प्रदर्शितरूपदर्शनाभावे च मद्भवज्ञानं मदवतारज्ञानं मर्त्यानां युष्माकं न जायते मद्भवमिति पाठे मद्विषयकं मदवतारविषयकमिति यावत् ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शीलं वृत्तम् औदार्यं माहात्म्यम् ॥ ४१ ॥

वामनत्वात् सुन्दरत्वात् ह्रस्वत्वाद्वा ॥ ४२ ॥

तृतीये भवे जन्मनि ॥ ४३ ॥

मद्भवज्ञानं मज्जन्मविषयज्ञानं मर्त्यलिङ्गेन मनुष्यशरीरेण ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महद्वेति शीलं सच्चरित्रम् औदार्यं महत्त्वं गुणाः कारुण्यादयः तयोः कार्याणि ॥ ४१ ॥

या तथाऽतितुरस्था अभवन् ता द्वारेऽपि श्रीवसुदेव आगते सति विवृता इति, द्वयोरन्वयः तदंशस्यैव तत् साम्यात् पृश्निगर्भादिरूपद्वयेन पूर्वमाविर्भावः तथाप्यपरितोषात् तृतीये स्वयमेव स्वयं तावदत्रैव तेनैव वपुषेत्युक्त्या गम्यते ॥ ४२—४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्यपि युवाभ्यां भ्रमादेव याचितो वरस्तथाप्यविद्यमानं न देयं कृत्रिमं तु न सम्भवति सर्वभावेन स्वस्य त्रैरूप्ये श्रुतिविरोधो मर्यादाभङ्गश्च स्यात् अदानेऽपि तथा साक्षाद्वस्य भेदसहिष्णुत्वेऽपि तयोराकार एव तात्पर्यमिति तात्पर्यविरो-

---

(१) मद्भवज्ञानम् इति वीर० ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धामाभावात् तात्पर्यज्ञापकं वचनमिति जीववाक्यत्वाद्यथाश्रुतं वचनं बाधित्वा अहमेव पुत्रो जात इत्याह—अदृष्ट्वेति । यद्यपि मत्तोऽन्ये केचन सम्भवन्ति मायया सृष्टास्तेषामपि मत्सत्तयैव सत्तेति सर्वात्मनान्यतमत्वं नास्ति असतः सत्ता नाङ्गीक्रियत इति लोके अदृष्ट्वेत्युक्तं यद्यपि कृत्रिमेपि रूपसाम्यं शक्यतं कर्तुं तथापि शीलौदार्यगुणाः आत्मान्तःकरणनिष्ठाः अलौकिका अनितर्कनीया इति विशिष्टस्य मिलितस्य वा अदर्शनमेव अतः अहं सुतो वामभवम् उभयोरपि क्रमेण प्रादुर्भूत इत्यर्थः । "स एकधा भवति द्विधा भवति" इत्यादिश्रुत्या तथा तस्य भवने न कोपि विरोधः जन्मैव मुख्यमिति पृश्निगर्भ इति न तत्राप्नैव लोक प्रसिद्धिरुक्ता स्मृत इति प्रमाणम् ॥ ४१ ॥

अपवर्गस्याप्रार्थितत्वात्पुनर्जन्मान्तरं जातं तस्मिन्नपि जन्मनि तयोस्तुल्यत्वात् पुनरहं पुत्रो जात इत्याह—तयोर्वामिति । तयोरेव युवयोः पुनरेवाहं स्वस्वल्पवयस्का पुनरेवाहं जातः तयोर्जन्मान्तरे अदितिकश्यपत्वं तदाह—अदित्यामास कश्यपादिति । यद्यप्यत्र अदितिनाम्नि इति वक्तव्यं तथापि उपेन्द्र इत्येवं लोके विख्यातः नामान्तरप्रसिद्धौ हेतुमाह—वामनत्वादिति । द्वितीये जन्मनि नामद्वयम् उपेन्द्रो वामन इति ॥ ४२ ॥

पुनस्तृतीयं जन्म तयोर्जातं तत्राप्यहमेव पुत्रो जात इत्याह—तृतीये ऽस्मिन्निति । अयं परिदृश्यमानो भवस्तृतीयो भवति अत्रापि नामद्वयं मुख्यं तृतीयस्थाने बह्विति देवकीनन्दन इति च मुख्यं तदग्रे वक्ष्यामः पूर्वयोर्भवयोरूपभेदोऽस्ति तृतीये तु जन्मनि तेनैव वपुषा तयोरेव भूयो जातः । एवं वारत्रयमत्रते हेतुमाह—सत्यं मे व्याहृतमिति । यदि कस्मिन्नपि जन्मनि तत्रान्तरभावे भगवान् पुत्रो न भवेत् तदा वाक्यम् असत्यं स्यात् पूर्वदेहस्य त्यक्तत्वात् तत्पुत्रो न पुत्रो भवति व्यवहाराभावात् प्रमाणाभावाच्च अतः पुनर्जन्मान्तरे पुत्रत्वेन भाव्यम् अग्रे तु जन्माभावात् पुत्रत्वाभावः सतीति सम्बोधनं सन्माननार्थं सैव पतिव्रता भवति या कल्पादौ यं पतिं प्राप्नोति कल्पान्तपर्यन्तं सर्वजन्मसु तमेव चेत्प्राप्नोति तस्याश्च पुनर्धर्माभिज्ञानं च शास्त्रे निरूपितं या प्रथमं नाभ्रियते मृते म्रियेत तादृशीत्वमिति ज्ञापयति मोक्षार्थं व्यभिचारिण्याः स्त्रियास्तु न मुक्तिः अतः सर्वदोषपरिहारार्थं सतीति सम्बोधनमन्ते निरूपितम् ॥ ४३ ॥

एवं पुत्रत्वे हेतुमुक्त्वा तादृग्रूपेणाविर्भावे हेतुमाह—एतदिति । वां युवयोरर्थे एतत्पूर्वानुभूतं रूपं दर्शितं सम्बन्धिदर्शनेन सम्बन्धिनः संस्कार उद्बुद्धो भवति एतद्विषयको लुप्तोपि संस्कारश्चोद्बुद्धो भवति सांनिध्यासर्वज्ञतायां तु वैराग्यं स्यात् तदा अविहितभक्तिरसो नानुभूयेत रूपेण तदुद्बोधने तु तत्कालमात्रस्यैव स्मरणं वाक्यात् ज्ञानं तु प्रत्यक्षात् दुर्बलमिति न काप्यनुपपत्तिः प्राग्जन्मनोः प्रथमजन्मन एव वा स्मरणाय एतावता क्लेशेनायं भगवान् पुत्रो जात इति केवलवाक्ये तु भगवतो माहात्म्यमुच्यमानं शास्त्रार्थपरं स्यात् तदाह—अन्यथा रूपप्रदर्शनव्यतिरेके केवलमुच्यमाने मर्त्यलिङ्गे रूपे मानुषशरीरे मद्भवं ज्ञानं न जायते साक्षात् भगवानयमिति प्रदर्शिते तु रूपे उच्यमानं ज्ञानमनुभवारूढं भवति ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अदित्यां कश्यपादहमासमिति यत्तदपि तद्रूपयोर्युवयोरहमेव पुत्रासमित्यर्थः ॥ ४२ ॥

भवे जन्मनि तेनैव चतुर्भुजेन अहं जात इति प्रथमे जन्मन्यहं पृश्निगर्भः द्वितीयेऽहं वामनः तृतीयेऽस्मिन्नहमेवेत्यसमञ्जसमात्रत्वाच्यत्वेन समैव पूर्वत्वं तयोः मदंशत्वमिति बोधितम एवं त्वमेव पूर्वसर्गेऽभूः पृश्निरिति न तु पृश्निरेव त्वमित्युक्त्वा युवामिति पुत्रभावेन नराकृति परब्रह्म भावेन वा कृतस्नेहौ सकदेव वा चिन्तयन्तौ परां प्रकटलीलात् उत्तरामप्रकटलीलां पूर्वस्यादितामंशत्वं देवकीवसुदेवयोरस्तित्वं च सति हे कोविदे "सन् सुधीः कोविदो बुधः" इत्यमरः ॥ ४३ ॥

मयि भवतीति मद्भवं मद्विषयं मर्त्यलिङ्गेन मयेत्यहं तु स्वयं परिपूर्णस्वरूपो मर्त्यलिङ्गो द्विभुज एव नराकृतिपरब्रह्मत्वादिति भावः ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तयोः पृश्निसुतपसोः अदितिकश्यपरूपयोः युवयोः अदित्यां कश्यपात्पुनरहमासमिति शेषः स च ममावतारः उपेन्द्र इति विख्यातः वामनत्वाद्ध्रस्वत्वाच्च वामनः आसेति योजना ॥ ४२ ॥

तयोः पृश्निसुतपसोः वां देवकीवसुदेवरूपयोः युवयोः ॥ ४३ ॥

एतद्रूपं वां युवयोरर्थे प्राग्जन्मस्मरणाय मे मया दर्शितम् प्रथमजन्मनि मय्येवापत्यतया वृतस्तथा प्रासङ्गः स एवाधुना प्राप्तः इति युवयोः स्मृत्युद्बोधनाय दर्शितमित्यर्थः अन्यथा प्रभुत्वख्यापनाय न दर्शितम् येषां पुत्रतया अकिंरसास्वादनाय प्रवृत्तोऽस्मि तेषु किंप्रभुत्वख्यापनेनेति भावः । नन्वयमावयोः पूर्वजन्मनि पुत्रोऽभूदिति प्राग्जन्मस्मृतिरपि भवद्दर्शने जातैव न जाता किन्तु "त्वमेव पूर्वसर्गे भूः" इत्याद्युपदेशेनोत्पादिताऽऽह, मर्त्यलिङ्गे मनुष्यदेहे उपलक्षणमेतद्वा दितामं मनुष्यादिदेहेषु मद्भवं मद्विषयकं ज्ञानं न जायते उपदेशं विनेति शेषः ॥ ४४ ॥

---

भाषा टीका

मैंने भी शील औदार्य आदि गुणन से मेरे बरोबर जगत् में और कोई को नहीं देखके वा समय पे मैं तुमारो पुत्र भयो तव मेरो नाम पृश्नि गर्भ ऐसो विख्यात भयो ॥ ४१ ॥

फिर दूसरे जन्म में तुम दोनों अदिति और कश्यप भये, तब वा समय हम अदिति में कश्यप सों उपेन्द्र नाम सों विख्यात होके उत्पन्न भये, और बहुत छोटे होवे तें वामन कहाये ॥ ४२ ॥

ता पीछे अब या तुमारे तीसरे जन्म में फिर भी तुम दोनोंहसों उत्पन्न भयो हूं काहे सों, कि—हे सति ! मैंने तुमको प्रथम जन्म में सत्य वर दियो तासों तीनवार सत्य कह्यो ॥ ४३ ॥

युवां मां पुत्रभावेन ब्रह्मभावेन चाऽसकृत्।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम्॥४५॥
(यदि कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय।
मन्मायामानयाशु त्वं यशोदागर्भसम्भवाम्॥)
श्रीशुक उवाच।
इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः॥४६॥

भाषा टीका।

ये जो तुमकों मैंने रूप दिखायो सो तौ पहिले जन्म के स्मरण के अर्थ दिखायो, अन्य प्रकार सों अर्थात् मनुष्य रूप लेकें प्रकट होवे सों मेरे जन्म को ज्ञान नहीं होवे है तासों मैं या रूप सो प्रकट्यो॥४४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, त्वयि प्रसन्नेऽपि कथमावयोः पुनः पुनर्जन्मेत्यतःपरं न भविष्यतीत्याह–युवामिति॥४५—४६॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

युवामिति। वाशब्द उपमार्थे विकल्पे वा स्वरूपेण गुणेन च कृष्णत्वमत्वान्मुख्यत्वेन भगवानेवात्र ब्रह्म तादृशभावेन कृतस्नेहौ सन्तौ मुहुश्चिन्तयन्तौ भावद्वयस्य तुल्यत्वं च विषयमाहात्म्यात् परां मद्गतिं परमवैकुण्ठं तद्गमनं च कश्यपादितिभ्यामेकीभूयाधिकारान्ते क्षेमम् अन्यत्तैः तत्रावतारिकायाम् इति कथमित्यन्वयः। अत इत्यादिस्तु सिद्धान्तः अथवा तदेवमपि युवां साधकाविति न मन्तव्यं न च पुनर्मत्प्राप्तौ शङ्का कार्या यतः "एते हि यादवाः सर्वे मद्गणा एव भाविनि" इत्यादि पाद्मकार्त्तिकमहात्म्यवचनात् "यथा सौमित्रिभरतौ यथासङ्कर्षणादयः। तथा तेनैव जायन्ते निजलोकाद्यदृच्छया॥ पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परं। न कर्मबन्धनं जन्म वैष्णवानां च विद्यते" इति पाद्मोत्तरखण्डवचनात् मदीयतत्तन्महामन्त्रमज्जन्माष्टमीपूजादिपटलानुसाराच्च युवां नित्यमेवैतादृशौ तथाऽपि ममेव युवयोरपि मत् प्रेम्णैव मत्प्रेमविशेषसमाराधनप्रचारार्थं तत्र तत्र स्वांशेन सम्प्रति स्वयमेव चावतरणं लीलामात्रम् एतदेवोक्तं "त्वमेव पूर्वसर्गेऽभूः पृश्निः" इत्यादि तत एवानन्तरमपि मत्प्राप्तौ न साधनवैशिष्ट्यापेक्षत्वं किन्तु तदपि पूर्ववदेव मत्प्राप्तिस्तु अत एवेत्याह, युवामिति। पुत्रभावेनेति, भाववैशिष्ट्येन तथा मद्भाविर्भाववैशिष्ट्येन चेत्यर्थः। ब्रह्मभावेनेति भावसामान्येन भगवन्मन्त्रतयाविर्भाव समाधाने चेत्यर्थः। वेत्यनुकल्पे "पितरौ नान्वविन्देताम्" इत्यादिना "पितरावुपलब्धार्थौ" इत्यादिना "अहो भाग्यमहोभाग्यम्" इत्यादिरीत्या "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादिरीत्या च तारतम्यात् पूर्वेण मुख्येनेतरेण गौणेन वा चिन्तयन्तौ तत्रापि सकृदपि चिन्तयन्तौ वा यद्यवशमपि सम्भवति तदापीत्यर्थः। पराम् अस्याः प्रपञ्चप्रकटलीलात उत्तरां तदप्रकटलीलारूपां मद्गतिं यास्यथ एव नाधुनिकसाधनयोग्यतायोग्यताभ्यां तत्रोपकार्यतापकार्यते इति भावः तत्र हेतुः, कृतस्नेहौ कृतः स्वभावत एव सिद्धः स्नेहः पुत्रभावमयः प्रेमा ययोस्तौ स्वभावसिद्धत्वमत्र "अयमात्माऽपहतपाप्मा" इतिवत् यद्वा कृतस्नेहौ चिन्तयन्तौ सकृदेव वा चिन्तयन्तौ अन्यत् समानम्॥४५॥

ततः किं जातमित्यपेक्षायामाह–इतीति इत्युक्त्वा हरिस्तच्चतुर्भुजं रूपमपहर्त्तुं गोपायितुं प्रवृत्तत्वेन च विख्यापितत्ज्ञामाऽसौ तूष्णीमासीत् ततश्च पित्रोः सम्पश्यतोरेव नरवन्यत्र दत्तदृष्ट्योः सतोर्भगवान् स्वस्वरूपभूत षाड्गुण्यवानसावात्ममायया "मायास्याच्छाम्बरीबुद्ध्योः" इति त्रिकाण्डशेषात् "माया तु वयुनं ज्ञानम्" इति निघण्टोश्च स्वरूपभूतज्ञानशक्त्या बुद्धिसौष्ठवविशेषमयशक्त्येति यावत् यद्वा "आत्ममाया तदिच्छास्यात् गुणमाया जडात्मिका" इति महासंहितावचनादात्मेच्छया यद्वा "माया दम्भे कृपायां च" इति विश्वकोशादात्मकृपया शिशुराविष्कृतशैशवो बभूव तत्र विशेषज्ञानार्थमाह, प्राकृत इति। गौण्या वृत्त्या प्राकृत इवेत्यर्थः। यद्वा न चागन्तुकाकारेण तादृग्बभूवेत्याह–प्राकृत इति "प्रकृतिश्च स्वरूपं च स्वभावश्च" इति पर्यायात् "प्रकृतिसिद्धमिदं हि महात्मनाम्" इति प्रयोगाच्च स्वभावसिद्ध एवेत्यर्थः। अर्थान्तरं हि "न चान्तर्न बहिर्यस्य" इत्यारभ्य "बबन्ध प्राकृतं यथा" इति पूरिते वाक्ये दार्ष्टान्तिकदृष्टान्ताभ्यां निरसनीयं स्वामीष्टलीलाक्रममेव प्रकटयतस्तस्य सर्वदा सर्वशक्तिनिधानत्वेन तत्तदुपासकाभीष्टलीलादर्शनाय युगपद्योग्यत्वात् सर्वमेव तत्र स्वभावसिद्धमिति भावः। वक्ष्यते च गर्गेण "बहूनि सन्ति रूपाणि नामानि च सुतस्य ते" इति॥४६॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, एवमपि कथमावयोर्मुक्तिः स्यादित्यत्राह–युवामिति। असकृत्पुत्रभावेनापि सकृदपि वा ब्रह्मभावेन परब्रह्मत्वेन मां स्मरन्तौ

दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ।
यद्विश्रम्भादहं पापः स्वसुर्निहतवान् शिशून् ॥ १७ ॥
माऽशोचतं महाभागावात्मजान् स्वकृतंभुजः ।
जन्तवो न सदैकत्र दैवाधीनास्तदासते ॥ १८ ॥
भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च ।
नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥
(१) यथानेवंविदो भेदो यत आत्मविपर्ययः ।
देहयोग (२) वियोगौ च संसृतिर्न निवर्त्तते ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे महाभागौ स्वकृतंभुजः स्वारब्धकर्मभोक्तॄन् स्वात्मजान् माशोचतम् किञ्च जन्तवः प्राणिनः सदा नासते किन्त्वल्पकालमेव तदाऽप्येकत्र नासते किन्तु वियुज्यन्ते यतो दैवाधीनाः ॥ १८ ॥

सदा नासत इत्यनेन यदुक्तं जन्ममरणादि तदपि देहानामेव नात्मन इत्याह—भुवीति । भूतानि देहा एव यान्त्यपयान्ति च भवन्ति न भवन्ति चेत्यर्थः । यथा भुवि भौमानि घटादीनि तद्वत् एतेषु भूतेषु जन्मादिभिर्विक्रियमाणेष्वयमपरोक्षतया प्रत्यभिज्ञायमानो न विपर्येति विपर्ययं न प्राप्नोति एकरूप एव वर्त्तत इत्यर्थः । भौमेषु विक्रियमाणेषु यथा भूस्तथेति एवं विचार्यमाणे सति न शोकाद्यवकाशः ॥ १९ ॥

अज्ञानतस्तु न निवर्त्तत इत्याह—यथेति । यथा यथावदनेवंविद एवमजानत आत्मविपर्ययो देहात्मबुद्धिर्भवति यतो विपर्ययाद्भेदो भवति देहाहङ्कारेण ह्यात्मनि परिच्छिन्ने सति इदङ्कारास्पदं भिन्नं भवति यतो भेदात्पुत्रादिदेहैर्योगो वियोगश्च ततः संसृतिः सुखदुःखे इति यावदज्ञानं न निवर्त्तत इत्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न केवलमत्र ममैव दोषः किन्तु मूलं देवानामेवेत्याह—दैवमिति देवता "सत्यमेव देवा अनृतं मनुष्याः" इति श्रुतिविरोधोऽपि जात इत्यर्थः । एवेति लोकोक्त्या नाधिकं पाप इति कथमन्यथा तद्विस्रम्भः ? स्यादिति भावः ॥ १७ ॥

महाभागौ, हे परमविवेकिनौ ! जन्तवः सर्वे एव जीवाः नतु केचिदित्यर्थः । एकत्र एकस्मिन् स्थाने नासते तत्रापि सह सम्भूय परस्परमासज्य नासते किन्तु पृथक्पृथक् स्वस्वकर्मार्जितलोकादौ तिष्ठन्तीत्यर्थः ॥ १८ ॥

अपयान्ति नश्यन्ति भुवीति तत्र यानि सर्वाण्येवेत्यर्थः । यद्वा भुवि वर्त्तमानानीति भौमानां जन्मनाशयोः सर्वप्रत्यक्षतोक्ता एवं दार्ष्टान्तिकेऽपि ज्ञेयं न विपर्येति जन्मादिविक्रियां नाप्नोति अत्र श्रीवैष्णवमते भुव आश्रयत्वांश एव दृष्टान्तत्वं न कारणत्वांशोऽपीति ज्ञेयम् ईश्वरेऽपि मात्सर्येण कंसादीनां त्वद्वैतवादाश्रयत्वादेश इति वा तत्रैव जीवात्मनो व्यापकत्वांशे वा तदा च मायान्तीत्यादिकं यथा धात्वर्थमेव विपर्येति भ्रमतीत्यर्थः ॥ १९ ॥

आत्मन एवं देहाद्वैलक्षण्यमजानतां देहयोगवियोगोऽपि इति पाठो बहुत्र स च सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायेन "ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१।२।२७) इतिवत् अद्वैतमते पूर्वोक्तप्रकारेणात्मज्ञानान्यथात्वं ततो भेदकल्पनं ततोऽभिनिवेशोऽध्यासः ततो देहयोगवियोगौ ततः संसृतिश्च न निवर्त्तत इति च स्यात् अनेवंविदामिति बहुवचनपाठ एव सर्वसम्मतः अत्र टीकायाम् इति एतत्पूर्वोक्तं सर्वं यावदज्ञानं तावन्न निवर्त्तत इति व्याख्येयम् ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१७ ॥

स्वकृतंभुजः स्वकृतकर्मफलभोक्तॄन् ॥ १८ ॥

भौमानि भूतानि पार्थिवरजांसि सदा सहावस्थानभावे दृष्टान्ताः एतेषु शरीरेषु न विपर्येति नापयाति अनित्यशरीरसन्तानेष्वात्मनोऽनुवृत्ते दृष्टान्तमाह—यथैव भूरिति । यथा पृथिवीत्वजातिः पार्थिवरजस्सु अनुवर्त्तते तथा पूर्वपरदेहे स्वात्मानुवर्त्तत इत्यर्थः ॥ १९ ॥

अनेवम्विदः आत्मनोऽनुवृत्तत्वेन देहातिरेकमजानतः पुरुषस्य भेदः बाध्यबाधकतारूपभेदः स्यात् यत आत्मविपर्ययः अद्वेष्यता विषयभूतोऽभवदित्यर्थः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वं तु "अस्यास्त्वामष्टमो गर्भो हन्ता" इति दैवमुवाचेदानीन्तु यत्र क्वचित्तव मृत्युर्जात एवेति श्रुतमतो मानुषवद्दैवमप्यनृतं वक्त्येव यस्यैव वचने विश्वासादहं भगिनीसुतान् हतवानिदमतिजुगुप्सितं कर्म कृतवानस्मि किल ॥ १७ ॥

तथापि महाभागौ विवेकिनौ युवामात्मजान् प्रति माऽशोचतं शोकं माकार्ष्टं तेषामशोच्यत्वं सूचयितुं विशिनष्टि स्वकृतम्भुजः स्वकृतकर्मफलभोक्तॄन् जन्तवः दैवाधीनाः स्वस्वकृतकर्मानुगुणप्रवृत्त-

(१) यदा नैवम्विदो । (२) वियोगैश्च । इति वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दैववश्याः अत एव सदैकत्र नासते नावतिष्ठन्ते किन्तु तत्तत्कर्मानुगुणजन्ममरणादिभाजो भ्रमन्ति ॥ १८ ॥

सदा सहानवस्थाने दृष्टान्तमाह--यथा भुवि भौमानि रजांसि यान्त्यपयान्ति अपगच्छन्ति तद्वद्भूतान्यपि कर्मवशात्क्वचित्संयुज्य पुनर्वियुज्यन्ते भौमानां गमनागमनाद्यवस्थावत्त्वेपि यथा न भुवः तथात्वं तथा शरीरेषु जन्ममरणादिविकारवत्स्वपि तद्धारकतयावस्थित आत्मा जीवः न विपर्येति विपर्ययं न प्राप्नोति नान्यथाभावं गच्छति किन्त्वेकरूपतया नित्यतया चावतिष्ठत इत्यर्थः जन्ममरणाद्यवस्थावत्त्वस्वाभाव्याद्देहा न शोच्या नाप्यात्मा विक्रियाभावान्नित्यत्वाच्चेति भावः ॥ १९ ॥

ननु, जातोऽहं मृतोऽहं हतोऽहम अहमस्मि इत्येवमात्मनोऽपि जननमरणहन्तृहन्तव्यभावप्रतीतेः कथं न स विपर्येतीत्यत्र सा प्रतीतिर्देहात्मभ्रान्तिमूला सैव च तस्य देहसंयोगवियोगरूपसंसृतिहेतुश्चेत्याह—यदेति । यदैवंविधो भेदः देहात्मनोर्वैधर्म्यरूपो भेदः न स्यादनुष्ठानपर्यन्तत्वेन नाध्यवसितः स्यात् यतः अनध्यवसितादेव भेदादात्मनि विपर्ययः देहधर्मप्रतीतिर्भवति तावत् देहसंयोगवियोगैरुपलक्षिता संसृतिर्न निवर्तते तत्संयोगादिरूपा संसृतिर्न निवर्तते चशब्दाद्धन्तृहन्तव्यप्रतीतिरपि न निवर्तत इत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वकृतभुजः स्वकृतादृष्टभुज इति यस्मान्मा शोचेथाम् इतोपि शोको न कर्त्तव्य इत्याह—जन्तव इति । कीटादिप्राणिनः ॥ १८ ॥

नन्वेवं तर्हि देहस्थस्य परमात्मनोप्यागमनापायौ स्यातामिति तत्राह भुवीति यथा भुवि भौमानि पार्थिवानि भूतानि चतुर्विधान्यायान्त्यपयान्ति च तथैतेषु भूतेषु स्थितोऽयमात्मा परमात्मा न विपर्येति आगमापायौ न प्राप्नोति कथं यथा भूरागमनापायौ नाप्नोति तथेत्यर्थः । यथा भूतानि उद्भूतानि भौमानि रजांसि आयान्त्यपयान्ति वायुनेति शेषः अयमात्मा तथा न अनन्याधीनत्वात् अन्वयदृष्टान्तमाह यथा भूः पृथ्वी कठिनत्वेन स्थिरत्वादिति शेषः ॥ १९ ॥

जन्त्वागमागमवत् पुत्रादिकं विपर्येति भुव आगमापायाभाववत् परमात्मा न विपर्येतीति यदि तर्हीदं ज्ञानं कस्माज्जोदेतीत्याशंक्य भगवन्मायया मुग्धचेतस्त्वेन परमात्मविषयाभेदज्ञानबाहुल्यात् अनेन संसारानिवृत्तिस्तमःप्राप्तिश्च स्यातामित्याह, यत इति । अस्वपरविवेकवदुद्ध्युत्पत्तिप्रभृतिपरमात्मविषयोऽभेदोऽनेकविधोऽहं ब्रह्मास्मीत्यादिको जीवस्य प्रतीयत इति यतस्तेन विपरीत ज्ञानेन देहयोगादिलक्षणा वास्तवी यथार्था संसृतिर्न निवर्तत इति यतः आत्मविपर्ययः स्वस्य तम आद्यनर्थप्राप्तिश्च यतस्तस्मादात्मनि स्थितिं ज्ञात्वा मानुशोचेत्यन्वयः "अहं ब्रह्मास्मि देवोस्मि नास्मि केवलमानुषः" इत्यादिसिद्धोयमर्थः अभेदप्रतीतिः असुरजातेरेव "तल्लक्षणैर्विहीनः सन् ब्रह्म देवोस्मि वापि तु" इत्यादेः सर्वः स्वकृतमदृष्टं भुंक्त इति यस्मात्तस्मात् ब्रह्मास्मीत्यादि चिन्तनं तर्हि कस्येत्यतः स्व योग्यानामेव तदुक्तं "परब्रह्मण एकस्य ब्रह्मास्मीति विचिन्तनम्" इत्यादेः सर्वः परमात्मा स्वकृतं पूर्णं स्वमानन्दं विन्दते यतो ऽत्रशः अवगतपरमानन्दः "सर्वः शर्वः शिवः स्थाणुः" इति च सर्वः देवादिश्च स्वकृतं देवोस्मीत्यादि यथार्थज्ञानफलं भुंक्ते अवशो विष्णवधीनः ॥ २० ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जन्तवः सदा नासते तत्राप्येकस्मिन् स्थाने नासते सह संभूयापि नासत इत्यर्थः ॥ १८ ॥

भूवीति दृश्यमानानीत्यर्थः । जीवात्मन आश्रय एव भुवो दृष्टान्तम् ॥ १९ ॥

न तु कारणत्वेऽपि यथा येन हेतुना एवमात्मतत्त्वमजानता भेदस्तस्मादन्यत्र तदुपाधौ दृष्टिर्भवति यतो हेतोस्तत्रैवात्मभावना भवतीत्यादि यत इति यतश्चेत्यर्थः ॥ २० ॥ २१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सम्भावनया फलं निरूप्य अयं मम सहजो दोषो न भवतीति स्वदोषपरिहारं वदन्निवाह—दैवमप्यनृतं वक्तीति । आकाशवाणी दैवं वचनं "अस्यास्त्वामष्टमो गर्भः" इति वाक्यं दुर्गापि देवता एकं तु प्रत्यक्षसम्वादि आकाशवाण्यास्तु वाक्यं विसम्वादि देवगुह्याज्ञानादेवं वचनं "मर्त्येष्वनृतं प्रतिष्ठितम्" इति वाक्यात् मनुष्याणामनृतं देवेषु सत्यं तदत्र विपरीतं न केवलं मर्त्या एवाऽनृतवादिनः किन्तु दैवमप्यनृतं वक्ति अतो यद्विश्रम्भात् यद्वाक्यविश्वासात् स्वसुः सुतान् वृथैव निहतवान्, ननु सन्देहे प्रमाणमन्तःकरणप्रवृत्तय इति त्वद्धृदये कथं न भातमिति चेत्तत्राह अहं पाप इति महतां हि हृदयं प्रमाणं न तु पापिष्ठानां शिशूनिति वयः सख्ये विरुद्धे निरूपिते अष्टम एक एव हन्तीति सामर्थ्यप्रतिपादकवाक्यात् ॥ १७ ॥

नन्वतः परं किं कर्त्तव्यमित्याशङ्क्याह—माशोचतमिति । महतामशोके हेतुभूतः प्रायश्चित्तेऽप्यनधिकारी भवतीति मत्कृपया शोको न कर्तव्यः नन्वपकारिणि कथं कृपेति चेत्तत्राह—महाभागाविति सम्बोधनं महतां शत्रुमित्रोदासीनभावो नास्ति ननु महत्त्वादेव शोकाभावे सिद्धे कथं शोकाभावो बोध्यत इति चेत्तत्राह—स्वात्मजानिति । न हि स्वाकृतार्थत्वेन शोकः किन्तु बाला अकृतार्था गता इति तेषां शोकविषयत्वे हेतुमाह—स्वकृतभुज इति । यद्यपि मरीचिपुत्रा एवं जाता इति न जानाति तथापि कार्यादनुमिनोति अतस्तैरपि तादृशं कर्म कृतमस्ति येन बाला एव हताः ननु न वयं तान् शोचामः नात्मानं किन्तु एकत्राभयेषां स्थितिर्नाभूदिति शोचाम इति चेत्तत्राह—जन्तव इति । ये हि निरन्तरं जायन्ते जायस्व म्रियस्वेति मार्गवर्तिनः ते सदैवैकत्र नासते यतो भगवदिच्छा तथैव तेषु तदाह दैवाधीना इति । यदापि तिष्ठन्ति तदापि पूर्ववासनया शत्रुमित्रोदासीनत्वस्य नित्यत्वात् नसम्यगासते सहासत इति वा पाठः एवं लौकिकन्यायेन स्वापराधाभावं प्रार्थयन् शोकापनोदनं कृतवान् ॥ १८ ॥

पुनः शास्त्रानुसारेण शोकापनोदनमाह—चतुर्भिः भुवीति ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पूर्वं ते म्रियन्त इत्यङ्गीकृत्य शोकापनोद उक्तः इदानीं ते न म्रियन्त एवेत्युच्यते आत्मानित्यः "सर्वगतः स्थाणुः" इति वाक्यात् व्यापको गमनागमनादिशून्यः कूटस्थः सांख्यानामेव मतं दैत्यानां हृदयं समायातीति तदेवोच्यते देहास्तु आकाशे अभ्रतमःप्रकाशा इव उच्चावचाः समायान्ति गच्छन्ति च नत्वा काशे कश्चन विकार उत्पद्यते तथा पुत्राणामप्यात्मत्वात् तेषां देहे गते न काचित् क्षतिः स्पष्टतया व्यवहार्यत्वात् भूमिदृष्टान्तो बुध्यत इति प्राह—यथा भौमानि भूविकाराणि भूतानि कृमिकीटादीनि वृक्षादीनि वा यथा यान्ति भूमेः सकाशादुत्पद्यन्ते पृथग्भवन्ति अपयान्ति च भूमावेव लयं प्राप्नुवन्ति तेषु उद्गतेषु क्षीणेषु वा भूमिस्तु न विक्रियते तथा आत्मन्यपि देहाः यान्त्यपयान्ति च आत्मोपार्जितकर्मवशादेव उत्पद्यन्ते लीयन्ते च तथापि आत्मा नवा उत्पद्यते नवा लीयत इत्यर्थः यथा भूस्तथा देहानामपि भौतिकत्वाच्च पृथङ्निरूपणं भुवि-भौमानि भित्त्यादीनीत्येव सम्बध्यते भूतानीति त्वात्मनीति वा भूतानि जातानि वा तेष्वेव भूतेषु — विद्यमान आत्मा न तथेति वक्तुं दृष्टान्त एव प्रवेश उक्तः यथा बहिः स्थिता पृथिवी न विक्रियते एवमन्तः स्थित आत्माऽपि तथैतेष्विति भिन्नं वाक्यम् एतेषु मनुष्यदेहेष्वपि आत्मा न विक्रियत इति एतेषु मनुष्यादिदेहेषु भूम्यविकारः प्रत्यक्षसिद्धः वर्षाकालोद्भवेषु तृणादिषु च आत्मा विकारश्च प्रत्यक्षसिद्धः अन्यथा आत्माऽऽतन्त्यकल्पना प्रसज्येत यथा देहे भौमानि न पृथगात्माधिष्ठितानि तथा भूमावप्येक एवमात्मा तत्सम्बन्धात् कोटिशः तृणादीन्युत्पद्यन्ते विलीयन्ते च अधिष्ठाऽस्यो देवतास्तु भिन्नाः॥ १९॥

नन्वेवमैकात्म्ये कथं लोके भेदव्यवहार इति चेत्तत्राह—यथेति। यथा यथावदनेवंविदो भेदः नत्वेवंविदः आपातत एवंविदस्त्वेपि भेदप्रतीतिर्न गच्छतीति यथेत्युक्तं यथा नेवंविध इत्येकं पदं समासान्तस्त्वनित्यः भेदस्तु द्वित्वसाध्यं न ह्येकस्मिन् भेदबुद्धिर्भवति द्वित्वं त्वपेक्षा बुद्धिजन्यम् अतो द्वित्वं न वस्तुनिष्ठं किन्तु बुद्धिस्थविषयकमेव बुद्ध्या बहिर्विषयोत्पादनासम्भवात् अज्ञानकृत एव भेदो भवति अपेक्षाविषयाणामभावात् निरपेक्षेष्वपेक्षाबुद्धिरज्ञानकृतैव ननु भेदः पारमार्थिक श्रुतिस्मृतिव्यवहारोपयोगित्वात् आत्मवदिति अनुमानात् भेदः पारमार्थिक एवेति चेत्तत्राह—यत आत्मविपर्यय इति। यदि भेदः पारमार्थिकः स्यात् तत् कृतेन व्यवहारेण आत्मविपर्ययो न स्यात् अज्ञानस्य भेदोत्पादकत्वेनैवान्यथाबुद्धिहेतुत्वात् अन्यथा सुषुप्तावप्यज्ञानस्य विद्यमानत्वादन्यथाबुद्धिर्भवेत्—किञ्च न केवलं विपर्ययमात्रजनकत्वं किन्तु देहयोगवियोगावपि भेदकृतावेव यथा देवदत्तस्य यज्ञदत्तदेहे जाते गते वा स्वस्य न कापि विक्रियोत्पद्यते एवं स्वस्यापि आत्मन एकत्वे ज्ञाते नोत्पद्येतेति चकारस्तु सर्वव्यवहारसमुच्चयार्थः किञ्च भेदस्त्वपारमार्थिक इति कार्यान्तरादप्यवसीयते तदाह—संसृतिर्न निवर्तत इति। भेदज्ञाने विद्यमाने जन्ममरणयोर्विद्यमानत्वात् संसारो न निवर्तते॥ २०॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हे भाम, हे भगिनीपते! पुरुषादो राक्षसो यथा स्वापत्यं हिनस्ति तद्वत्॥ १७॥

भुज इति किबन्तं स्वकृतमिति षष्ठ्यभाव आर्षः महाभागाविति दुर्गादेव्येव आवयोरात्मजाभूत् किमन्यैः सुतैः स्वकृतभुग्भिरिति विमर्शेन मा ऽशोचतं किञ्च विमर्शान्तरमप्याह, जन्तव इत्यादि॥ १८॥

आत्मानात्मविवेकेनापि मा शोचतमित्याह—भुवि भूमौ आश्रितानि भौमानि घटादीनि आयान्ति जायन्ते अपयान्ति नश्यन्ति च यथा तथैव भूतानि देहा एव जायन्ते नश्यन्ति च तथैव तेषु भूतेषु देहेषु विपरियत्सु जन्माद्यनेकविकारं प्राप्नुवत्स्वपि अयमपरोक्षतया ज्ञायमान आत्मा न विपर्येति जन्मादिविकाररूपं विपर्ययं नाप्नोति एकरूपमेव वर्तत इत्यर्थः यथैव भूर्न विपर्येति भौमेषु घटादिष्वनेकविपर्ययं प्राप्नुवत्स्वपीत्यर्थः॥ १९॥

अनेवंविद एवमात्मतत्त्वमजानतः शरीरमात्मत्वेन जानत इत्यर्थः। यथा यथावदेव प्रथमं भेदो भवति प्रथक् शरीरायैव प्रथक् पृथगात्मान इति भेदज्ञानं भवतीत्यर्थः। यतो भेदादेव आत्मनो विपर्ययः जन्मादिविकाररूपविपर्ययप्राप्तिः देहजन्ममरणाभ्यामेवात्मा जातो मृत इति ज्ञानं भवतीत्यर्थः ततश्च देहैरेव पुत्रादिभिर्योगः सुखकारणं वियोगो दुःखकारणं चेयमेव संसृतिः॥ २०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जन्तवः प्राणिनः सदा एकत्र नासते यतो दैवाधीनाः स्वकृतकर्मतन्त्राः अतः स्वकृतंभुजः स्वकृतकर्मफलभोक्तॄन् माशोचतम॥ १८॥

देहानामेव जन्ममरणे नात्मन इत्याह—भुवीति। भुवि भौमानि भूतानि स्थावराणि वृक्षादीनि यान्त्युत्पद्यन्ते अपयान्ति विनश्यन्ति यथा तथैतेषु तादृशोत्पत्तिविनाशशालिषु देहेषु देवमनुष्यादिषु कर्मवशाद्भ्रममाणोऽपि अयं जीवात्मा न विपर्येति उत्पत्तिविनाशौ न प्राप्नोति। किञ्च देहानामपि कारणरूपेण नित्यताप्यस्तीत्याह—यथैव भूरिति। भौमानां मूलभूता भूर्यथा नित्या तद्वद्देहानामपि कारणं नित्यमेवेत्यर्थः॥ १९॥

यथानेवंविदः यथावदेवमजानतः आत्मविपर्ययः अनात्मन्यात्माभिमानो भवति यत आत्मविपर्ययादेव देवोऽहं मनुष्योऽहं बालोऽहं तरुणोऽहमित्येवंविधश्च भेदो भवति देहयोगवियोगौ च भवतः संसृतिर्देहयोगवियोगनिबन्धनसुखदुःखप्रवाहरूपा न निवर्तते॥ २०॥

---

### भाषा टीका।

दैव भी झूंठ बोले है कछु केवल मनुष्वे मात्र नहीं। जाके विश्वास सों मो पापी ने अपनी बहिन के पुत्रन को मार गेरे॥ १७॥

तस्माद्भद्रे ! स्वतनयान् मया व्यापादितानपि ।
(१)मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥
यावद्धतोऽस्मि हन्ताऽस्मीत्यात्मानं मन्यतेऽस्वदृक् ।
तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥ २२ ॥
क्षमध्वं मम दौरात्म्यं साधवो[२] दीनवत्सलाः ।
इत्युक्त्वाऽश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥ २३ ॥
मोचयामास निगडाद्विश्रब्धः कन्यकागिरा ।
देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥

भाषा टीका ।

हे महाभाग हो ! आप दोनों पुत्रन को शोक मत करो, काहे सों, कि—वे भी अपने करे को भोगन वारे हैं प्राणी सदा एक जगे साथ में नहीं रह पावैं हैं, काहे सों, कि—दैवाधीन हैं तासों वियोग को प्राप्त होजाय हैं ॥ १८ ॥

या भूतल में जैसे घट पटादि पदार्थ उत्पन्न होय है। और नष्ट होय हैं, परंच भूमि वो ही स्थिर बनी है । तैसेई प्राणीन के देहन की अदला बदली भलेई होवे पर आत्मा तौ वोको वोई रहै है तासों कछु शोक की बात नहीं है ॥ १९ ॥

जासों ये आत्मा को विपर्यय भयो है, अर्थात् देह के धर्म भासें हैं या प्रकार को देह और आत्मा को भेद ज्ञान जबतक नहीं होवै है ( अर्थात् देह में ही जबतक आत्म बुद्धि रहै है तबतक देहके संयोग वियोग रूप संसार नहीं निवृत्त होवै है ) ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमुक्तप्रकारेण नैते तव तनया अहं तु तावन्न घातितवान् तथाप्यज्ञानदृष्ट्या स्वतनयान् मया व्यापादितानपि मानुशो- चेति सांत्वयति—तस्मादिति । अज्ञानाश्रयमेव कर्मवादमाह यत इति ॥ २१ ॥

कथं तर्हि ब्राह्मणादिहन्तुस्तद्वध्यस्य च प्रायश्चित्तश्रवणमज्ञान मूलमेवेत्याह—यावदिति । अस्वदृक् देहाभिमानी तस्य देहस्य हननमात्मन्यभिमन्यमान इत्यर्थः ॥ २२ ॥

श्यालः कंसः स्वस्रोरिति स्वसृशब्देन द्विवचनानुपपत्त्या मिथुनगणनद्वारा मिथुनलिङ्गया स्वसृतत्पत्योरभिधानम् लिङ्ग- समवायस्थानेन प्राणभृत उपदधातीतिवत् देवकीवसुदेवयोः प्रत्येकं पादमग्रहीदित्यर्थः । श्यालशब्देन वा कथञ्चिद्वसुदेवा- भिधानम् ॥ २३ ॥

आत्मसौहृदं प्रियवाक्यादिना दर्शयन् ॥ २४—२६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भद्रे,हे सद्बुद्धिमतीति तामधिकशोकां विशेषतः सम्बोधयति, यतश्च विन्दते भुङ्क्ते अवशः अनिच्छन्नपीत्यर्थः ॥ २१ ॥

अज्ञः तत्त्वज्ञानहीनः अयं सर्वत्रैव हेतुः अन्यत्तैः । यद्वा ननु, एवं जानन्नपि त्वं किमिति मरणाद्विभेषि ? किंवा तान् हतवानसि ? स्वानुभवाभावादित्याह—यावदिति । स्वदृक् शास्त्रदृष्ट्या आत्मतत्त्व- ज्ञोऽपि हतप्रायोऽस्मि अत एव तान् हनिष्यामीत्येवमभिमानं कुरुते यतो अज्ञः स्वानुभवरहितः ॥ २२ ॥

ननु, अस्माकमपि स्वानुभवो नास्तीति चेत् तथापि मद्- पराधः क्षन्तव्य इत्याह—क्षमध्वमिति । बहुत्वं देवकाद्यपेक्षया यतो यूयं साधवो बन्धुवत्सलाश्च दीनेति पाठे क्षमार्थमात्मदैन्यं सूच यति साधवो दीनवत्सला भवन्तीत्यर्थः । अथ अनन्तरं सद्यः पदमेवाग्रहीत् इत्यर्थः । अन्यत्तैः तत्र मिथुनगणनो मातापितृप्रभृ- तिकः प्राणाभृच्छब्देन तन्मन्त्रसंस्कृतेष्टकोच्यते बहुत्वानुपपत्त्या च तद्वचपातिन्योऽपि गृह्यन्त इति "वा शरि" (८।३।३६) इत्यस्य सकारपक्षमाश्रित्य जहल्लक्षणया व्याख्यातम् "अनचि च" (८।४।४७) इत्यस्य द्वित्वपक्षमाश्रित्य जहल्लक्षणया व्याचष्टे— श्यालेति । एवमध्यात्मज्ञानादिकमपि श्रीभगवद्विमुखानां प्रत्युत क्रूरता पोषायैव भवतीति प्रकरणतात्पर्यम् ॥ २३ ॥

निगडात् लोहशृङ्खलात् तदा तं कर्षयामासेत्यर्थः ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वश्चेतनवर्गः ॥ २१ ॥

तदभिमानी देहाभिमानी आत्मनो विनाशाहेतुत्वात् तस्मिन् बाध्यबाधकत्वबुद्धिभ्रमः स च देहात्माभिमानावधि इत्यर्थः ॥२२॥

श्यालो वसुदेवः स्वसा देवकी ॥ २३—२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तस्माद्देहात्मनोर्विलक्षणस्वभावत्वादत एवाशोच्यत्वाच्च हे भद्रे

(१) मानुशोचयतं ॥ (२) बन्धु ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मया व्यापादितानपि व्यापत्तिं प्रापितानपि हतानपीति । यावत् स्वसुतान् प्रति युवां मानुशोचयतं शोचयतमित्यर्थः । यतः सर्वोऽपि जन्तुरवशोऽस्वतन्त्रः कर्मवश्यः स्वकृतं स्वकृतकर्मफलरूपं जन्ममरणादिकं विन्दते लभते ॥ २१ ॥

किञ्च यावदस्वदृक् देहविलक्षणात्मयाथात्म्यदर्शी सन् हतोऽस्मि हननविषयोऽस्मि हन्ताऽस्मि हननकर्ताऽस्मीत्यात्मानमभिमन्यते देहात्मभ्रान्त्या देहगतं हन्तृहन्तव्यभावमात्मन्यनुसन्धत्ते तावदेव तदभिमानी तन्मूलकहन्तृहन्तव्यभावाभिमानी चात एवाज्ञस्सन् बाध्यबाधकतां बध्यघातुकभावमिति यावत् प्राप्नुयात् तत्प्रयुक्तशोकमायादिकं प्राप्नुयादित्यर्थः ॥ २२ ॥

अतः साधवो बन्धुवत्सलाश्च यूयं मम दौरात्म्यं क्षमध्वम् इत्युक्त्वाऽश्रूणि मुखे यस्य तथाभूतः स्यालः स्वस्रोर्देवकीवसुदेवयोः पादावग्रहीत् पत्नीभ्रातृवाचितया प्रसिद्धापि स्यालशब्दोऽत एव प्रयोगाद्भगिनीभर्तर्यपि वर्तते ॥ २३ ॥

ततः कन्यकाया गिरा विस्रब्धः एतौ निर्दुष्टौ इति विश्वस्तः स्वस्य सौहृदं दर्शयन् देवकीं वसुदेवञ्च निगडान्मोचयामास पूर्वोक्तमेव मोचनं सप्रश्रं स्मारितमिति न पौनरुक्त्यम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्ह्यस्य कियन्तं कालं संसारानुवृत्तिरिति तत्राह–यावदिति । अस्वदृगनात्मानं देहम् आत्मत्वेन पश्यतीति तदभिमानी देहाभिमानी ॥ २२—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कथं तर्हि तव मोहस्तत्राह–यावदिति । तर्हि नास्माकं कथं भवेत् ॥ २२ ॥

तत्राह–क्षमध्वमिति । बन्धुवत्सलाः तेषामपराधग्राहका इत्यर्थः । दीनेति पाठः सुगमः ॥ २३ ॥

निगडात् लौहश्रृङ्खलतः तं कर्षयित्वापीत्यर्थः । पूर्वं बन्धनागारान्मोचनं ज्ञेयम् ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत आत्मानः अविकृतत्वं ज्ञातव्यं तदविकृतत्वमपरिच्छेदकूटस्थत्वव्यतिरेकेण न सिध्यतीति कूटस्थः व्यापकः अविकृतः आत्मा ज्ञातो भवति तस्मिन् ज्ञाते शोको न सम्भवति तत्तु भवद्भ्यां ज्ञायत एवेति शोको न कर्तव्य एवेत्याह—तस्मादिति वसुदेवस्तु शोकं न करिष्यतीति देवकीसम्बोधनं भद्रे इति अतः परं तव कल्याणमपत्यं च भविष्यतीति ज्ञापितं स्वतनयान् देवकीतनयान् मानुशोच प्रथमत आत्मानं शोचति ततः पुत्रानित्यनुपदं यद्यपि ते स्वकर्मवशादेव मृताः न तु मया व्यापादिताः तत्कर्मैव मां च प्रेरितवत् तथापि बहिर्दृष्ट्या मयैव व्यापादिताः इत्यङ्गीक्रियते तथापि मा शोचेत्याह–यथा व्यापादितानपीति अननुशोके बहिर्मुखानामप्येकास्त्युपपत्तिः तामाह–यतः सर्वः स्वकृतम्भुङ्क्ते ऽवश इति । अनिच्छन्नपि परवश एव कर्माधीनोभूत्वा सर्वोपि स्वकृतं भुङ्क्ते अस्य मते न सृष्टेः चातुर्विध्यं भुञ्जत इति बहुवचनप्रयोग एकवचने देहभेदेन भोगेन नानात्वप्रतीतेः सिद्धत्वज्ञापनाय अनेन मयापि बहिर्मुखत्वेन कृतं कर्म भोक्तव्यमित्यविचारितोपि दण्डो भविष्यतीति दण्डाभावेनापि चिन्ता न कर्तव्या ॥ २१ ॥

ननु, त्वया ज्ञानमुपदिष्टम् उपदेष्टुरिदं ज्ञानं भवतीति न तव दण्डसम्भावनेति चेत्तत्राह–यावदिति । यावदयं जीवः शास्त्रोत्पन्नज्ञानोपि हतोऽस्मि हन्तास्मीति आत्मनः कर्मत्वं कर्तृत्वं वा मन्यते तावद्बाध्यबाधकतामियादेव कर्मत्वे बाध्यत्वं कर्तृत्वे बाधकत्वमिति अविक्रिये आत्मनि यथैव क्रियां मन्यते तथैव क्रियां प्राप्नोतीत्यर्थः नन्वविद्यमाने धर्मप्रतीतौ को हेतुस्तत्राह–अस्वदृगिति । न स्वस्मिन् दृष्टिर्यस्य शास्त्रज्ञानं शास्त्रीयत्वेनैव जानाति न तु स्वविषयत्वेन ततोपि किमत आह–तावत्तदभिमानी भवतीति स्वरूपे ज्ञाते देहाद्यध्यासो न भवति अध्यासे पुनः स्वरूपाज्ञानमिति तदभिमानी अज्ञ एव भवति अतो बाध्यबाधकभावः ॥ २२ ॥

एवं भवद्बालकानामस्माकं च कर्मवशात् सर्वं जातं भविष्यति च अतः शोको दण्डो वा न चिन्तनीयः परमतिक्रमदोषः मदीयः सोढव्य इति वदन् क्षमापनार्थं नमस्कारं करोति क्षमध्वमिति । मम दौरात्म्यं क्षमध्वम् अविचारेणान्यायकर्ता दुरात्मा अत आज्ञोल्लङ्घनं पुत्रमारणादिकं च यत् कृतं तत्सर्वं क्षमध्वं महतां हृदये अनुशये स्थिते शोको भूयान् भवति क्षमापनार्थं न किञ्चित् दातव्यं यतः साधवो दीनेष्वेव वत्सलाः मम च दीनत्वम् अपकीर्त्तिः नरकभाक्त्वेन स्वस्य दैन्यं न केवलं वचनेन निरूपितं किन्तु रूपेणापि तदभिव्यक्तं कृतवानित्याह–इत्युक्त्वा अश्रुमुखो जात इति । अश्रूणि मुखे यस्य विकलत्वात् प्रोञ्छनमपि न करोति यद्यप्यम् अकर्त्तव्यमपि कनिष्ठभगिन्याः पादग्रहणं नमस्करोति तदान्यत् किं न कुर्यात् गृहीतधनादिदानं वा अतिरिक्तदानं वा स्वसृशब्देनैव स्वसृतत्पती अभिधीयते तत्सम्बन्धादेव वसुदेवस्य मान्यत्वात् साक्षात्ते प्रति नमस्कारेपि दोषाभावात् एकस्या एव पादौ त्विवगृहीतवानिति ज्ञापयितुम् एकशेषशास्त्रे "पुमान् स्त्रिया" (१।२।६९) इत्यादिसूत्रेषु चतुर्षु तृतीया ज्ञापयति "अप्रधाने न शिष्यते" इति अन्यथा स्त्रीपुरुषयोरिति प्रयोगो न स्यात् स्त्रीपुंसाभ्यामिति च अत्रापि तद्धर्मो सहिता स्वसैवावशिष्यते अथेति भिन्नप्रक्रमः दैत्यावेशस्य राजसभावस्य च त्यागार्थः ॥ २३ ॥

विरोधं च दूरीकृतवानित्याह–मोचयामासेति । निगडौ स्तम्भबद्धौ अतो निगडान्मोचयामासेत्युक्तम् अर्थादुभावपि तत्तु बन्धनागारं भवतीति न निगडदूरीकरणं नन्वेतावद्भ्यां आकाशवाणी च प्रमाणं अत एताभ्यामेव किञ्चित् कापट्यं कृतमस्तीति कथं न विचारितवान् तत्राह विस्रब्धः कन्यकागिरेति कन्यका माया तस्याः वचनमसत्यमपि सम्भाव्यते तथापि तत्रैव विश्वासं कृतवान् यत्र कश्चिदिति रूपयामिति लिङ्गवचने देवक्यादोषाभावसूचके वसुदेवेनैव तथा कृतत्वात् अन्यथा स्फूर्तिकर्तृत्वं तु मायायाः

भ्रातुः[1] समनुतप्तस्य[2] क्षान्तरोषा च देवकी ।
व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥
एवमेतन्महाभाग ! यथा वदसि देहिनाम् ।
अज्ञानप्रभवाहन्धीः स्वपरेति भिदा यतः ॥ २६ ॥
शोकहर्षभयद्वेषलोभमोहमदान्विताः ।
मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सिद्धमेव प्रथमतो देवकीं पश्चात् वसुदेवं चकारात्तत्संबन्धिनश्च स्वयं परिचर्यां कुर्वन् आत्मनः सौहृदं च दर्शयन् जातः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तनयान् देहानामनात्मत्वात् तनयबुद्ध्या तान् बहिर्दृष्ट्या मया हतानपि मानुशोचेत्यर्थः । मया पञ्चभूतात्मका देहा एव हता इत्यतो मय्यपि दोषदृष्टिर्न कार्य्येति भावः । ममैवमात्मतत्त्वज्ञानं नास्तीति चेत् तदपि मानुशोचेत्याह-यत इत्यादि, अज्ञानाश्रये कर्मवादेऽप्येवं विचारेण न शोकाऽवकाश इति भावः ॥ २१ ॥

मम तु त्वत्पुत्रहन्तृत्वमेव तावन्नास्ति ज्ञानित्वादित्याह-यावदिति । अस्वदृक् न स्वमात्मानं पश्यति किन्तु देहमेव पश्यत्यतोऽज्ञः तेन मम देहाभिमानाभावात् "हत्वापि स इमान् लोकान्न हन्ति न निबध्यते" इति वचनाच्च त्वत्पुत्रहन्तृत्वं नापि बन्ध इति भावः ॥ २२ ॥

तदपि मयि पुत्रहन्तृत्वमारोप्याधिकं चेद्द्रोविषि तर्हि सत्यमहं दुष्ट एव बुद्धिपूर्वकं पापमकरवमेव तत्र निष्कृतिर्युष्मत्कृपैवेत्याह-क्षमध्वमिति । श्यालः कंसः स्वस्रोरिति द्विवचनानुपपत्त्या स्वसृशब्देन स्वसृपतिर्लक्ष्यते इत्येकः स्वसृशब्दो लक्षकः अन्योन्यवाचकः तयोरेकशेषात् स्वस्रोर्वसुदेवदेवक्योः पादौ प्रत्येकं पादमग्रहीदित्यर्थः ॥ २३ ॥

निगडात् लोहशृङ्खलात् ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वसुदेवः स्वयमेतज्जानातीति मत्वा देवकीं प्रत्याह—तस्मादिति । यद्यपि ते तनयाः स्वकृतकर्मविपाकभोक्तृत्वेनान्यानिरपेक्षजन्ममरणाः स्वरूपतोऽविनाशिनश्च देहानामपि कारणदृष्ट्या मरणं नास्ति तथापि मयैव व्यपादितान् मन्यसे चेत्तदापि, अहमभद्रः त्वं भद्रा साधुस्वभावा एतन्ममाभद्रत्वं तव भद्रत्वं दैवतन्त्रम् सर्वोभयप्रकारो जनोऽवशः दैवतन्त्रः स्वकृतं भुङ्क्ते यतस्तस्मात् हे भद्रे ! स्वतनयान्मानुशोचेत्यर्थः ॥ २१ ॥

सुखदुःखरूपा संसृतिर्न निवर्तते इत्युक्तं तस्या अवधिमाह, यावदिति । अस्वदृक् देहात्मबुद्धिः ॥ २२ ॥

श्यालस्वस्रोरिति देवकीवसुदेवयोः श्यालशब्देन कथञ्चित् वसुदेवस्य ग्रहणं श्यालः इति विसर्गान्तपाठे तु श्यालः कंसः स्वस्रोः स्वसृभामयोः पादौ प्रत्येकमग्रहीदेकशेषस्त्वार्षः ॥ २३ ॥

कन्यकागिरा विस्रब्धः नत्वासुरादुभावाश्रित्य आत्मसौहृदं दर्शयन्नेव केवलं न च तदस्तीति भावः ॥ २४ ॥

---

### भाषा टीका ।

हे भद्रे ! बहिन देवकी ! तासों मोसों मारेभयेन को भी तुम अपने पुत्रन को मत शोच करौ । काहे सों, कि–सब प्राणी अवश होकर कें अपने करे को पावे है ॥ २१ ॥

और जबतक प्राणी स्व स्वरूप कों नहीं जानें हैं अर्थात् जबतक देह सों विलक्षण [ न्यारो ] आत्मा को अभिमान वारो होय कें अर्थात् "मैं देवहूं मैं मनुष्य हूं" या रीत को अभिमानी होय कें मै मार्यो गयो मैं मारवे वारो हूँ ऐसें मानें हैं तब लग ही वाध्य बाधकपनें को प्राप्त होवै है । काई समय पै कोई सों आप वाधित होय है, काई स य पै आप कोई कों बाधक बनें हैं ॥ २२ ॥

अब तुम दोनों हमारे दुरात्मापने कों क्षमा करौ । काहे सों, कि—साधुजन दीन वत्सल होवै हैं । कंस ऐसें कह कें आखन में आंसून को भरलायो और बहिन बहिनोई दोनोन के चरणन कों ग्रहण करत भयो ॥ २३ ॥

और वा कन्या की वाणीको विश्वास करकें अपने सुहृदपने कों दीखावतो भयो देवकी और वसुदेवजी कों बन्धन से छुडावत भयो ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वपरभेददर्शने किं भवति तदाह—शोकहर्षेति । भावैरेव निमित्तभूतैर्मिथो भावान् घ्नन्तं भावमीश्वरं पृथग्दृशस्तेन पश्यन्ति किन्त्वहमेव हन्ता हतश्चेति मन्यन्त इत्यर्थः ॥ २७ ॥

---

(१) वचनमाश्रित्य । इति विज० (२) सान्त्वा रोषञ्च इति शुकपक्षी० वीर० तोषणी० क्रम० चक्र० ।

श्रीशुक उवाच ।

कंस एवं प्रसन्नाभ्यां(१) विशुद्धं प्रतिभाषितः ।
देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विशुद्धं यथा भवति ॥ २८ ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भ्रातुः तत्र च सम्यगनुतप्तस्य क्षान्त्वा दौरात्म्यं सोढा रोषं चकाराच्छोकं च तत्याज वसुदेवस्तु द स्फुटमुवाच प्रहस्येति । तस्यापि तादृशोक्तेः ॥ २५ ॥

एवमेतदिति मयेदं पूर्वमेवोक्तं भवतैव न मन्यते इति भावः हे महाराजेति शास्त्रज्ञानं त्वयि घटतेवेति व्यञ्जितं महाभागेति पाठे तथैवार्थः । पक्षे न राजते इत्यराजः हे महाराज ! हे अत्यन्ताशोभमान ! अमङ्गलस्याक्ष्यादिति भावः । तथा महानभागः अमङ्गलं यस्य हे परमदुर्भग ! इति देहिनामज्ञानाः तत्राहं भोक्ता कर्त्तेत्यादिमतिरज्ञानप्रभवा यतः अहन्धियः ॥ २६ ॥

भावैर्भूतैः पृथग्दृशः देहदृष्टयः अन्यैः तत्र वस्तुन ईश्वर एवं हन्ता न देही नाऽस्मा न हतश्च देह एवं नास्मि यः । मिथो निमित्तभूतैरिति योऽयं मिथोऽनन्तमीनं स्वधियान् हन्तु साक्षादेवतीर्णमपि तं व्यञ्जिधा न पश्यन्तीति शेषार्थः ॥ २७ ॥

एवं तत्तद्वाक्यानुमोदनेन स्वसिद्धान्तनिरूपणेन च विस्रब्धं विश्वस्तं विश्वासजनकं यथा स्यात् विशुद्धमिति पाठे अकपटं यथा स्यात्तथा प्रतिभाषितः अनुज्ञातश्च सन् ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्षान्त्वा क्षमां कृत्वा रोषं उपसृजत् ॥ २५ ॥

अज्ञानप्रभवा स्वपरसुतान्हतिः देहात्माभिमानकृतशत्रुमित्रवैपरीत्यबुद्धिरेव भ्रान्तिः आत्मनाशहेतुः न तु कश्चिदस्ति अशक्यत्वादित्यर्थः ॥ २६ ॥

पृथग्दृशः आत्मव्यतिरिक्तदेहविषयबुद्धिमन्तः भावैरचेतनैः खड्गादिभिः आवृतचित्पदार्थं अन्तमीश्वरं न पश्यन्तीत्यर्थः ॥ २७—३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भ्रातुः कंसस्य सम्यगनुतप्तस्य सतः देवकी क्षान्त्वा क्षमां कृत्वा रोषं व्यसृजत् तथा वसुदेवोऽपि क्षान्त्वा प्रहस्य तं कंसमुवाच ॥ २५ ॥

तदेवाह—एवमिति द्वाभ्याम् । हे महाभाग ! त्वं यथा वदसि तदेवमेव तथैव । किं मयोक्तं यत्त्वमब्रवीः इत्यत आह—देहिनामज्ञानीः हन्ताऽहं हत इत्येवंरूपा धीरज्ञानप्रभवा देहात्मभ्रमजा यद्वाऽहन्धीर्देहात्मधीदेहात्मस्वाऽऽत्मबुद्धिरज्ञानप्रभवा समूला, अहन्धियं विशिनष्टि यतोऽहन्धियः स्वपरेतिभिदा शत्रुमित्रभिदा भवति ॥ २६ ॥

एतदेवोपपादयति—शोकेति । पृथग्दृशः आत्मनः पृथग्भूते देहे दृगात्माभिमानो येषां तथाभूताः अत एव शोकादिभिरन्विताः भावैरचेतनैः खड्गादिभिरावृतचित्पदार्थेऽनन्तमीश्वरं न पश्यन्ति किन्तु केवलं स्वपरभेदमेव प्रपश्यन्तीति भावः तच्च कर्मानुगुणमप्रवृत्तस्येश्वरस्यैव जन्ममरणादिहेतुत्वात् कंसापराद्धमिति भावः ॥ २७ ॥

इत्थं विस्रब्धं विश्वासयुक्तं यथा भवति तथा आभाषितः कंसः प्रसन्नाभ्यां देवकीवसुदेवाभ्यामनुज्ञातः स्वगृहं प्राविशत् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परमात्मा न विपर्येति पुत्रादिकं विपर्येतीति जीवपरभेदज्ञानं मुक्तिसाधनमन्यथाऽसाधनं यथा वदसि एतदेव सत्यम् एतदेव दृढयति—देहिनामिति । देवोऽहं मानुषो वेति विशेषं तत्र वापिरित्यादेः यातनाशब्दमध्याहृत्य व्याख्येयम् अहं देवाद्यन्यतमः परमात्मा मदादिजीवराशेः सत्तादिप्रदत्वेनात्यन्तं प्रष्ठ इति या भिदा तदज्ञानं देहिनामज्ञानप्रभवा यातना हन्तीति यत इत्यन्वयः । ननूत्तरश्लोके पृथग्दृश इति भेदज्ञाननिन्दावचनादपि स एवार्थः किं न स्यात् ? उच्यते—पृथग्दृश इति । पृथक्शब्दप्रयोगबलादन्योऽर्थस्तस्य तर्हि स कः इत्युच्यते भगवद्दर्शनविरोधि यद्दर्शनं तत् पृथग्दर्शनं "भगवद्दर्शनादस्य विरोधाद्दर्शनं पृथक्" इत्यादेः—

स्वरूपभेदो हि परजीवयोर्भागिनो मिथः ।
परस्परशो वस्तूनां विशेषः शास्त्रदर्शितः ॥ इत्यादेः

उक्त एवार्थ इति सन्तोष्टव्यम् ॥ २६—३० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्षान्त्वा क्षमागवलम्ब्य ॥ २५ ॥ २६ ॥

भावैर्भूतैर्मिथो निमित्तभूतैः पृथक्दृशो बहिर्दृष्टयः ॥ २७-३५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसादे प्रार्थिते ताभ्यां प्रसादः कृत इत्याह—भ्रातुरिति । सम्यगनुतप्तस्य पश्चात्तापेन तप्तस्य तत्रापि भ्रातुः सम्बन्धिदोषं क्षान्त्वा क्षमित्वा भ्रान्तदोषा वा तत्कृतं पूर्वापराधं व्यसृजत रोषं वा पाठभेदात् तदीयो रोषः सोढः स्वकीयं तु त्यक्तवती कृतकार्यस्य

(१) विस्रब्धमिति वीर० विज० तोषणी०

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तद्दोषस्य सहनम् अकृतकार्यस्य स्वकीयस्य परित्यागः एवं वसुदेवश्च चकारादन्येऽपि रोषमपराधं च क्षान्त्वा यतो देवकी देवतारूपा वसुदेवोऽपि तथा तस्यास्तु शोकाभावो मुखप्रसादेनैव ज्ञातः वसुदेवस्तु गूढहृदय इति कदाचिदप्रसन्नो भवेदित्याशङ्क्य हास्यं वचनश्चाह-प्रहस्य तमुवाचेति । इत्याश्चर्यं पुत्रमारकस्यं सम्भाष्य इति ॥ २५ ॥

तदुक्तं ज्ञानं तस्यैव हृदयारूढं भवत्विति तस्यानुमोदनं करोति—एवमेतदिति । महाराजेति सम्बोधनं मारणस्यादोषज्ञापनार्थं यत् त्वमात्थ एवमेतत् तान्निष्पाण्डितमनुवदति देहिनामज्ञानप्रभवा अहन्धीरिति देहादावहम्बुद्धिरज्ञानादेव जायते तस्मात् स्वपरेतिभिदा स्वः पर इति एतन्मूलक एव सर्वोऽपि व्यवहारः देहिनामिति देहाध्यासवताम् अहङ्कारस्याज्ञानजनितत्वे देहाध्यासः प्रयोजक इति अधिकारत्वेन निरूपितः अन्यथाज्ञानमहम्बुद्धिः तदज्ञानकृतमेव अन्यथा स्वरूपे भासमाने अन्यत्र भवात् ॥ २६ ॥

एवं तदुक्तं ज्ञानं नित्यानित्यवस्तुविवेकोपयोगित्वेन निरूप्य स्वसिद्धान्तसिद्ध ज्ञानं कृपयोपदिशति--शोकेति । अत्र वस्तुतः स्वयं न मारयतीति सत्यम् असमर्थत्वात् किन्तु केनचित् प्रेरितो मारयति इतोऽपि मुख्यः सिद्धान्तः भगवानेव सर्वत्र प्रविष्टो मारयतीति शास्त्रं तस्य ज्ञाने जीवानां षड्धर्मा बाधकाः भगवत्प्रतिपक्षाः शोक ऐश्वर्यस्य स हि कर्तुमकर्तुमन्यथाकर्तुं समर्थः तत्कृतेर्थे कथं शोकः ? अन्यथा अपेक्षितं स्वांशानामन्यो न नाशयेत् हर्षश्च प्राप्तौ भवति तद्भगवतो वीर्ये कालरूपे ज्ञाते न भवेत् भयं च न भवेत् यदि भगवतो यशो जानीयात् सद्युक्तं न करिष्यति अन्यथा यशो न स्यात् द्वेषश्च न भवेत् लोभश्च यदि भगवदीयां श्रियं जानीयात् द्वेषश्च लौकिको भवति लोभश्च धनकृतः तदुभयं भगवत एवेति न स्वस्य तथा कर्तुमुचितं ज्ञाने भगवदीयं ज्ञाते मोहाभावः प्रसिद्धः मदस्तु वैराग्याभावात् सर्वथैवाविरक्तो मत्तो भवति अतः अन्योऽन्यं मारयन्तमपि जना न पश्यन्ति अन्यथा एक एव घातकः स्यात् नन्वेकारस्ये कथं वध्यघातकभावो भगवच्छास्त्रे उपपद्यत इति चेत्तत्राह—भावैर्भावमिति । भवन्तीति भावा धर्माः बाधकैर्धर्मैरन्यधर्मा एवाभावैर्भावमिति न तु धर्मी ये हि भवन्ति ते नश्यन्तीति यथा एकेपोत्पन्ने न तु धर्मी ये हि भवन्ति ते नश्यन्तीति यथा एकस्मिन् वस्त्रे शुक्लादयो धर्मा रञ्जकद्रव्यसम्बन्धादुत्पद्यन्ते विलीयन्ते च परं बलीयस्त्वं नियामकं यद्वाधार्थमेव यस्मिन् भावे भगवान् निविशते स तं भावं दूरीकरोतीति भवदावीनां करणत्वमेव न तु कर्तृत्वं न हि करणं कश्चिदुपालभ्यते स्तूयते वा मदज्ञाने हेतुः पृथग्दृश इति करणे सम्बद्ध एव कर्त्ता करणात् पृथक् ज्ञायते करणं वा ततः तदैवं बुद्धिर्भवति न तु सर्वथाविधं भगवन्तं ज्ञातवतः अतो मत्पुत्रा अपि भगवतैव मारिताः त्वमपि मारणीय इति त्वयापि शोको न कर्तव्य इति भावः ॥ २७ ॥

एवं मायाकृतं ज्ञापनं सफलं निरूप्य उपसंहरति—कंस इति, एवं प्रसन्नाभ्यां स्वसिद्धान्तकथनेन सम्यक् प्रसादो वाचितः विशुद्धं परिभाषित इति महाराजेति सम्बोधनेन तदुक्तानुवादेन च निरूपितौ एकस्यैव वचनं निरूपितमिति देवक्याः प्रसादशङ्कां वारयितुमुभयोर्ग्रहणम् अतस्ताभ्यामनुज्ञातः प्रतीकारमकृत्वा गृहमेवाविशत् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भ्रातुरपराधं क्षान्त्वा रोषं शोकं च ॥ २५ ॥

यतोऽहन्धिय एव हेतोरयं स्वः अयं पर इति भिदा "सह सुपा" (२।१।४) इति समासः ॥ २६ ॥

मिथः परस्परं भावैर्नृपव्याघ्ररोगादिभिर्भावं मनुष्यगवाश्वादिकं घ्नन्तमीश्वरमिति शेषः । पृथग्दृशो बहिर्दृष्टयः ॥ २७ ॥

विशुद्धमकपटं यथा स्यात् विस्रब्धमिति पाठे सविश्वासम् ॥ २८—२९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तौ स्व ततिमकलाधुस्वभावेऽपि साधुस्वभावाविस्याह—भ्रातुरिति ॥ २५ ॥

अहन्धीः देहे अहम्बुद्धिः यतो बुद्धेः पाञ्चभौतिके साधारणे देहे भिदा इदं मम इदमन्यस्येति पृथग्दृष्टिः भवति ॥ २६ ॥

अत एव पृथग्दृशस्ते भावैरज्ञानमूलैरहङ्कारैः शोकाद्यन्विताः मिथोऽन्योऽन्यं तैरेवाहङ्कारैर्ग्रस्तं भावमात्मानं न पश्यन्ति तेऽन्योन्यमात्मघ्ना इत्यर्थः ॥ २७ ॥

एवं विशुद्धाभ्यां प्रत्याख्यातस्तथा भाषितः ॥ २८ ॥

---

भाषा टीका ।

जब भ्राताको या प्रकार बडो अनुताप करत देवकीजी ने देख्यो तब देवकीजी को रोष शान्त होगयो, और वसुदेवजी ने भी रोष त्याग कियो और हँस के अच्छी तरियां कंससों बोलत भये ॥ २५ ॥

वसुदेवजी बोले, कि—हे महाभाग ! जैसें आप कहो हो ये बात ऐसेंई है, देहधारीन की अहंबुद्धि अर्थात् देह में आत्मबुद्धि अज्ञान सों उत्पन्न भई है। जासों अपनो परायो शत्रु मित्र इत्यादिक भेद होय रह्यो है ॥ २६ ॥

शोक, हर्ष, भय, द्वेष, लोभ, मोह, मद, इनसों युक्त पृथक् दृष्टिवारे लोग, परस्पर में पांचभौतिक भावन सोंई देहादिक भावन के हनन करावन वारे ईश्वर कों नहीं देखें हैं ॥ २७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—कंससों ऐसें शुद्ध भाव सों प्रसन्न हो करके देवकी जी और वसुदेवजी जब बोले, तब उन दोनों की आज्ञा सों कंस अपने घर में प्रवेश करत भयो ॥ २८ ॥

---

तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ।
तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥
आकर्ण्य भर्त्तुर्गदितं तमूचुर्देवशत्रवः ।
देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥
एवं चेत्तर्हि भोजेन्द्र ! पुरग्रामव्रजादिषु ।
अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥
किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ॥
नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नातिकोविदाः दृष्टमात्रमतयो न दीर्घदर्शनाः ॥ ३० ॥
न निर्गतानि दश दिनानि येषां तानन्यांश्च ॥ ३१ ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तज्ज्ञानमपि भगवद्बहिर्मुखानां तेषां हृदि सुस्थिरं न स्यादिति दर्शयन् कंसस्य स्वोक्तज्ञानविरुद्धव्यवहारमाह, तस्यामित्यादिना, यावत्समाप्ति । मन्त्रिणः प्रलम्बकेशिचाणूरादीन् ॥ २९ ॥

स्वभावत एव देवानां शत्रवः पुनः कृतामर्षाः सन्तः ॥ ३० ॥

हे राजेन्द्रेति सम्बोधनमिन्द्रस्पर्द्धया भोजेन्द्रेति पाठोऽपि तथैव वै एव अद्यैव ॥ ३१ ॥

ननु, तर्हि देवा युद्धार्थमुद्यमं करिष्यन्ति तत्राहुः—किमिति। ज्याघोषैः पूर्वं युद्धे कृतैः सदा लीलायामपि वा ॥ ३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनिर्दशान् दशाहाऽनतीतान् ॥ ३१—४१ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ प्रभाते मन्त्रिणः आहूय कंसस्तेभ्यो मन्त्रिभ्यः योगमायोक्तमाह ॥ २९ ॥

ततः कंसोक्तमाकर्ण्य ते देवानां शत्रवः दैतेयाः मन्त्रिणः देवान् प्रत्युद्दिश्य कृतोऽमर्षो यैस्तथाभूता नातिकोविदाः कार्याकार्यविवेकरहितास्तं कंसमूचुः ॥ ३० ॥

तदेवाह—एवमित्यादिनैवमुक्तं मन्त्रिभिरित्यतः प्राक्तनेन । एवं चेत् माययैवमुक्तं चेत्तर्हि हे भोजेन्द्र ! पुरादिष्वनिर्दशानतिक्रान्तदशाहानिर्दशांश्च शिशूनद्य हनिष्यामः ॥ ३१ ॥

एवं चेत्समरभीरवो देवाः किमस्मानुद्यमैः प्रयत्नैः करिष्यन्ति न किञ्चिदपि. किञ्च, ते तव धनुषो ज्याघोषैरेव नित्यमुद्विग्नं भीतं मनो येषां तथाभूताः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनिर्दशान् अनिर्गतानि दशाहानि यैस्ते तथाताननतिक्रान्तदशाहानित्यर्थः । निर्दशानतिक्रान्तदशाहान् ॥ ३१—३२ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं मायाकार्यं भगवत्प्रेरणया कृतं निरूप्य स्वतन्त्रतया तत्कृतं निरूपयितुमाह—तस्यामिति यावदध्यायपरिसमाप्ति । यदिदं न कुर्यात् अवध्य एव स्यात् तच्च देवानाम् अनिष्टमिति देवतामाया तत्कार्यं कृतवती असुराणां वा भगवद्रूपा तेषां मुक्त्यर्थं तान् स्वधर्मनिष्ठान् कृत्वा सर्वशास्त्राविरोधिमोक्षं सम्पादयतीति तथा कथा राजधर्मा हि अनुल्लङ्घनीयाः यथा पूर्वमविचारेण कृतं तदन्यथा जातमतःपरं विचारेण कर्त्तव्यमिति विचार्य मन्त्रिण आहूय विचारार्थं पूर्ववृत्तान्तमुक्तवानित्याह—तस्यामिति । ज्ञानस्य जातत्वात् कार्यस्य च विलम्बसहिष्णुत्वाच्च तस्यां रात्र्यां व्यतीतायामित्युक्तं मन्त्रिणोऽपि तामसस्य तामसा एवेति तदात्मना ज्ञापितं देवक्यादौ विनयो यः कृतः स तु नोक्तः योगनिद्रया यदुक्तं तत्सर्वमाचष्ट ॥ २९ ॥

यथा कंसः विवेकरहितस्तथा तन्मन्त्रिणोऽपि तेषां दौरात्म्यमाह—आकर्ण्येति । भर्तुः कंसस्य गदितमाकर्ण्य श्रुत्वा विचार्य च तं प्रत्यूचुः एतेषां कंसरक्षायां न कापि बुद्धिः किन्तु देवद्वेषकरणे अवसरो जात इति हृष्टा इत्याह देवशत्रव इति ॥ ३० ॥

प्रथमतः स्वबुद्ध्या निश्चितं प्रतीकारमाहुः—एवञ्चेदिति । यदि कश्चित् बालक एव जातः स तु मासमध्ये जातो भविष्यतीति अनिश्चयेऽपि सर्वानेव बालकान् मारयिष्यामः ते बालकाः पुरस्थाः ग्रामस्थाः व्रजस्था वा भवन्तु तत्तद्भावनिरूपणार्थं त्रयाणां ग्रहणम् अस्माकं तु न विलम्बस्तदाह अद्येति राजेन्द्र !

अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः ।
जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥
केचित्प्राञ्जलयो[(१)] दीना न्यस्तशस्त्रा दिवौकसः ।
[(२)]मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः ॥ ३४ ॥
न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भय[(३)]संवृतान् ।
हंस्यन्यासक्तविमुखान् भग्नचापानयुद्ध्यतः ॥ ३५ ॥
किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ।
रहोजुषा किं हरिणा शम्भुना वा वनौकसा ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न्द्रेति सम्बोधनम् अज्ञापनार्थं न निर्गतानि दशाहानि येषां ते अनिर्दशाः अतिबालकाः निर्दशास्तु अतिक्रान्तदशाहाः उभयानपि विशेषाकारेण सर्वे एव वयं हनिष्यामः अत्र सन्देहो नास्तीति वै शब्दः दैत्यगृहेष्वपि स्वसम्बन्धिष्वपि जाता हन्तव्या इति राज्ञाचेद्भगिनी पुत्रा मारिताः अन्यैरपि स्वकीया अपि मारणीया इति तैर्ज्ञातम् अन्यथा प्रभुर्न वदेदिति ॥ ३१ ॥

एवं स्वकृत्यमुक्त्वा तस्य भयाभावार्थं तं प्रोत्साहयन्ति; किमुद्यमैरिति षड्भिः । यथा भगवतः षड्गुणाः तथा तव- षड्गुणाः—

सामर्थ्यं च जयश्चैव वीनरत्वं दया तथा ।
शत्रूणामल्पता चैव राजनीतिस्तथैव च ॥

यदि बालका हन्यन्ते अन्यमुपायं करिष्यन्ति देवा इत्याशं- क्याहुः—किमुद्यमैरिति । उद्यममात्रं तेषां न तु क्रियासामर्थ्यं यतः देवाः समरे भीरवः सङ्ग्रामं दृष्ट्वैव बिभ्यति तथा भये तेषां निमित्तमाह नित्यमुद्विग्नमनस इति अयं हि दिग्विजये सर्वानेव मारितवान् इन्द्रोपि भीतः पलायितः ब्रह्मादयोपि लीनाः धृत्वा च देवान् यातनां प्रापयति अतो यद्यन्यार्थमपि धनुष्टङ्कारं कुर्यात् तथापि देवा उद्विग्नमनसो भवन्तीति- नित्यमुद्विग्नमनसः तवेति सम्मत्यर्थं निरूपितम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नातिकोविदाः न कोविदा इत्यर्थः । प्रतीत्यनधिकारार्थम् ॥३०॥
अनिर्दशान् दशदिनेभ्यो न निर्गतान् निर्गतांश्च ॥ ३१—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्यां विशेषत आसुरो भावः स्वकार्ये प्रतिफलेते तं भावमभिमत्य तस्यां व्यतीतायां प्रभाते योगनिद्रया यदुक्तं वाक्- जन्मादिकं तत्सर्वं प्रतिकारं तेभ्य आचष्ट इत्य- न्वयः ॥ २९ ॥

प्रथमतस्तु देवशत्रवः पुनश्च भर्तुर्गदितमाकर्ण्य देवान् प्रति कृतामर्षा जाताः तथाभूताः तं भर्तारमूचुः । ननु, बहूना- मेकस्मिन् कार्ये प्रायो मतिः शुभैवोत्पद्यतेऽतः शुभमेव किञ्चि- दुक्तवन्तः किमित्याह—नातिकोविदा इति । आत्मविनाशायैव दुर्मन्त्रं प्रत्युक्तवन्त इति भावः ॥ ३० ॥

यत्र क्वचन तत्र शत्रुजातस्तर्हि देशतः कालतश्च तन्निश्चया- भावात्सर्वत्र पुरादिषु न निर्गतानि दशाहानि येषां तान् निर्दशांश्च स्वकुलेतरान् सर्वज्ञातिषूत्पन्नान् सामान्यतः शिशून् हनिष्यामः मारयिष्यामः ॥ ३१ ॥

तमप्यनर्थे प्रवर्तयितुं प्रोत्साहयन्ति—किमिति चतुर्भिः ॥३२॥

---

भाषा टीका ।

वा रात्रि के व्यतीत होयवे पै कंस अपने सब मंत्रीन को बुलाय करकें जो कछु योग निद्रा ने रात में वचन कहे सो सब मंत्रिन सों कहत भयो ॥ २९ ॥

अपने स्वामी कंस के कहे भये वचनन कों सुनकें देवतन सों रोष करन वारे देवतान के शत्रु कछु बडे समुझवारे भी नहीं ऐसे वे सब दैत्य कंस सों कहन लगे ॥ ३० ॥

दैत्य बोले, कि–हे भोजेन्द्र ! जो ऐसे बात है तौ पुर में गामन में और व्रज में जितने बालक दश दिन के नहीं भये हैं तिनको और जिनके दश दिन बीत गये तिन सब बाल- कन कों हम लोग अब मारेंगे ॥ ३१ ॥

और सुनों ! संग्राम में डरपोक देवता उद्यम करके भी कहा कर लेवेंगे । वे तौ विचारे तुमारे धनुष की प्रतिञ्चा के टंकार के मारे नित्य ही मन में उद्विग्न रहें है ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्यतो विध्यतः सतः उत्सृज्य रणं त्यक्त्वा ॥ ३३ ॥ ३४ ॥
अन्यासक्तान्विमुखांश्चेति न हंसि न हिनस्सि ॥ ३५ ॥

(१) भीताः इति वीर० विज० वैष्णवतोषिणी । (२) मुक्तकच्छशिखाः इति विज० । (३) सज्जतान् इति वीर० विज० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षेमे निर्भयदेशे शूरैः संयुगादन्यत्र विकत्थनं प्रौढिवादो येषां तैः । ननु, हरेर्बिभेमि शम्भोश्चेति चेत्तत्राहुः—रहोजुषेति । सर्वस्याप्यन्तःप्रविष्टेन क्वचिदपि बहिरदृष्टेनेत्यर्थः । पुरुषप्रवृत्तिरहितमिलावृतवनमोको यस्य तेन शम्भुना वा ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अस्यत इत्यादिना सूचितः कदाचित् कंसस्य देवगणजयो ज्ञेयः तथा च श्रीविष्णुपुराणे तदुक्तौ "किन्न दृष्टोऽमरपतिर्मया संयुगमेत्य सः । पृष्ठेनैव वहन् बाणानपगच्छन्न वक्षसा ॥ मद्राष्ट्रे वारिता वृष्टिर्यदा शक्रेण किं तदा । मद्बाणभिन्नैर्जलदैर्नापो मुक्ता यथेप्सिताः" इति पलायनपरा विमुखतया धावन्त इत्यर्थः ॥ ३३ ॥

प्रबद्धो मूर्ध्नि धृतोऽञ्जलिर्यैस्तादृशा बभूवुरिति शेषः । यतो दीनाः दुःखिताः क्षीणचित्ताः वा भीता इति क्वचित्पाठः ॥ ३४ ॥

अहो तव धर्मपरिपालनेनैव देवा जीवन्तीत्याहुः—न त्वमिति । धृतान्यपि भयाकुलतया विस्मृतानि खड्गादीनि शरादीनि च यैस्तान् ॥ ३५ ॥

ननु, तथापि जीवन्तस्तेऽभिमानिनोऽवश्यं विक्रमं दर्शयिष्यन्ति तत्राहुः—किमिति सार्द्धकम् । असंयुगं क्षीरपाश्र्वादि अन्यत्तैः तत्र सर्वैरयेत्यादिवास्तवार्थः दैत्यानामभिप्रेतस्तु क्षीरोदादौ त्वद्भयेन निहुत्य तिष्ठतीत्येव इति ताभ्यां तव रणसङ्कटेनागन्तव्यमेवेति भावः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्यतः शरान् क्षिपतस्तव शरसङ्घैर्हन्यमानाः जीवितुमिच्छवः पलायनमेव परं रक्षणोपायो येषां तथाभूताः उत्सृज्य आयुधानीति शेषः । समन्ततो ययुः ॥ ३३ ॥

केचिच्च दिवौकसो देवाः भीतास्तस्थुरिति शेषः । अत एव त्यक्तानि शस्त्राणि यैस्तथाभूताः केचिच्च मुक्ताः विश्लथाः कचाः शिखाश्च येषां मुक्तकक्ष्यशिखा इति पाठे मुक्तग्रन्थयः शिखा येषां तथाभूताः भीताः स्म इति वदन्तः प्राञ्जलयस्तस्थुरिति शेषः ॥ ३४ ॥

अथापि त्वं विस्मृतानि शस्त्राण्यस्त्राणि च यैः मन्त्रशक्त्युपबृंहितान्यस्त्राणीतराणि तु शस्त्राणि इति विवेकः विगता रथा येषां तान् भयात् सन्नतान् कृतप्रणामांश्च हंसि न हतवान् शरणागतरक्षकत्वादिति भावः तथाऽन्यासक्तान् युद्धं विहाय प्रयोजनान्तरासक्तान् पराङ्मुखांश्च भग्नचापान् भग्नधनुष्कानत एवायुध्यतश्च देवान्न हंसि ॥ ३५ ॥

क्षेमे स्वगृह एव शूरैः संयोगादितरत्र विकत्थनं प्रागल्भ्यवचो येषां तैर्विबुधैः किं न किञ्चिदपि कर्तुं शक्यमित्यर्थः । आस्तां तावत्सामान्यदेवानां वार्ता, देवश्रेष्ठैर्हरिहरेन्द्रादिरपि न किञ्चिदित्याहुः—रह इति । रहोजुषा त्वद्भयाद्विजनदेशसेविना यद्यपि तैः किञ्चिदपि कर्तुं न शक्यं तथापि सापत्न्याच्छत्रुत्वाद्देवाः नोपेक्षणीया इति मन्यामहे ततस्तन्मूलखनने सपत्नमूलोन्मूलने निमित्तेऽनुव्रतान् भृत्यानस्मान्नियुङ्क्ष्वाज्ञापय ॥ ३६—३७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्यतः क्षिपतः ॥ ३३ ॥

कक्ष्या काञ्ची "कक्ष्या करिवरत्रायां काञ्च्यां गेहे प्रकोष्ठके" इति यादवः ॥ ३४—३५ ॥

क्षेमशूरैः असंयुगविकत्थनैः रणादन्यत्र विविधजल्पैः रहोजुषा एकान्तसेविना वेदशिरःप्रतिपाद्येन वा वनौकसा कैलासशिखरकान्तारमन्दिरेण शासामाश्रयेण तेजोमूर्तिनेत्यर्थः । "ओकसी मन्दिराश्रयौ" इति यादवः "वनं भास्यप्सु कानने" इति च ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रहोजुषा निलीयस्थितेनेति तेषां विवक्षितं टीकायान्तु वास्तवार्थ एव ॥ ३६ ॥ ३७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धनुष्टङ्कारमात्रेणैव उद्वेगं पूर्ववृत्तान्तं हेतुत्वेनाह—अस्यत इति । अस्यतः शरान् क्षिपतस्तेऽसतः संमुखमनागताः अपि तैः क्षिप्तैरेव शरव्रातैः सर्वतो हन्यमानाः सञ्छिन्नभिन्नसर्वाङ्गा अपि जिजीविषवोभूत्वा धर्मं संग्रामं चोत्सृज्य पलायनपराः सन्तो ययुः देशस्याविवक्षितत्वात् यत्र क्वापि ये तु दूरस्थाः ते पलायिताः ॥ ३३ ॥

येपि निकटस्थाः तेऽपि जिजीविषवोभूत्वा पलायनासम्भवादुपायान्तरं कृतवन्त इत्याहुः—केचिदिति । प्राञ्जलयः स्तोतुमिव प्रवृत्तानां कायिकी अवस्था प्रदर्शिता भीता इत्यन्तःकरणस्य त्यागेन हन्यत इति शास्त्रार्थपरिपालनाय न्यस्तशस्त्राः तर्हि तेषां कथं स्वधर्मत्यागे स्वर्गो भविष्यतीत्याशंक्याहुः—दिवौकस इति । स्वर्ग ओको गृहमात्रं न तु स्वर्गभोग इत्यर्थः । ननु देवाः कथमयुक्तं कृतवन्त इत्याशङ्क्याहुः मुक्तकच्छशिखा इति । मुक्ताः कच्छाः शिखाश्च येषां परमापदा वैकल्यं तेषामुक्तम् आपदि स्वधर्मास्त्यक्तुं शक्यन्ते येषां पुनर्दैवगत्या मुक्तकच्छशिखात्वं न जातं तेषां का गतिरिति चेत्तत्राह केचिद्भीताः स्म इति वादिन इति शरीरे भीतकार्यस्यादर्शनात् मुखत एव भीता वयमित्याहुः ॥ ३४ ॥

ननु, ये वध्यास्ते सर्वथैव वध्या इति वचनेपि किं स्यात्? तत्राहुः—नत्वमिति । सङ्ग्रामधर्मस्त्वया न त्यज्यते अतः ये देवाः विस्मृतशस्त्रास्त्राः भयात् शस्त्राणि धृत्वा यैर्मोच्यते अस्त्राणि दूरात् मन्त्रयुक्तानि वा भयादुभयविधान्यपि विस्मृतानि विगतो रथो येषां सारथ्यादीनां वध्यात् "प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित्" इति वाक्यात् विरथोऽप्यवध्यः भयेन सम्यक् नताः शरणागताः प्रसङ्गादन्यानप्याहुः अन्यासक्तविमुखान्

किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ।
तथाऽपि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ।
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥
यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान् बद्धबलो न चाल्यते ॥ ३८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यासक्ताश्च ते विमुखाश्च उभयविधा वा भग्नचापान् गतसाधनान् अयुध्यतः निरीक्षकान् न हंसीति संबन्धः एते षड्विधाः सप्तविधा न हन्तव्याः अतस्त्वया स्वधर्मे परिपाल्यमाने पूर्वन्यायेन देवा जीविना इति भावः ॥ ३५ ॥

एवं साधारणानामप्रयोजकत्वमुक्त्वा महतामप्याहुः—किं क्षेमशूरैरिति । येऽपि वाय्वग्निवरुणादयः शूराः प्रसिद्धाः तेऽपि क्षेमशूरा एव क्षेमे सति गृहे भार्यायां वा शूराः यत्र क्षेमशङ्कैव नास्ति न हि भार्या पतिं मारयिष्यतीति सम्भावना यत्र पुनः सम्भावना मारयिष्यन्तीति तत्र पलायनमेव एतदर्थपरिज्ञानादेव विबुधाः एतच्छरीरं शौर्यं तेषां निरूप्य वाचनिकं शौर्यं निरूपयन्ति असंयुगविकत्थनैरिति । विकत्थनं स्वशौर्याविष्करणवाक्यं तदपि न संयुगे केनापि सह यदा न युद्धसंयोगः तदैव विकत्थनम् एवं देवान् दूषयित्वा मुख्यान् चतुर आहुः अस्ति हरिः शूरः परं कस्यापि स सम्मुखो भवति यस्त्वेकान्ते तदेकपरस्तिष्ठति हरिरपि तस्य सम्मुखो भवतीति स्तुतिपक्षे यथा श्रुतमेव पक्षान्तरे स्तुतिरूपता निरूपिता हरिणेति सर्वदुःखनिवारकत्वं निरूपयन्तः दुःखितेष्वेव शौर्यादिरहितेषु तस्याविर्भावो निरूपितः । अस्ति च त्रिपुरान्तकः शूरः सोऽपि सर्वदा वनवासी तपस्वी न हि वनस्थः तपस्वी कस्य चित् द्विषो भवति असमर्थत्वात् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्यतः विध्यतः सतः उत्सृज्य रणं त्यक्त्वा ॥ ३३—३४ ॥

तत्र धार्मिकत्वमेव तेषां वृद्धौ हेतुरित्याहुः—न त्वमिति, तेनातःपरं धार्मिकत्वं त्यज्यतां धर्मस्य नायं काल इति भावः ॥ ३५ ॥

वयं तु तेभ्यः कदापि न बिभीम इत्याहुः क्षेमे निर्भये देशे शूरैः संयुगादन्यत्रैव विकत्थनं प्रौढिवादो येषां तैः न च हरेः शम्भोर्वा भेतव्यं तयोरपि त्वत्तुल्यबलत्वाभावादित्याहुः रहोजुषेति । यदि बलं स्यात्तदा किमिति प्रकटीभूय न युध्यते किमिति लोकानामन्तःकरणेषु प्रविश्य निह्नुयते इति भावः वनौकसा पुरुषप्रवेशरहितमिवावृतवनमोको यस्य तेन ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्यतः बाणान् क्षिपतस्ते सतः शरव्रातैस्त्वन्निसृष्टैर्बाणसमूहैर्हन्यमानाः समरमुत्सृज्य पलायनपराः सन्तो ययुः अपगच्छेयुः ॥ ३३ ॥

तेषु केचिज्जीवनोपायज्ञाः सर्वत्र तव चक्रभयज्ञाः एवं करिष्यन्तीत्याहुः केचिदिति ॥ ३४ ॥

अन्यत्र कलत्रादावासक्ताश्च ते विमुखाश्च तान् युध्यतोऽपि न हंसि न हिंसास्सि ॥ ३५ ॥

ननु, केचिदतिबलास्ते कथमपयास्यन्ति कथन्तरामञ्जलिकर्मादिपरा वा भविष्यन्तीत्यत आहुः—किमिति । क्षेमे निर्भये देशे काले च शूरैः असंयुगे असंग्रामे अजेया वयमित्यादिविकत्थनं येषां तैः विबुधैः किं न किमपि ननु विष्णवाद्याः न क्षेमशूरा न चासंयुगविकत्थना अत्राहुः रहोजुषेत्यादि ॥ ३६ ॥

भाषा टीका ।

और पहिलें का हमनें देखेई नहीं हैं जाविरियां आप चारों तरफ सों संग्राम में बाणों की वर्षा करो हो, तब वे बिचारे देवता रण छोडकें भाजने के तांई फेट बांधकें अपने जीवने की इच्छा सों भाज जाय हैं ॥ ३३ ॥

और कितने तो जो भाजने मेंऊ असमर्थ होवे है ते देवता दीन होयकें शस्त्रन कूं फैंक कें अपनी २ कच्छा और शिखान कों खोलकें अंजलि बांध के आपके सन्मुख आवें हैं और आपसों विनती करें "कि महाराज ! हम भय भीत हैं हमकों छोडदेओ ॥ ३४ ॥

ऐसें जब वे प्रार्थना करन लग जाय हैं और भूल गये अस्त्र शस्त्र जिनके, और विरथ, भय सों व्याप्त, अन्य कार्य में आसक्त, युद्धसों विमुख, टूट गये धनुष जिनके, ऐसी दुर्दशा कों वे जब प्राप्त होजांय है, तब आपके शरण आवें फिर आप उनको मारो नहीं हो और छोड देओ हो ॥ ३५ ॥

कुशल समय में शूर और रणसों बाहर अपनी बडाई करन वारे इन देवतन सों कहा है । ऐसेई तुमारे डरके मारे सब के हृदयन में प्रवेश करनवारे वा शंभु सों भी कहा होवेगो ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यप्युद्यमैर्देवा न किञ्चिदपि कर्तुं समर्थास्तथापि नीतिरङ्गुसतेऽपेत्याहुः, तथापीति ॥ ३७ ॥

मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ।
तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥ ३९ ॥
तस्मात्सर्वात्मना राजन् ! ब्राह्मणान् ब्रह्मवादिनः ।
तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूढपदो बद्धमूलः ॥ ३८ ॥

देवानां मूलं विष्णुः स च यत्र धर्मस्तत्राऽऽस्ते धर्मस्य मूलं वेदादय इति ॥ ३९ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तथापि देवेन्द्रोऽवश्यमागन्ता तत्राह किमिति । ननु ब्रह्मा तत्सहायो भविता तत्राहुः—ब्रह्मणेति तपःपरत्वेन विक्रमाभावात् तपो व्ययभिया शापाप्रवृत्तेश्च तेन सहायेनापि सता किमित्यर्थः मन्महे मन्यामहे ननु, देवा भीताः पलायिष्यन्त एव तत्राहुः तत इति । तेषां देवानां मूलस्य बालकरूपेणावतीर्यं स्थितस्य गुप्तस्य विष्णोः खनने हिंसनेऽस्मान् नियुङ्क्ष्व ॥ ३७ ॥

ननु, गुप्तश्चेदसमर्थ एव स मम इति किङ्करिष्यति तत्राहुः—यथेति । कदाचिन्महौषधादिप्रभावेण तच्चिकित्सासम्भवमाशङ्क्य दृष्टान्तान्तरमाहुः—यथेन्द्रियेति । बद्धबलत्वादेव महान् विप्लवः सन्न चाल्यते स्थानाद्भ्रंशयितुमपि न शक्यते किमुत हन्तुमित्यर्थः ॥ ३८ ॥

अथ मूलस्य तस्य गुप्तस्यापि हननोपायं सार्द्धैश्चतुर्भिर्वदन्तो मूलत्वमेव तद्रहस्यविदामृषीणां वचनानुवादेनापि सपरिकरं निर्दिशन्तस्तत्खननमेव दृढीकुर्वन्ति मूलमिति हि वेदे प्रसिद्धं सनातनः अनादिसिद्धो वेदप्रसिद्धः नतूपधर्मादिरित्यर्थः । धर्मः अपूर्वः तपः स्वधर्माचरणं नित्यनैमित्तिकलक्षणं यज्ञशब्देन काम्यकर्माण्युपलक्ष्यन्ते सदक्षिणा इति तथैव साङ्गतया धर्ममूलतासिद्धेः ॥ ३९ ॥

अथ तथापि तस्य विष्णोरहोजुहूत्वेऽपि तत्परिकरहननैव हननं स्यादित्याहुः—तस्मादिति । सर्वात्मना सर्वेणैव प्रयत्नेन हन्मः तेषां हननमेवास्माकं तद्धर्मोपमर्दकः परमो धर्म इति तान् हन्यामेवेत्यर्थः । हे राजन्निति तव प्रभावेणैव सुतरामेवेति भावः ब्राह्मणहनने हेतवः ब्रह्मेत्यादि तत्राद्ये स्वतो वेदादिनाशसिद्धेः गोहनने हेतुः हविर्दुघाः घृतादियज्ञीयद्रव्यप्रदाः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सापत्न्याच्चोपेक्ष्या इत्येतदेव सदृष्टान्तमुपपादयन्ति—यथेति । यथाऽङ्गे शरीरे समुत्पन्न आमयो व्याधिस्तावन्न्रुभिर्यत्नेन मूलोन्मूलनेनोपेक्षितोऽत एव रूढमूलः सन्चिकित्सितुं प्रतिकर्तुं न शक्यते यथा च तावद्योगिभिरुपेक्षितः इन्द्रियग्रामस्ततो दुर्निग्रहस्तथा रिपुरपि तावदुपेक्षितस्ततो रूढबलश्चालयितुमपि न शक्यते तर्हि किं तत्सपत्नानां मूलं यद्विनाशितव्यम् इत्यत्राहुः— मूलं इति । सनातनोऽनादिनिधनाविच्छिन्नसम्प्रदायवेदोपवेदबोधितो धर्मः वर्णाश्रमानुगुणो यत्र विष्णौ यद्विष्णवधीनः स विष्णुर्देवानां मूलं रहस्सेवी स कथं छेत्तव्य इत्यत्राहुः तस्येति ब्रह्म वेदः गावश्च विप्राश्च गोविप्राः तप इति पृथक् पदं ब्रह्मादयस्तस्य विष्णोर्मूलम् इत्यनुषङ्गः ॥ ३८ ॥ ३९ ॥

तस्मात् हे राजन् ! सर्वात्मना नानोपायेन ब्रह्मवादित्वादिगुणयुक्तान् ब्राह्मणान् हविः सान्नाय्यं दुहन्तीति तथा ताश्च गाः हन्मः हनिष्यामः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेषां मूलोत्पाटने ॥ ३७ ॥

अङ्गे शरीरे आमयः कुष्ठादिः रूढं पदं व्याप्तं स्थानं येन सः ॥ ३८ ॥

कः साक्षात् मूलमित्यत्राह—मूलमिति । तस्य विष्णोर्मूलम् ॥ ३९ ॥

हन्मः हनिष्यामः हविर्दुघाः यज्ञयोग्यं घृतं दुहन्तीः छन्दसि हकारस्थाने घकारः ॥ ४०–४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेति । बद्धबलत्वेन महान् विप्लवः सन् ॥ ३८ ॥

धर्मोऽपूर्वः तपः स्वधर्मः यज्ञाः काम्यधर्माः ॥ ३९ ॥

सर्वात्मना सर्वेणैव प्रयत्नेन ॥ ४०—४५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

देवेन्द्रस्तु यद्यपि वृत्रहा तथाप्यल्पवीर्यः अन्यथा वज्रादिप्रार्थनां कथं कुर्यात् ब्रह्मा यद्यपि महान् भवति तथापि ब्राह्मण एव तपस्वी एवं यद्यपि सर्वे देवा अप्रयोजकाः तथापि राजनीतिविचारेण ते नोपेक्ष्या इत्याह—तथापीति । देवानां दैत्यानां च सापत्न्यमस्ति कश्यपदायादाः सर्वे भिन्नमातृजाः ते शत्रव एव परस्परं भवन्ति अतः सहजद्वेषित्वात् यदैव ते पुष्टा भविष्यन्ति तदैव मारयिष्यन्तीति नोपेक्ष्याः क्षीणदशायामेव मारणीया अयमर्थो भवति नवेति विचारकाः जानन्ति वयं त्वेवं मन्महे एवं माहात्म्यं नीतिं चोक्त्वा किं कर्तव्यमित्याकाङ्क्षायामाहुः—तत इति । यदेव देवानां मूलं भविष्यति तस्यैव खनने नियुङ्क्ष्व आज्ञापय अनुव्रतानिति योगेन रूढ्या च सर्वथा भवन्तमनुसृता वयं मूलमग्रे वक्तव्यं खननं च मध्ये उपेक्षायां

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेव अमृतं स्वादु आसवं मादकं शर्वादयो रुद्रादय इत्यहङ्कारस्येन्द्रियद्वयस्याधिष्ठातृदेवताद्वयस्य त्यागात् चित्ताधिष्ठातुर्वासुदेवस्यापि तदभेददृष्ट्या त्यागादेकादशैव पिबामः अत्र यद्यप्यभिमन्तुरात्मन एव विषयभोगो न तु तत्कर्तॄणामिन्द्रियाधिष्ठातॄणामित्यध्यात्मसिद्धान्तस्तथापि बुद्धौ ब्रह्मा तिष्ठति चक्षुषि सूर्यस्तिष्ठति तं तमधिष्ठातारं विना तत्तदिन्द्रियं श्रीकृष्णनिष्ठानामपि रूपरसादीनां ग्राहकं न स्यादिति सामान्यदृष्ट्या अध्यात्मविदां प्रवादोऽपि श्रीकृष्णे रत्युत्कण्ठवतां ब्रह्मादीनामानन्दहेतुः कर्त्तृत्वमात्रेणैव भोक्तृत्वाभिमानस्वीकारात् तथैव स्वेषां प्राकृतत्वेऽपि प्राकृतत्वेऽपि अप्राकृततत्तदिन्द्रियाधिष्ठातृत्वाभिमानाच्च प्रेम्णामेव विलक्षणेयं प्रक्रिया दृश्यते चान्यत्र पद्यावल्यादौ "मिथ्यापवादवचसाप्यभिमानसिद्धिः" इत्यादीति अन्यथा चिदानन्दमयवपुषां श्रीभगवत्परिवाराणामिन्द्रियादीनामपि भगवत इव तन्मयत्वमेव न तु प्राकृतत्वं सम्भवेत् कुतस्तत्र प्रपञ्चगतानां ब्रह्मादीनां प्रवेश इति ज्ञेयम् । यद्वा, कादाचित्केनापि सम्भाधुरीपानेन स्वेषामपि भाग्यमभिनन्दति, एषामिति । भाग्यमहिता एका अद्वितीया अनुपमेत्यर्थः । दशैव दशापि वयं दिक्पालदेवताः भूरिभागा भवामः कुत इत्यत आह, एताहिति स्वाधिष्ठाननेत्रश्रोत्राणि स्पृशति वत्सचारणाय वनाभिक्रान्तस्य तव चरणसौन्दर्यसौरस्यामृतं नेत्रश्रोत्रैः पिबाम इति ॥ ३३ ॥

तस्माज्जगदैश्वर्यार्थं प्राप्ताय प्राप्तव्याय मोक्षाय च मया अद्याभिर्वन्दितः केन प्रकारेणैषां व्रजवासिनां चरणधूलयो लभ्यन्त इति विभाव्य सनिश्चयमाह—तदेव मे भूरिभाग्यं भवत्विति शेषः । यदि श्रीमत्कृपाकटाक्षा उदारा भवन्तीति भावः किन्तत् इह अटव्यां वृन्दावने यत् किमपि कोमलतृणदूर्वादिजन्म यदुपरि त्वत्प्रियसखादिव्रजवासिजनचरणविन्याससौभाग्यं लभ्भवेत् । नन्वहिमनातितुच्छे लोभं विहाय स्वयोग्यमन्यत्प्रार्थयस्वेति चेत्तर्हि गोकुलेऽपि त्वन्नगरप्रान्तादावपि कतमस्य त्वदीयवीचिककारुहडिवाद्येकतरस्याप्यङ्घ्रिरजसोऽभिषेको यत्र तथाभूतं शिलापीठपट्टकादिजन्म भवतु, नन्वेषां व्रजवासिनामीसाक्ष्माहात्म्यवत्त्वे को हेतुः कथं वा जगत्पूज्यस्य जगत्स्रष्टुः परमेष्ठिनस्तवैषां नीचजातीनां पादधूलिलिप्सायां नास्ति लज्जेति तत्राह, येषां जीवितं भगवान् भगं श्रीकाममाहात्म्येत्यमरनानार्थवर्गात् सौन्दर्यसौरस्यादिगुणविशिष्टो भगवान् मुकुन्दः मुखे कुन्दवद्धास्यं यस्य सः इति त्वत्सौन्दर्यादिमन्दहसितान्येव जीवनोपायः तेन विना सद्य एवामी म्रियन्ते इत्येतेषामसाधारणकस्यापि महाप्रेमैव सर्वोत्कर्षे हेतुरिति भावः । निखिलमिति किञ्चिदपि जीवितम् भोजनपानादिहेतुकमित्यर्थः, अतोऽद्यापि येषां पदरजः श्रुतिभिर्मृग्यत एव न तु प्रायः प्राप्यत इत्यतोऽहं ब्रह्मापि किं येभ्योऽप्यधिको यत एतत्प्रार्थने मम लज्जा स्यादिति भावः अतो मया तदस्तु मे नाथेति यत पूर्वं प्रार्थितं तस्वस्य वैधभक्तिमत्त्वे एव यदि व्रजजनानुगतिमत्त्वेन मां रागानुगामृताम्भोधौ निमज्जयसि तदेवं प्रार्थितम् ॥ ३४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च, हे अच्युत, नित्यमूर्त्ते ! एषां नन्दगोपव्रजौकसां भाग्यस्य महिता महिमा तावदास्ताम्, कस्तद्वर्णने क्षम इत्यर्थः । बुद्ध्याद्यधिष्ठातारो वयमेकादश अन्ये चाहङ्काराद्यधिष्ठातारः शर्वादयः स्वयः भूरिभागा महाभाग्यवन्तः यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पात्राणि तैः अङ्घ्रिपद्मोद्भवे कमले तवाभिमधु मकरन्दस्तदेवामृतं स्वादु आसवं मादकमसकृत्पुनः पुनः पिबामः यदा प्रत्येकं करणाधिष्ठातारो वयं कीर्तिसौन्दर्यसौगन्ध्याद्येकैकदेशसेविनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेविनां किं वर्ण्यते इति भावः ॥ ३३ ॥

तस्मात् यन्मया प्रार्थितं "तदस्तु मे नाथ ! स भूरिभागः" इति तद्भूरिभाग्यमिदमेवेत्याह—तद्भूरिभाग्यमिति । किं तदित्याकाङ्क्षायामाह—इह मनुष्यलोके तत्रापि अटव्यां तत्रापि गोकुले गोपीगोपानां गमनागमनादियत्रद्वारभूमौ यत्किमपि जन्म तत् अहो ब्रह्माण्डाधिपतेरत्र तव जन्म प्रयोजनं किमत आह—अपि कतमाङ्घ्रिरजोभिषेकमिति । गोकुलवासिनां मध्ये अपि कतमस्याप्यङ्घ्रिरजोऽभिषेको यस्मिन् तत् । नन्वत्यानामेवातिमहत्त्वे को हेतुस्तत्राह—यदिति । यत्र येषां जीवितं तु भगवान् मुकुन्दस्त्वं निखिलं साङ्गं सफलं करोषि यत् यस्य तव पादरजः श्रुतिभिर्मृग्यमेव न तु दृश्यते प्रथमस्तुशब्दो भगवत्सम्बन्धवर्जितस्य जीवितस्य तुच्छत्वं सूचयति, द्वितीयस्तुशब्दो भगवदितरैः सफलीकृतस्य जीवितस्य तुच्छत्वं सूचयति ॥ ३४ ॥

### भाषा टीका ।

हे अच्युत ! इन सबन के भाग्यकी महिमाको तो कोन वर्णन करसके परंच श्रीशिवजी सो आदिले के ( इन्द्रियन के अधिष्ठाता ) हम एकादश देवता हू बडे बडभागी हैं जो इन इन्द्रिय रूप कटोरान सो भर भर के आपके श्रीचरणारविन्द को अमृतसरीको मधुर और आसवके तुल्य मादक मकरंदपानकरे हैं, जब हम एक २ इन्द्रियनके अधिष्ठाता कीर्त्तिसौन्दर्य सौगन्ध्यादि की सेवा सों कृतार्थ होय रहे हैं, तब जो सब इन्द्रियन सों सर्व सेवा करवे वारे हैं तिनके भाग्य को कोन वर्णन करसके ॥ ३३ ॥

तासों मैंने जो प्रार्थना करी ही कि—मोकूं भूरि भाग्य होय, सो अबवो येई भूरिभाग्य है, कि—याई वृन्दाटवी ( वृन्दावन ) में वा व्रज में हू मेरो कोई भी जन्म होवे कि, जासों कोई विलक्षण अधिकारिन की चरण रजसों अच्छी तरियां मेरो अभिषेक भयो करे, कौन के चरण रजको अभिषेक अपेक्षित है, तहा कहें हैं, कि—जिनको सर्व विध सकल जीवन भगवान् मुकुन्द हैं । और अबताई जिनके चरण रज को श्रुति ढूंढे हैं ॥ ३४ ॥

एषां घोषनिवासिनामुत भवान् किं देवरातेति न—
श्चेतो विश्वफलात्फलं त्वदपरं कुत्राऽप्ययन्मुह्यति ॥
सद्वेषादिव पूतनाऽपि सकुला त्वामेव देवापिता ।
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥ ३५ ॥
तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण ! न ते जनाः ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अपि च किं वर्ण्यते कृतार्थत्वमेतेषां येषां भक्त्या भवानपि ऋणीवास्ते। ननु, किं दातुमसमर्थोऽहं येन ऋणी स्यामत आह उत अपि भवानपि एषां कुत्रापि किं विश्वफलात्सर्वफलात्मका-त्त्वत्तः परं फलं दाता दास्यतीति नश्चेतः अयत्सर्वत्र गच्छ-त्स्वरतः परं फलं दाता दास्यतीति ... इति मुह्यति। ननु, मामेव दत्त्वा नृणः स्यामिति चेत्तत्र हि ... सद्वेषादिव सतां भक्तानां यो वेषस्तदनुकरणमात्रेण न हि सद्वेषादिव सतां भक्तानां यो वेषस्तदनुकरणमात्रेण पापिष्ठा पूतनाऽपि त्वामेवापिता प्रापिता तर्हि तत्सम्बन्धिनामपि दास्यामीति चेत्तत्राह—सकुलेति। बकाघासुरसहिता एषामपि ताव-देव चेदपर्याप्तमित्याह, यदिति। येषां धामादयस्त्वत्कृते त्वदर्थमेवे-त्यर्थः ॥ ३५ ॥

ननु, वीतरागादिदोषाणां संन्यासिनामपि न भवः परं किञ्चिद्ददाति कथमेषामपर्याप्तमित्यत आह—तावदिति। हे कृष्ण ! रागादयस्तावदेव स्तेनाश्चोरा भवन्ति तथा तावदु गृहमपि कारागृहं बन्धनागारम्, मोहोऽपि तावदेवाङ्घ्रिनिगडः पाद-शृङ्खला यावत्ते त्वदीया जना न भवन्ति त्वदीयानां तु रागा-दयोऽपि त्वन्निष्ठा मोचका एवेति न यतिभ्यो विशेषो भजनं स्वाधिकमिति भावः ॥ ३६ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

मुह्यतीति निश्चयाशक्तेः। यद्वा ऋणित्वेनैषां वश्यतया माह-त्म्यात् विद्यायान्नैव स्थास्यतीति शोकाद्यतिशयेन मोहं प्राप्नोति सकुला बकाघासुरसहितेति तयोर्भगवत्प्राप्तिहेतुतत्स्पर्शादिप्राप्तौ तत्सम्बन्ध एव हेतुरिति ज्ञेयम् अन्यत्तैर्व्याख्यातम्, विश्वफलादपी-त्यपिशब्दान्वयः गत्यर्थादिधातोर्ज्ञानार्थत्वात् कथञ्चित्कदाचि-दप्यजानन्नित्यर्थः ॥ ३५ ॥

आदिशब्दात् क्रोधादयः तदीयानां क्रोधोऽपि भक्तिः नर्त्तना-दिना बुभुक्षूणामन्येषामपि मोचकत्वे पर्यवस्यत्येव कृष्ण ! हे साक्षात्परमेश्वर ! अन्यत्तैर्व्याख्यातम्। यद्वा, यदि भवदर्थमेवैषां धामा-दयः तर्हि कथं विषयभोगादौ रागादयः आतिथ्यपालनादिगा-र्हस्थ्यं वा अन्योऽन्यं स्नेहो वा दृश्यते तत्राह, कृष्णस्य तव न ते। यद्वा हे कृष्ण, सर्वथा परमानन्दप्रद ! अर्थात्त्वैव नते नमने भक्तावित्यर्थः। स्तेनाः स्वभावतो लोकानां विवेकधैर्यादिगुणा-पहरणशीलाः अपि विषयभोगादौ रागादयो भवन्ति आदिशब्दा-

त्तद्माप्त्यादौ क्रोधादयोऽपि ज्ञेयाः सङ्कीर्णत्वादिना कारागारवद्दुः-खदमपि गृहं गृहस्थाचारः अङ्घ्रिनिगडवद्बन्धनापादकोऽपि मोहः अन्योऽन्यं स्नेहभरश्च भवं भावः। भक्तानां स्वभावतस्तद-र्पितमहाप्रसादद्रव्यादावेव प्रवृत्त्या तत्र रागलोभादीनामपि भक्तिपरिपोषकत्वात् तथा तदन्यत्र प्रवृत्तजनेषु क्रोधस्य च भक्तिप्रवर्त्तकत्वात् तथा वैष्णवातिथिसेवादिना गार्हस्थ्ये सर्व-हितसाधारणात्स्वद्वारोपयुक्ताः तत्रैवेति तत्र च यावत्साधकं विना तत्र प्रवृत्त्यसम्भवादिति ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु, भवद्विधावाऽपि यद्येषां चरणरज एव परमफलत्वेन दास्ये तर्हि एभ्यो वा किं दास्ये। किञ्च, पूर्वं भवता त्वां बन्धु-मेव त्वां स्तौमीति प्रतिज्ञातम् अधुना पुनरेतच्चरणरज एव प्रार्थ्यते भद्रेयं निष्ठा भवद्विधानामिति सनर्मप्रश्नमाशङ्क्य तथैवाह, एषामिति। एषां पूर्वोक्तमाहात्म्यानाम् उत प्रश्ने विश्वफलादपी-त्यपिशब्दान्वयः ततश्चास्याः श्रीव्रजभूमेरूर्द्ध्वं तव स्थानं नास्ति एतत्स्वरूपादूर्द्ध्वं च फलं नास्तीति कुत्र च किं दातेत्यर्थः। अय-दिति नञ् पूर्वमिणधातो रूपं त्वत्तः परं फलं कुत्राऽप्यजान-दित्यर्थः। मुह्यतीति निश्चयाशक्तेः सतां सद्भावयुक्तानां व्रज-वासिविशेषाणां धात्रीजनानां वेशात् "लेभे गतिं धात्र्युचितां ततोऽन्यम्" इति तृतीयोक्तेः इवेति तत्रापि हिंसामयदम्भेनैव न तु भक्त्येत्यर्थः। अतः समानफलत्वं कथं स्यादिति भावः। पूतनाऽ-पीत्यन्यस्य का वार्त्तेत्यर्थः। अपिशब्दोऽयं यथा योग्यमन्यत्राऽपि योज्यः। सकुलेति, प्राक्तनाधुनिकतत्कुलोत्पन्नसहिता गोकुलप्राप्ति-कृतत्वेन निर्देशात् बकाघयोस्तु स्वतन्त्र एव तत्स्पर्शोऽस्त्यन्ये-ष्वेव त्वामेवेति पूतनायाः साक्षात् अन्येषां तु भगवद्द्वे-षिणां पूतनानुवर्त्तित्वेनैव बकाघयोस्तु विरोधित्वेनान्मुक्तिमात्र-मिति ज्ञेयम्, आपिता त्वयैवेति शेषः। सुहृत् निरुपधिहितकारी प्रियस्ताद्दशप्रीतिविषयः त्वत्कृत इति प्रत्येकं स्वाभाविक-मेव तेषां त्वदेकार्थत्वं तव पुनस्तत्तद्भेदेनानेकप्रियजनार्थत्व-मित्यर्थः। तदेवं ते पूर्णा एव श्रीभगवच्चरणास्तु प्रत्युप-काराऽसामर्थ्येनाऽपूर्णा इव ततस्तेभ्यः किमिव दास्यन्ति अतोऽहमपि भवतामृणित्वेन पारवश्यमाशङ्क्य तादृशनिजा-भिलाषसिद्ध्ये तच्चरणरजःशरण एव भवितुं युक्त इति भावः। तदेवमपि श्रीकृष्णतद्वासिनोरव्यभिचारित्वमेव व्यञ्जितम्,

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा पूर्वपक्षभङ्ग्यैवाऽयं परमसिद्धान्तः सूचितः । तादृश-तद्वशीकारमयप्रेम्णा एव परमफलत्वात् ॥ ३५ ॥

ननु, धामादीनां मदेकार्थतयैव यदि तेषां महिमा तर्हि भवानपि निजगृहं गत्वा तथैवाचरेति चेत् ? आस्तां तावदेषा-मात्मनोऽपि त्वदेकार्थत्वेनात्मारामगणेभ्योऽपि महत्तरं भाव-माहात्म्यं मादृशां तु भवदुन्मुखत्वमपि दुर्घटमित्याह—ताव-दिति । अयमर्थः रागो विषयप्रीतिः, तदादयस्तन्मयविषयलाभा-लाभहानिषु हर्षविषादशोकाद्याः गृहं विषयमात्रं मोहो रागा-दिहेतुरविवेकः ते च तत्तद्विक्रियायां रागमुखानिरीक्षका एव सर्वे इति प्रथमं स एवोक्तः, तत्र निरुपाधिप्रेमास्पदस्यात्मनो-ऽप्यात्मत्वेन त्वमेव रागस्य स्वाभाविकपरमयोग्याश्रयः अत-स्त्वल्लक्षणनिजस्वामिनमनुपलभ्यैव भ्रमन्तो जनानां शुभवास-नारूपां त्वद्भजनसामग्रीं हरन्तश्चौर एव ततस्तदनुवर्तिनोऽपि तादृशाः । अथ गृहमयो विषयोऽप्यवशिष्टदण्डनायेव तेनैव कारागारीकृतः स्यात् त्वत्पदानुसरणविरोधिरोधसदनत्वात् मोहोऽप्यसौ तेन तेनावस्थावैशिष्ट्येन प्रापितस्तत्र स्वयं निग-डायते नष्टेऽपि तादृशकारागृहे रागादिमयस्य तस्याऽवशेषे-णाऽपि त्वत्पदानुसरणोन्मुखत्वाशक्तेः तदेवं त्वदीयानुसृतौ ते तावत्तादृशा भवन्ति यावज्जनास्ते तव न भवन्ति त्वया न स्वीक्रियन्त इत्यर्थः । जाते तु तावकत्वे रागादीनामप्यात्मनो-ऽप्यात्मनस्तव प्राप्तौ सत्यां तैर्नाऽप्यभिभूयत इति स्वयमेव ते दोषा अपगच्छन्तीत्यर्थः । तत्र रागस्य तत्प्राप्तिः—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु" ॥

इत्यनुसारेण गृहस्य तदर्पितत्वेन मोहस्य च तत्प्रेममयत्वेनेति अत एते तावत् तावकानां शिरोमणयः मादृशस्त्वेतच्चरणा-रेणुस्पर्शिनो यत्किञ्चित्त्वत्प्राप्ताववपभिलाषिण एव कथमे-तत्फलं प्राप्नुम इति भावः । यद्वा, ननु तेषां प्रत्युपकारा-समर्थमपि मां सदा सेवमानास्त एव दूषणीयाः तत्राह— हे कृष्ण ! सर्वचित्ताकर्षक ! यावत्ते तव जना न भवन्ति ना-म्नात् त्वत्सेवां न प्राप्नुवन्तीत्यर्थः । अर्थात् त्वद्भक्ताः तासत् तेषां त्वत्स्मृतौ स्वाभाविकभोजनेच्छादयो निवासस्थानं कदा-चिन्निद्रादिना त्वद्विस्मृतिलक्षणो मोहोऽपि तावत् परमदुःखदा एव भवन्ति । यद्वा, तव रागादयस्त्वल्लीलास्थानमपि त्वत्प्रेम-मूर्च्छापि तावत्परमदुःखदा भवन्ति यावत् साक्षात् त्वत्सेवां न प्राप्नुवन्तीति पूर्ववत्, तदेवं सति तत्र मोहनत्वमेवैषां व्रज-वासिनामपि तवानुसरणे कारणं तस्मादेषां को दोष इति भावः । किमर्थं तत्राह, प्रपन्नजनतां निजव्रजजनरूपा महा-विरूपा च प्रथितुं प्रथयितुं ऐश्वर्यलीलातोऽप्यस्या लीलाया भक्तपरमानन्दप्रकत्वादित्यर्थः । तदुक्तं "नन्दः किमकरोद्ब्रह्मन् !" इत्यादौ "गायन्तेऽद्यापि कवयो यल्लोकशमलापहम्" इति "येन वेनाप्यलेया" इत्यादि "यच्छृण्वतोऽपैत्यरतिः" इत्यादि ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ भवानेषां प्रपत्तिमताम् ऋणी एव भविष्यतीति वदति एषामिति । घोषनिवासिनां व्रजवासिनाम् उत अप्यर्थे भवानपि कैवल्यादिफलोऽपि हे देव, क्रीडाप्रवृत्त ! विश्वफलात् सर्वफलरूपात् त्वत् त्वत्तः अपरं फलं कुत्रापि देशे काले वा अयत् न गच्छत् न जानत् इति यावत् अतः किं राता किं दास्यतीति अथवा, "अद्य गतो" इत्यतः अयत् विचारयत् नः चेतः मुह्यति यद्यतः पूत-ना सकुला अघबकादिसहिता हे देव, क्रीडनमदमुदित ! सद्वेषात् सत्याः श्रेष्ठायाः पतिव्रतायाः यशोदाया मातुर्वेषात् पवार्थ इव वेषमात्रादेव त्वामेव त्वया आपिता प्रापिता अत एषां गोगोपगोपीनन्दयशोदादीनां तु धामार्थसुहृत्प्रियात्मतनयप्राणाशयाः त्वत्कृते वर्तन्ते त्वदर्थं श्रीकृष्णस्य श्रीमतो नारायणस्य तव शेष-भूताः शेषत्वज्ञानपूर्वं समर्पिता वर्तन्ते धाम गृहम् अर्थाः कुम्भा-दयः अमूल्यरत्नादिपर्यन्ताः, सुहृदः प्रियाः स्त्रियः, आत्मा जीवः, तनयाः प्राणाः चेष्टाविशिष्टशरीराणि, आशयो वासनाः एव-मात्मात्मीयभरसमर्पणविशिष्टत्वाभरार्पणं कृते इति चतुर्थ्यर्थभूतशेषत्वव्यञ्जने वर्तते, एवं चैषामपि सत्यानुकारिणां स्वात्मानमपि ददासि चेत्तथापि लीलाभिनिवेशकारितोऽ-विवेक एवेति भावः ॥ ३५ ॥

इति श्रीभगवज्जनानां प्रपन्नानां च वैभवमुक्त्वा श्रीभग-वत्स्नेहादिमतामपि गोपगोप्यादीनां रागादिगृहादिबन्धनेन देहाभिमानित्वेन चान्यसंसारितुल्यत्वं निराकरोति—तावदिति अने-न हे कृष्ण ! स्वरूपरूपगुणविभूतिभिश्चित्ताकर्षक ! यावदेते राग-द्वेषादयः त्वत्सम्बन्धिनो न भवन्ति तावत्स्तेनाः विवेकहारि-णो भवन्ति यावत् गृहं त्वन्मन्दिरं न भवति तावत्कारागृहं तत्तुल्यम् एवं मोहः देहात्मबुद्धिरूपः चिदचितोः स्वरूपत्व-ज्ञानेन त्वत्सेवोपयोगी न भवति तावत्संसारो निगडः एवं ममतास्पदाहन्तास्पदयोः भगवत्सेवोपयोगित्वेन एषां व्रजवा-सिनाम् अन्येषां च प्रपन्नादीनां न संसारबन्ध इति भावः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदमपि न प्रार्थनीयं किन्तु कमपि त्वत्सम्बन्धविशेषमेवे-त्यभिप्रयन् येन केनापि रागद्वेषाद्यन्यतमेन त्वत्सम्बन्धमात्रेणैव निरतिशयानन्दपुरुषार्थभूतत्वत्प्राप्तौ सत्यां ततोऽन्यत्किं फलं दातुं व्रजवासिभ्यस्त्वमिच्छस इति मन्मनो नितरां मुह्यतीत्याह, एषामिति । हे देव ! सकुला बकासुरादिसहिता पापिष्ठाऽपि पूतना सद्वेषादिव सतां साधूनां वेषादिव साधुवेषानुकरणमात्रेणे-त्यर्थः । वस्तुतो जिघांसयाऽपीति भावः । यत्त्वामेव प्रापिता सोऽयं भवानेषां घोषनिवासिनां विश्वस्य पुरुषार्थभूतात्त्वत्तोऽन्य-त्परमुत्कृष्टं फलं राता दास्यतीति नोऽस्माकं चेतः कुत्रापि सर्वत्राऽप्ययत्गच्छन्विचारयन्मुह्यति विश्वफलभूतस्त्वं प्रत्यस्तो-ऽसि इत्यत एव तत उत्कृष्टस्य फलस्याभावात्किं दास्यतीति मद्वे-तो मुह्यतीत्यर्थः । घोषनिवासिनो विशिनष्टि—येषां घोषनिवासिनां ये धामादयः ते त्वत्कृते त्वदर्थाः एवेत्यर्थः । धाम गृहमर्थो धनं सुहृदः आशयो मनः ॥ ३५ ॥

ननु, मत्प्राप्तिप्रतिबन्धकरागद्वेषादिमतामपि मत्सम्बन्धविशेष-मात्रेणैव कथं मत्प्राप्तिरत आह—तावदिति । हे कृष्ण ! तावदेव रागादयः स्तेनाश्चौरा भवन्ति त्वत्प्राप्तिप्रतिबन्धका भवन्ती-त्यर्थः । तथा तावद्गृहमपि कारागृहं बन्धनागारं मोहोऽपि ताव-देव पादशृङ्खलं यावत्ते तव जना येन केनाऽपि प्रकारेण

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वत्सम्बन्धिनो न भवन्ति त्वदीयानां तु रागादयोऽपि त्वन्निष्ठा-मोचका एवेति भावः ॥ ३६ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

किञ्च, तेषां भाग्यमहिमा किं वर्ण्यते येस्त्वमपि भक्त्या वशीकृत इत्याह—एषामिति । हे देव ! उत अपि भगवानपि एषां विश्वफलात्सर्वफलस्वरूपात् किं त्वत्तः परं फलं दाता दास्यतीति नश्चेतः अयन् विचारयन् मुह्यति मोहं प्राप्नोति अत एतेषां त्वं ऋणी एवेति मया ज्ञातं तत्कृतस्त्वत्तोऽधिकफलाभावात्, ननु, मत्सारूप्यं दत्त्वा अनृणी भविष्यामीति चेत्राह नहीत्याह, सद्वेषादिनेति सद्वेषात् समीचीनमातृवेषात् तदनुकरणमात्रेण दुष्टा पूतनाऽपि त्वामेव त्वत्सारूप्यमोक्षमापिता प्रापिता त्वयेति शेषः । एतेषामनुयायिनां मोक्षं दत्त्वा अनृणी भविष्यामीति चेन्न, साऽपि सकुला बकादिसहिता त्वत्सारूप्यं प्रापिता अत एतद्दये-तेषामपर्याप्तमिति भावः कथमपर्याप्तमित्यत आह—यद्धामार्थ इत्यादि येषां धाम गृहम् अर्थो धनं सुहृत्सुहृदः प्रियाश्च ते आत्मतनयाश्च प्राणा इन्द्रियाणि आशया अन्तःकरणानि त्वत्कृते त्वदर्थमेवेति अतस्त्वमेतेषाम् ऋणी एव सदेति निश्चितमि-त्यर्थः ॥ ३५ ॥

ननु, रागद्वेषादिशून्यानां परमात्मतत्त्वज्ञानिनां न मत्तः परं किञ्चित्प्राप्यमस्ति अतः कथमेतेषामपर्याप्तमित्यत्राह—तावद्रागादय इति । हे कृष्ण ! कर्षति वात्सल्यादिगुणैर्वशीकरोति प्रपन्ना-निति कृष्णस्तत्सम्बुद्धौ हे कृष्ण ! तावदेव रागादयः स्तेनाश्चौ-रास्तावदेव गृहं कारागृहं बन्धनागारं तावदेव मोहो निगडः पादबन्धनं यावत्ते जनास्त्वदनन्यभावा न भवन्ति त्वच्छरणा-गतानां तु त्वन्निष्ठास्ते विपरीता गुणा एव भवन्तीति भावः । एतावदन्तरं ते ज्ञानिनस्त्वां सर्वशेषिणं परमात्मानं ज्ञात्वा भजन्ति एते तु त्वां पुत्र इति सखा इति सुहृदिति ज्ञात्वा वात्सल्यादिवशेन भजन्तीति तथा च सप्तमे नारदः "कामाद्-द्वेषाद्भयात्स्नेहात् यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिङ्गताः" इति अन्यत्रापि—

> "मन्निमित्तं कृतं पापमपि धर्माय कल्पते ॥
> मामनादृत्य धर्मोऽपि पापः स्यान्मत्प्रभावतः" ॥

इति ॥ ३६ ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

किन्तु भगवन् ! एक एवास्ति मे महान् सन्देहस्तं त्वमपि त्वं दूरीकर्त्तुं न शक्नोषीत्याह—एषामित्यादि । हे देव ! एषां घोषनिवासिनाम् उत विस्मये भवान् विश्वफलात् विश्वस्य फल-भूतात् त्वत्तोऽपरं किं दाता दाता इति कुत्रापि सन्देहसङ्कटे अयत्पतत् नोऽस्माकं चेतो मुह्यति । ननु, कथन्ते चेतोमोहः ? आत्मा-नमेव दास्यामीति चेत्तत्रैव्याप्तेरिदमनुचितमित्याह—सद्वेषादि-नेति सती माता तद्वेषादिव न तु सद्वेषात् स्तन्यदानाय मातृवपु-

कृत्वा गतेति न अपि तु जिघांसयैवेति इवशङ्कः तद्वेषाभास-मात्रेणैव पूतना त्वामेव आत्मानमेवापिता प्रापिता तत्रापि सकुला बकाघादिसहिता एष्योऽपि यदि स एवात्मैव दात-व्यस्तदा योग्याऽयोग्यविचाराभावादवैदग्ध्यमेवापततीति आत्मनो-ऽधिकं वस्तु तव नास्त्येव तत् किमपरं दास्यतीति योग्य एव सन्देहः । ननु, भो ब्रह्मन् ! मा सन्देहं कार्षीः एषां यद्देयं तद्दत्त-मेव । यद्वा, त्वत्कृते त्वत्कर्मणि धामादीनि सर्वाणीति अक्षरो वाक्यशेष एवान्तर्यामिरूपेण सरस्वती देवी प्रेरयता सिद्धान्तितं तेभ्यः पूतनादिभ्य आत्मानं सायुज्यं दत्तम् एभ्यस्तु एवम्भूतं सायुज्यादपि परमदुर्लभं प्रेम दत्तमिति न ममाऽवैदग्ध्यमिति सिद्धान्तः ॥ ३५ ॥

अथ हे ब्रह्मन् ! एषामेवंविधत्वं कथं भवता लक्षितमित्या-शङ्क्य व्यतिरेकमुखेन तत्प्रपञ्चयन्नाह—तावद्रागादय इत्यादि, स्तेनाश्चौरप्राया ज्ञाने मोषकत्वात् रागादयस्तावदेव कारागृहप्रायं विना प्रारब्धक्षयेण ततो बहिर्भवनमशक्यमिति कारागृहसदृशं गृहं तावदेव निगडप्रायः स्वयमभेद्यत्वाद्दुर्भिदो मोहश्च तावदेव यावत् हे कृष्ण ! जनास्ते न भवन्ति त्वदीया न भवन्ति तव ये भूतु-स्तदा स्तेनादिप्राया रागादयस्तेषां न सन्ति इति सिद्धम् । सिद्धान्ते यदेषां तथैवाकाङ्क्षितं तदेते त्वदर्पितधामादित्वेनोक्तप्रकारा एव ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां फलमेतदेव न भवति सेवायाः क्रियमाणत्वात् अत-स्तत्फलं कथं नाभिनन्द्यत इत्याशङ्क्य तत्फलं न ज्ञायत एवे-त्याह—एषामिति । एतेभ्यो घोषनिवासिभ्यः एतत्सेवासाध्यमेत-त्सम्बन्धि हे देव ! त्वं किं दाता किं दास्यतीति नोऽस्माकं चित्तं त्वत्तः अन्यत्फलं कुत्रापि अप्राप्य सकलेऽपि अयत् गच्छत् विमुह्यति यतस्त्वमेव विश्वस्यैव फलं परमानन्दः त्वत्तोऽन्यत् कथं फलं भविष्यति तर्ह्यात्मानमेव दास्यामीति चेत् तत्राह, सद्वेषादपीति । सतो यशोदाया वेषात् वेषं प्राप्य वेषाद्धेतोर्वा पूतना सकुला भ्रातृसहिताऽपि त्वामेवाऽऽपिता प्रापिता अर्थात् त्वयैव द्वेषेति सम्बोधनं पूज्यार्थं येषां पुनः त्वदर्थमेव धाम गृहमर्थः धनं सुहृदो मित्राणि प्रियाः प्रीतिविषयाः पदार्थाः आत्मा देहः तनयाः पुत्राः प्राणा इन्द्रियाणि च आशयः अन्तःकरणं एतत्सर्वं केवलं त्वत्कृते त्वदर्थम् ॥ ३५ ॥

नन्वेतेषां संसारो जीवतामेव निवर्त्तनीयः पूतना तु मारि-तेति संसारनिवृत्तिं दास्यामीति चेत्तत्राह—तावदिति । गृहादिषु रागादयः तावदेव स्तेनाः विवेकधैर्यापहारकाः तावदेव गृहमपि कारागृहं बन्धनस्थानं तावदेव पुत्रादिषु मोहः अङ्घ्रिनिगडः पादशृङ्खला यावत् कृष्ण ! ते जनाः त्वत्सेवका न भवन्ति त्वत्सेवकानां त्वेतानि श्रीण्यपि सात्त्विकादीनि सेवौपयिका-नीति चास्मिताऽत्यभिलषितान्येव ॥ ३६ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

अपि चैषां कृतार्थत्वं किं वर्ण्यते येषां भक्त्या भवान् अपि ऋणीव दृश्यसे इत्याह—एषामिति । उत अपि हे देव !

### श्रीमद्हरिधरकृतबालप्रबोधिनी ।

बहुधाघोतमान ! एषां घोषनिवासिनां भवान् सर्वप्रकारेण सर्वं कर्तुं सर्वं दातुं च समर्थोऽपि किं दाता किं दास्यति ? एषां भक्त्यनुरूपं तवापि किञ्चिद्देयं नास्तीत्यर्थः । तर्ह्यात्मानमेव दत्त्वाऽनृणः स्यामिति चेत्तत्राह—विश्वफलादिति । सर्वफलात्मकात् त्वत्तोऽप्यपरमुत्कृष्टं फलमेषां योग्यमित्यर्थः कुतः ? एषां भक्तोऽप्युत्कृष्टफलयोग्यता तत्राह, सद्वेषादिति । इवशब्द एवकारार्थकः सत्याजनन्या वेषमात्रादेव दुष्टा पूतनाऽपि हे देव ! त्वत्कृपया त्वामेवापिता प्रापिता अत एषां तत् उत्कृष्टं फलमपेक्षितमित्याशयः । तर्हि मत्सम्बन्धिनामपि आत्मानमेव दास्यामीति चेत्तत्राह—सकुलेति बकासुराघासुरसहिता एवमपि नैतेषां, फले आधिक्यमिति भावः । फलाधिक्यावश्यकत्वे तेषां भक्त्याधिक्यं हेतुमाह, यद्धामेति । येषां धामादयस्त्वत्कृते त्वदर्थमेव येषामपि दुष्टपूतनायां दत्तमेव फलं चेद्दास्यसि तदा तदपर्याप्तमेवेति भावः । धाम गृहम् अर्थो धनम् सुहृदो मित्राणि प्रियाः प्रीतिविषयाः स्त्र्यपत्यादयो ये के च पदार्थाः आत्मा देहः तनयाः पुत्राः प्राणाः इन्द्रियाणि मुख्यप्राणाश्च तेन जीवितमाशयोऽन्तःकरणम् । ननु, त्वमपि सर्ववेदार्थतत्त्वज्ञोऽतस्त्वमेवैषां योग्यस्य फलस्य निश्चयं कुरु तद्दास्यामि इत्यत आह, इति नश्चेत इति इत्येतस्मिन्नर्थे नोऽस्माकं मम रुद्रस्य सनकादीनां च सर्वेषां सर्वज्ञानामपत् विचारेण स्वशक्त्या सर्वत्र गच्छत् अपि चेतो मुह्यति निश्चयं प्राप्नोतीत्यर्थः ॥ ३५ ॥

नन्वेते गृहस्था अतो रागादिभिश्चौरैर्विवेकधैर्यादिधनं विलुण्ठद्भिर्मोहनिगडेन बद्ध्वा कारागृहरूपे गृहे निरुद्धा अतः कथमेषां ततो विमुच्य मम प्राप्तिरूपं फलमपर्याप्तं यतो विगतरागादिदोषाणां सन्न्यासिनामपि न मत्तः परं किञ्चित् प्रार्थ्यं फलमस्तीति चेत्तत्राह—तावदिति, हे कृष्ण ! सदानन्दरूप ! यावज्जनाः जीवास्ते त्वदीया न भवन्ति त्वदेकशरणतया त्वया स्वकीयत्वेनाङ्गीकृता न भवन्ति तावदेव रागादयः आदिशब्देन द्वेषादयः स्तेनास्तथा तावदेव गृहं कारागृहं बन्धनागारं तावदेव मोहोऽप्यङ्घ्रिनिगडः पादबन्धनशृङ्खला भवति यथा राजपरिकरबहिर्भूतानामेव चौरादय उपद्रवं कुर्वन्ति राजानुगृहीतानां तु प्रत्युत सेवामेव कुर्वन्ति तथा त्वद्विमुखानामुपद्रवकारिणोऽपि रागादयस्त्वयाऽनुगृहीतानां तु रागमोहादीनामपि त्वद्भजनपर्यवसायित्वेन द्वेषादीनां त्वद्भजनविरोधिविषयत्वेन च संसारदुःखविमोचकत्वात् उपकारिण एव ते तथा च केवलविरागिभ्यस्त्वद्भक्तानां त्वद्भजनस्याधिक्यात् न तत्सदृशं फलं पर्याप्तमिति भावः ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किं च येषां पादरजो मया लोभात् प्रार्थ्यते तल्लभ्यतां न लभ्यतां वा मयेति स्पष्टं न ब्रूषे चेन्मा ब्रूहि किं त्वन्यदेकं यत्पृच्छ्यते तदुत्तरमवश्यमेव देहीत्याह—एषाम् एभ्यो भवान् किं दानेनेति । फलं दास्यतीति उत प्रश्ने इत्यहं पृच्छामीत्यर्थः । ननु, सर्ववेदार्थतत्त्वज्ञेन त्वयैव चेतसा विचार्यैवं स्वयमेव ज्ञायतां तत्राह—नोऽस्माकं चेत इति बहुवचनेन न केवलं ममैव अपि तु रुद्रस्य सनकादीनां नारदादीनां च सर्वेषामेव सर्वज्ञानां चेतो मुह्यति चेतः कीदृशं विश्वफलात् सर्वफलात्मकात्त्वत्तोऽपि अपरमन्यत् फलं कुत्राऽपि देशे काले वा अयत् बुद्ध्या बहुधा अन्विष्याप्यप्राप्नुवत् "इण गतौ" शत्रन्तः अयमर्थः सर्वफलरूपस्त्वमेभिरनादित एव पुत्रादिरूपत्वेन प्राप्त एव वर्तसे अत एव मया एषां भवानिति षष्ठी प्रयुक्ता यदि तु त्वत्तोऽप्यधिकमन्यत् किञ्चन वस्तु प्रशस्तमस्यास्यत् तदेवैतेभ्यो देयत्वेन योग्यमभविष्यत् तत्तु नास्तीत्यस्माकं चेतो मोहे हेतुरिति । ननु, ब्रह्मन् ! सत्यं त्वं तत्त्वानभिज्ञ एवासि मयैतेषां भविष्यतीमनुरागमयीमद्भुतां भक्तिं जानतैव सत्साध्यफलभूतः स्वात्मा पुत्रादिरूपः प्रथममेव दत्त इत्यन्ये खलु कृतज्ञा भवन्ति अहं तु करिष्यमाणविज्ञ इति मयैव जितमिति चेत् सत्यं प्रभो ! तदपि त्वं न्यायेन जीयस एवेत्याह, सद्वेषादिव सद्वेषादेवेत्यर्थः । पूतना पापिष्ठाऽपि सकुलसहिताऽपि त्वामेवापिता त्वयैव त्वां स्वात्मानं प्रापिता तथा येषां धामादयो ममतास्पदाहन्तास्पदानि त्वत्कृते त्वदर्थमेव ते चैते व्रजवासिनोऽपि त्वया त्वामेवापिता इति वाक्यशेषो नातानेन भुग्नेणाभक्त्यैव ज्ञापितः य एव स्वात्मा अतिनिकृष्टायै पापिष्ठायै पूतनायै दत्तः स एव स्वात्मा अतिप्रकृष्टेभ्यः पुण्यवद्भिरीमाणिभ्यो व्रजवासिभ्यो दत्त इति प्रथमतो दानेऽप्यनुचितानुष्ठातृत्वादेषां ऋणित्वस्वीकार एव तव निष्कृतिरिति भावः ॥ ३५ ॥

नन्वेते गृहस्थाः पुत्रकलत्रादिसंसारजाले निपतिता इति सन्न्यासिभिरुच्यते सत्यं त्वल्लुब्धपुत्रत्वद्भक्तकलत्रयाकलत्रादिमन्त एते गृहस्था वर्तन्तां देशान्तरस्था ये त्वद्भक्ता गृहस्थास्तेऽपि सन्न्यासिभ्योऽप्यधिका इत्याह—तावदिति । रागादयो रागद्वेषाऽभिनिवेशास्ते च महाचौरा जीवनिष्ठज्ञानानन्दादिमहाधनान्यपहृत्य परमेश्वरे राजनि एते मा फूत्कुर्वन्त्विति बुद्ध्या कर्माधिकारमये गार्हस्थ्यकारागारे मोहनिगडेन निबध्य जीवाः स्थाप्यन्ते हे कृष्ण ! जना जीवा यावत्ते त्वद्भक्तानुग्रहभाजनत्वेन त्वदीया न भवन्ति तावदेव रागादयः स्तेनाश्चौराः त्वदीयत्वे सति तेषां त्वद्भक्तेष्वेव रागः भक्तिप्रतिकूले वस्तुन्येव द्वेषः त्वय्येवाभिनिवेश इति प्रत्युत त्वन्निष्ठज्ञानानन्दादिकमप्यानीय ददानास्त एव परमसाधवो भूत्वा नित्यमुपकुर्वते एवमेव गृहं भद्राभद्रकर्मसाधनं यत्कारागृहमासीत्तदेव तेषां त्वत्परिचर्याकीर्तनादिसाधनं त्वदीयनित्यधामप्रापकं भवेत् एवं मोहविषयस्य त्वद्भक्तत्वात् सोऽपि त्वत्प्रेमानुभावरूपमोहप्रापकः इति कथमेतत् समकक्षतां सन्न्यासिनो लभन्तां ये "कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीर्षन्ति" इत्युक्त्या भगवत्प्रेम्णा सनत्कुमारेणापकर्षितास्तेभ्यः सन्न्यासिभ्योऽपि भक्त्या परमाधिका ये देशान्तरस्थगृहस्थभक्तास्तेभ्यः परः सहस्रगुणाअपि प्रेम्णा अधिकतमा ये व्रजवासिनस्तैरभिस्त्वं साक्षात् पूर्णब्रह्मस्वरूपोऽपि पुत्रादिरूपत्वेन स्वाधीनीकृत एव वर्तसे इति भावः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजस्थानां भाग्यातिशयमाह—एषामिति । सद्वेषादिव सतां त्वत्

प्रपञ्चन्निष्प्रपञ्चोऽपि विडम्बयसि भूतले ।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो ! ॥ ३७ ॥
जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ! ।
मनसो वपुषो वाचो वैभवं तव गोचरः ॥ ३८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कानां गोपीजनानां यो वेशस्तदनुकरणमात्रेणैव सकुला बकादिसहिता पूतनाऽपि पापिष्ठा त्वदर्थापि त्वामेवापिता प्रापिता तथाऽपि विश्वफलात्सर्वफलात्मकात्त्वत्तोऽपरं फलं कुत्राऽप्यस्ति ? किन्तु न कुत्राऽप्यस्ति अतो येषां धामाद्ययस्त्वत्कृते त्वदर्थमेव एवंविधानामेषां हे देव ! किं दाता किं दास्यतीति नश्चेतः मयत् सर्वत्र गच्छत् विचारयत् मुह्यति ॥ ३५ ॥

किं बहुना जनमात्रोऽपि त्वदीयो भूत्वा कृतार्थो भवतीत्याह—तावदिति । हे कृष्ण ! यावत् ते त्वदीयाः जना न भवन्ति त्वदितरसम्बन्धपरित्यागपूर्वकं त्वां शरणं न व्रजन्ति तावत् रागादयः ऐहिकामुष्मिकफलार्थेतरसाधनादिषु रागस्तद्विरोधिषु द्वेषः उदासीनेषूपेक्षा एवमादयः स्तेनाश्चोरा पुरुषार्थहराः भवन्ति तावदेव गृहं कारागृहं बन्धनालयं भवति तावदेव मोहोऽपि अङ्घ्रयोर्निगडं शृङ्खला भवति ॥ ३६ ॥

भाषाटीका ।

हे देव ! हे श्रीकृष्ण ! इन ब्रज वासिन कों आप कहा देओगे मैं या बात कों जब विचारूं हूं तब मेरो चित्त विश्वफल जो आप हो तिन सों और दूसरे अधिक फल कों नहीं पाय के बडे मोह कूं प्राप्त होय है, यदि आप कहो, कि—मैं तो सर्वाधिक फल रूप हूं सो मैं अपने कों उनके तांई देदऊंगो तब तो कछु चिन्ता नहीं है ? सो एसें भी आप नहीं कहसको हो, क्योंकि ? जब माता को वेश सों करके क्रूराभिप्राय वारी कुटुंब सहित पूतना भी आप कूं ही प्राप्त भई तब प्रभो ! जिन ब्रजवासिन के धाम, धन, सुहृद, प्रिय, आत्मा, पुत्र, प्राण, अंतःकरण ये सब आप ही के प्रयोजन के तांई हैं, उन ब्रजवासिन के तांई भी जब आप, आप रूप फल कों देओगे तब आपके यहां भी कछु विवेक न ठहरो और जो विवेक करोगे तो आपके समीप में इन ब्रजवासिन के देवे लायक कछु पदार्थ नहीं ठहरेगो कांहे सों कि—आपसों और कोई जगत् में अधिक फल नहीं, जाकों देके अनृण होजाओ तासों मेरी समझ में तो आप इन ब्रज वासिन के सदा ऋणिया ही रहोगे ॥ ३५ ॥

हे भगवन् ! रागादिक तब तांई चोर हैं, और तब तक ही गृह कारागृह है और तबतक ही मोह पांव की बेडी है, कि—जब तक आपके जन नहीं भये, आपके जन भये पे तो राग होयगो तो आपही में, गृह होयगो तो आप को मंदिर कहावे गो, मोह होय गो तो आपही में, तासों आप के भये पै ये कोई प्रतिबन्धक नहीं होयसके हैं ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तत्र यथाहमेषां पुत्रादिरूपेण वर्ते इति चेत्तत्राह—प्रपञ्चमिति । प्रपन्ना या जनता जनसमूहस्तस्या आनन्दानां सन्दोहं समूहं प्रथयितुमिति न हि कपटपुत्रत्वादिना तादृग्भक्तेरानृण्यं सम्पद्यत इत्यर्थः ॥ ३७ ॥

तदेवमादित आरभ्याचिन्त्यानन्तगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्त्वा केचित् जानीम इति स्थितास्तानुपहसन्निवाह—जानन्त इति । न तु मे मनआदीनां तव वैभवं विषय इति ॥ ३८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

प्रपञ्चं पुत्रत्वादिकं निष्प्रपञ्चः प्रपञ्चातीतोऽपि भूतले पृथिव्यां विडम्बयसि अनुकरोषि किमर्थं ब्रजसम्बन्धिस्वलीलाकथनद्वारा निजभक्तानन्दविस्तारार्थम् अन्यत्तैर्व्याख्यातम्, अथवा सद्वेषात् सतां द्वेषात् मारणोद्यमादपि सकुलाऽपि बालघातनादिमहादुष्टत्वेन प्रसिद्धा पूतनाऽपि त्वामापिता त्वयैव प्रापणकारणं स्तन्यदानादिकं पूर्वं निर्दिष्टमेवास्ति इवेति सुखविशेषप्राप्त्या तत्त्वतः साक्षाद्भगवत्प्राप्तेः आपितेति च तत्सुखेन सह भगवद्भेदाप्तयाप्त्या भगवदाद्यभिप्रायेण एते च त्वन्मित्राणीत्युक्तमेव अतः प्राप्येऽवश्यविशेषोऽपेक्षित एवेति भावः । ननु, तर्हि निजधामधनादिसहितमात्मानं साक्षादेभ्यो दास्यामि तत्राह—यद्धामेति । त्वत्कृते त्वत्सेवालक्षणकर्मणि निमित्ते तैर्यत्सर्वमर्पितमस्ति त्वयाऽपि त्वन्मात्र एव दत्ते प्रत्युपकारेण साम्यमेव न च तव प्रसिद्ध औदार्यादिविशेषः सम्पद्येतेति भावः । ननु तेषामशेषसिद्धिदानाऽसमर्थमपि मां सदा सेवमानास्त एव तुष्यन्ति तत्राह, हे कृष्ण, सर्वचित्ताकर्षक ! यावत् ते ब्रजवासिनः जनाः त्वत्सेवनपरा न भवन्ति तावत्तव रागादयः नृत्यगीतादिविलासाः स्तेना इव परमोपद्रावका भवन्तीत्यर्थः । गृहमपि कारागारं परमदुःखदमित्यर्थः । मोहः सर्वत्रकविषयकोऽङ्घ्रिनिगडबन्धनाकारः परमासक्तत्वापादनात् । यद्वा श्रीवैकुण्ठादिविषयकारागारादयः तत्रस्थमेव गृहं मोहश्च महालक्ष्म्यादिविषयको ज्ञेयः, अन्यत् समानम् । त्वयैव यतस्तथा क्रियते यतोऽपि लोका यदा त्वां भजन्तीति तेषां को दोष इति

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भावः। यद्वा यावत्तेषां स्वदेहादिषु पश्वादिषु कारागारादयः स्नेहा भवन्ति गृहं तावत् कारागृहं स्वबान्धवेषु मोहस्तावदङ्घ्रिनिगडः यावत्ते व्रजस्थाः जनास्त्वत्सेवनपरा न स्युः तत्तत एव पुत्रादिरूपेणैभिः सह विहारविशेषं करोमि तत्राह—प्रपञ्चमिति। निर्गतः प्रपञ्चोऽन्येषामपि यस्मात्तथाभूतस्त्वं विडम्बयसि विडम्बयासि स्थिरीकरोषि प्रपन्नजनता व्रजवासिलक्षणा तस्या आनन्दविस्ताराय ॥ ३७॥

तदेवं ज्ञाने प्रयासमुदपास्येत्यारभ्य प्रतिपादितं ज्ञानतुच्छत्वं भक्तिमाहात्म्यं चोपसंहरन्नाह—जानन्त इति। ये तव वैभवं त्वद्भक्तिमाहात्म्यं जानन्तो वर्तन्ते ते महापण्डितम्मन्या जानन्तु नाम मतो ज्ञाने वर्तमाना ज्ञानमपि किल साधयन्त्विति भावः। इति सोल्लुण्ठोक्तिः बहुधा उक्त्या ज्ञानादितुच्छतायाः भक्तिमाहात्म्यस्य च वर्णनेनापरेण किं प्रभो! हे विचित्रानन्तमहाप्रभाव! तव वैभवं मम वपुषो लिखनादिशक्त्या वाचश्च वर्णनादिना मनसोऽपि चिन्तनादिनाऽविषयः अपरिच्छिन्नत्वादचिन्त्यत्वाच्च एवं तद्व्यतिरिक्तमन्यत् सर्वं गोचर इति सूचितम्। यद्वा, प्रथमं परमस्तुतितया प्रारब्धं श्रीभगवद्वपुषो वर्णनं तदन्तरापतितशङ्कापरम्परा तद्भक्तिभजनमाहात्म्यवर्णनेन च तदेव सुदृढीकृत्योपसंहारोऽपि तदेव तत्राह—प्रकर्षेण सुन्दरतराकारादिना भवति प्राकट्यं प्राप्नोतीति प्रभुस्तत्सम्बोधनं हे असाधारणप्रकृष्टतर! इत्यर्थः। तव वपुषो वैभवं न मम गोचर इत्यन्वयः। यद्वा, तव मनआदेर्वैभवं न मे गोचरः तत्र यथा समुद्रकोटिगम्भीराशयस्य तव मनसः तथा एकस्यैव परिच्छिन्नत्वाऽपरिच्छिन्नत्वादिना वपुषश्च तथा अनन्तागाधवेदरूपस्य। यद्वा, परिमितस्यापि सर्वथाश्चर्यस्य साम्प्रतं सख्यादिषूच्चार्यमाणस्य वचसश्च वैभवं तत्तदभिप्रायादिकं न गोचरः। यद्वा, प्रस्तुतश्रीभगवन्महास्तुतिरूपं श्रीनन्दव्रजमाहात्म्यवर्णनमुपसंहरन् तज्ज्ञानाभिमानिनो मूढान्नुपहसन्निवाह, एषामित्यादेः। श्रीव्रजवासिनोऽनुवर्तन्त एव ततश्च एषां वैभवमित्यर्थबलाज्ज्ञेयम् प्रभो, हे श्रीगोकुलेश्वर! व्रजवासिनामेषां माहात्म्यं मम तवापि न कायवाङ्मनसां गोचरः तथापि तज्ज्ञानाभिमानं ये कुर्युः ते परमाज्ञा उपहास्या एवेति भावः। अन्यत् समानम् ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वहो भाग्यमित्यादौ मित्रत्वस्य कालविशेषानिर्दिष्टत्वेन परमानन्दादीनामनूद्यमानानां तस्मिन् विधेये सङ्कोचेन च व्रजौकोभिः समं मम लीलाया नित्यत्वमभिप्रेतम् एषां घोषनिवासिनामुतेत्यनेन तदेव निर्दिष्टं तद्भूरीत्यादौ वैकुण्ठादिपरित्यागपूर्वकमेषां चरणरजःसम्बन्धेन स्वजन्म प्रार्थ्य पुनरेषामनाविर्भूतिमूल्यमद्रूपपुरुषार्थप्राप्तिं च जीवनरूपां समर्प्य तदेव दृढीकृतम् एषां घोषेत्यादौ मम तद्गुणविगणनासमर्थत्वेनानादिकालपरम्परायां पुत्रादिरूपेणानुगतत्वप्राप्त्या तदेवानीतं तावदित्यादौ तत्र मिथ्यात्वकासम्भवात्तदेव पर्यवसायितं तत्तदप्यास्तां लौमिकत्वेऽप्यदो येषामेषां सम्बन्धि यदेतन्मम रूपं तदेव निजपुरुषार्थत्वेन प्रतिष्ठितं तत्र केश्चित् प्रपञ्चरीतिदृष्ट्या लीलेयमन्यथेत्याशङ्क्येत तत्र किं वक्तव्यं तत्राह—प्रपञ्चमिति। नित्यमेवैतैः समं लीलायमानस्त्वं निष्प्रपञ्चः प्रपञ्चास्पृष्टलीलोऽपि मध्ये मध्ये त्वेतैः समं भूतलेऽवतीर्य प्रपञ्चं विडम्बयसि नरान्तरवज्जन्मादिलीलयाऽनुकुर्वन्नपि महान्तम् एव तत उत्कर्षं दर्शयतीत्यर्थः। ननु, किमर्थमिदं तत्राह—प्रपन्नेति। यद्यपि तस्यां नित्यायामभूतलाप्रकटलीलायां नित्यानां प्रपन्नजनसमूहानाम् एषाम् अनित्यानां चास्माकं यथास्वन्दर्शनेन श्रवणेन चानन्दो भवत्येव तथाऽप्यस्यां भूतले प्रकटायां जन्मादिलीलायां त्वानन्दानां सन्दोहः प्रथितो भवतीत्येतदर्थमित्यर्थः ॥ ३७ ॥

तदेवमस्यापि देववपुष इत्यादिभिः सामान्यतस्तस्य महिम्नो दुस्तर्कत्वं दर्शितं पुनश्च पश्येश! मेऽनार्यमित्यादिभिः, स्वरूपशक्तिमायाशक्त्योः स्वरूपस्य च विशेषतः। अथ अहोऽतिधन्या इत्यादिभिः, तन्निजजनप्रेम्णः एषां घोषनिवासिनामित्यादिना, कारुण्यस्य प्रपञ्चमित्यादिना, लीलायाश्चेति तत्तन्निरूपणं परित्यज्योपक्रमार्थमेव निजाभीष्टत्वेनाभिप्रयन्नुपसंहरति—जानन्त इति। प्रभो! हे विचित्रानन्तमहाप्रभाव! तव वैभवं वेदादिभिः श्रुतमपि मम मनसो न गोचरो न परिच्छेद्यं सामर्थ्येण दृष्टादिरूपमपि वपुषश्चक्षुरादिगोलकस्य न अत एव न वाचः तस्मान्नौमीत्यादिना यत्प्रार्थितं तदेव प्रार्थ्य इति भावः ॥ ३८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ननु, मम को वा संसारिभेदापादको गुणः ममताऽहन्तादर्शनाद्वैषम्यनैर्घृण्यसत्त्वादित्यत्राह—निष्प्रपञ्चोऽपि स्वरूपरूपगुणैः सर्वचेतनाचेतनविलक्षणोऽपि प्रपञ्चं सूक्ष्मस्थूलरूपं विडम्बयसि तत्तच्छरीरकत्वेन स्वैच्छिकविग्रहेण च विडम्बयसि अनुकरोषि न तु तवाऽहन्ताममतास्पदतत्तत्पदार्थसङ्गेन वैषम्यनैर्घृण्यादिप्रसक्तिः संसारो वा तर्हि विडम्बनेन किं प्रयोजनं तत्राह—प्रपन्नेत्यादि। परमपदस्थलक्ष्मीशेषविष्वक्सेनादिप्रपन्नानन्दसमूहविस्ताराय भोगविभूतिमत्त्वमिह च अनन्ततद्भक्तप्रपन्नमनोरथाऽनुगुणानन्दविस्ताराय तत्तद्रूपैः क्रीडनं तवेति भावः ॥ ३७ ॥

एवम्भूततत्त्वज्ञाने हि दुर्ज्ञेयत्वमेवापरिमेयस्वरूपरूपगुणविभूतिलीलामयस्य भगवतः प्रस्तावयन् स्तौति, एकेन जानन्त एवेति ये वदन्ति जानीमो वयं भगवत्तत्त्वम् इति ते जानन्तु "अविज्ञातं विजानताम्" इति श्रुतेः ते न जानन्त्येवेति भावः। "विज्ञातमविजानताम्" इत्यादिश्रुतेरर्थमाह—किं बहूक्त्येति बहूक्त्या बहुकथनेन किम्? "वाचो विग्लापनं हि तत्" इत्युक्तेः तव वैभवं त्वत्स्वरूपरूपादिवैभवं मे परिमितमनोवृत्तिशरीरशक्तेः विषयः गोचरो न भवति सङ्कल्पविकल्पाभ्यां मनोविषयो न भवति वपुषः परिच्छिन्नविषयतया ग्रहणविषयो न भवति वाचो विषयश्च वर्णनीयत्वेन न भवति ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मोहितचित्तोऽपि पुनरेव अव्यवस्थामीयमित्यत्राह—प्रपञ्चमिति। निष्प्रपञ्चोऽपि "निष्क्रियं निष्कलम्" इति श्रुत्युक्तरीत्या

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्राकृतशरीरतद्व्यापाररूपप्रपञ्चरहितोऽपि मायया सङ्कल्पेन प्रपञ्चं विडम्बयसि अनुकरोषि किमर्थम्? हे प्रभो! प्रपन्नजनसमूहस्यानन्दसन्ततं प्रथितुमाविष्कर्तुं वर्द्धयितुम् इति यावत् मम त्वेवं निश्चय इति भावः॥ ३७॥

ननु, मम प्रपञ्चविडम्बनहेतुं तत्त्वतस्त्वं न जानीष इत्यत आह—जानन्त इति। ये जनास्त्वत्स्वरूपस्वभावादिकं जानन्ति त एव विडम्बनहेतुं जानन्तु मम बहुभाषितेन किं न किञ्चिदपि साध्यमस्तीत्यर्थः। एवमात्मनोऽज्ञत्वमाविष्कृतं पुनः सार्वज्ञानीननस्तु जानामीत्यभिप्रयन्नाह—मनस इति। तव वैभवं मनआदिकरणत्रयस्य गोचरो नेत्यनुवर्तते न गोचरो न विषय इत्यर्थः। वपुषः इति दृष्टान्तार्थं यथा वपुषो न गोचरः तथा वाङ्मनसयोरपीति अथवा तव वपुषोऽपि वैभवं वाङ्मनसागोचरमित्येतावत्तु जानामीत्यर्थः॥ ३८॥

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

ननु, यथाहमेषां पुत्रादिरूपेण वर्त्ते न तथा तेषामिति वैषम्यादानृण्यं स्यादित्यत आह—प्रपञ्चमिति। हे प्रभो! त्वं निष्प्रपञ्चोऽपि प्रपञ्चरहितोऽपि "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति प्रमाणात् भूतले प्रपञ्चं विडम्बयसि अनुकरोषि किमर्थमिति चेदत आह—प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रपन्नजनता प्रपन्नजनानां समूहस्तस्या आनन्दानां त्वत्स्वरूपरूपगुणानुभवरूपानन्दानां सन्दोहं समूहं प्रथितुं प्रथयितुं विस्तारयितुं तदुक्तं भगवता "परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति स्वदर्शनदानेन साधुपरित्राणमेव परमप्रयोजनं दुष्कृतनाशस्त्वानुषङ्गिक इति भावः। अतो ये त्वद्गुणश्रवणकीर्तनादि विना शरीरधारणमपि न बहुमन्यन्ते तान् दर्शनादिना सुखयति अतस्तेषां ऋणी एव त्वमिति भावः॥ ३७॥

अतो मयाऽप्येतदेव निश्चितमित्याह—जानन्त इति। हे प्रभो! स्वामिन्! किं बहूक्तेन बहूक्त्या किं? ये केचिन्निर्विशेषं गुणादरिद्रं चिन्मात्रं प्रमाणशून्यं यत्किञ्चित्तत्त्वं त्वत्तः परमस्तीति जानीम इति निश्चयं कृत्वा स्थितास्ते जानन्तु तेषां ममाऽप्यहो नास्ति अहोऽज्ञजनताऽज्ञता इति पूर्वमेवोक्तं कुतः?—

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय!"।

"नारायणात्परो देवो न भूतो न भविष्यति"॥

इत्यादिप्रमाणैर्निश्चयेन तादृशस्य ब्रह्मणः खपुष्पायमाणत्वात् अत एव मम तु मनसो वपुषो वाचस्तव वैभवं त्वन्महिमा गोचरो विषयो भवत्विति शेषः। इतः परं निरुपाधिकत्वच्छेषशेषिसम्बन्धज्ञानं मम विस्मृतं माभूदित्यर्थः॥ ३८॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तद्वैषम्यस्यापि द्रवपुष इत्यादिभिस्तस्यानेकधा दुस्तर्कत्वमेव प्रदर्श्य तत्तन्निरूपणं परित्यजन् उपक्रमार्थमेवाभीष्टत्वेनाभिप्रायं तूपसंहरति—जानन्त इति। हे कृष्ण! सर्वेन्द्रियाकर्षकगुणरूप! अनुजानीहीति गमनानुज्ञेयं नात्मेच्छया प्रार्थ्यते किन्त्ववस्थानानर्हतयैवेति भावः॥ ३८॥

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

नन्ववगतमेव भवतैषां तत्त्वं मत्तत्त्वं कीदृशं तदपि कथयेत्याह, प्रपञ्चं निष्प्रपञ्चोऽपीत्यादि। हे प्रभो! तव तत्त्वं को वेत्तु प्रभुस्त्वाप्रभुर्हि कर्तुमकर्तुमन्यथाकर्तुं समर्थः तथापि यत्किञ्चिद्वदामीति प्रभो! इति सम्बोधनार्थः किं वक्तव्यं तद्वदेत्याह—निष्प्रपञ्चोऽपि त्वं केवलसच्चिदानन्दलीलोऽपि भूतले प्रपञ्चं लौकिकव्यवहारं विडम्बयसि अनुकरोषि किं कर्तुं तत्राह, प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रथयितुं तव लौकिकलीलायां येषां प्रपन्नानामानन्दसन्दोहस्तं वर्द्धयितुम्॥ ३७॥

इत्येवाहं जानामि अन्ये येऽन्यज्जानन्ति ते जानन्तु नामेति सकटाक्षमाह—जानन्त एवेत्यादि। जानन्त एव तव महिमानं जानीम इत्यभिमानवन्त एव जानन्तु किं बहूक्त्या तान् प्रति बहुना व्याहारेण अथवा किं बहूक्त्येति परवाक्येन सह सम्बध्यते ते जानन्त्वेव मम तु मनसो वपुषो वाचो गोचरस्तव वैभवं न भवति। अचिन्तनीयत्वात् न मनसो गोचरः अनन्तत्वात् न वाचो-गोचरः वपुःशब्दोऽत्र चक्षुःश्रवणाद्यर्थः तेन तदगोचरत्वेन चक्षुरादेरप्यगोचरः॥ ३८॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, एतत् सर्वं साक्षात् स्वरूपे युक्तं न तु कृत्रिम इत्याशङ्क्याह—प्रपञ्चमिति। निष्प्रपञ्चोऽपि त्वं प्रपञ्चं विडम्बयसि प्रापञ्चिकीमिव चेष्टां करोषि तत्र हेतुः प्रपन्ना या जनता तस्या आनन्दसन्दोहमानन्दसमूहं प्रथितुं स्थूलं कर्तुम्। ननु, विपरीतरूपेण कथं तदभिव्यक्तं भविष्यतीत्याशङ्क्याह—प्रभो इति। सर्वप्रकारेणापि सर्वसमर्थः॥ ३७॥

ननु, अनेनाऽप्यानन्दप्रथनसम्भवात् किमिति प्रपञ्चविडम्बयतीत्याशङ्क्याह—जानन्त इति। ये जानन्तो भवन्ति त एव जानन्तु वस्तुतस्तु ज्ञानं स्वप्रबोधरूपम् अतो भ्रान्ता एव ते। ननु, तथा सति तन्मतं दूषणीयमिति चेत्तत्राह, किं बहूक्त्येति। बहूक्त्या किं प्रयोजनम् अल्पेनैव दूष्यते न हि मत्तः कश्चिन्महानस्ति येनाभिज्ञोऽहं मम तु मनसो वपुषो वाचोऽपि वैभवं न गोचरो न ज्ञातुं शक्यं न देहकृत्या परिच्छेत्तुं शक्यं स हि सर्वं करोति तथा भगवद्वैभवमपि कथं प्रदर्शयिष्यतीति शङ्क्योक्तं वचसां विषयो न भवत्येव तथा चेतसोऽपि॥ ३८॥

श्रीमद्गिरिधरकृतबालप्रबोधिनी।

मत एवाहमेषां पुत्रादिरूपेणाऽपि स्थित इति चेत्तत्राह,

**अनुजानीहि मां कृष्ण ! सर्वं त्वं वेत्सि सर्वदृक् ॥**
**त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥ ३९ ॥**

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

प्रपञ्चमिति । हे प्रभो !(१)सर्वकरणसमर्थ ! त्वं निष्प्रपञ्चः प्रपञ्चातीतोऽपि प्रपन्ना शरणमागता या जनता जनसमूहस्तस्यानन्दानां सन्दोहं समूहं प्रथयितुं विस्तारयितुमिह भूतले प्रपञ्चं विडम्बयसि बहूनां पुत्रादिरूपेणानुकरोषि तथा च नैतेन विडम्बनमात्रेणैषामनिर्वचनीयप्रेमरसामानुभवं सम्पद्यत इति भावः ॥ ३७ ॥

तदेवमादित आरभ्याचिन्त्यानन्तगुणत्वेन स्वयम्भगवतो दुर्ज्ञेयत्वमुक्त्वा ये तु वयं तत्त्वतो जानीम इत्यभिमन्यन्ते तानुपसंहरन्निवाह—जानन्त इति । ये जानन्ते जानीम इति वदन्ति त एव जानन्तु बहूक्त्या तेषां बहुनिन्दावचनेन किं प्रयोजनम् हे प्रभो ! मम मन आदीनां तवाचिन्त्यानन्तगुणस्य वैभवं गोचरो विषयो न भवति, अहं हि वेदगर्भो न हि लोके मत्तोऽन्यः कश्चिदधिकज्ञानवानस्तीति यद्यहमेव न जानामि तदा ये वयं भगवत्तत्त्वज्ञा इति ये वदन्ति ते तु केवलमभिमानेन भ्रान्ता एवेति भावः वपुषश्चक्षुरादेः ॥ ३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, व्रजेऽस्मिन्नेतत्पुत्रादिभावं पूर्णब्रह्मणो मम न वस्तुत इति केचिन्मन्यन्ते सत्यं ते भ्रान्ता एवेत्याह—प्रपञ्चमिति । निष्प्रपञ्चोऽपि प्रपञ्चातीतोऽपि त्वं भूतले सदा स्थितः सन् प्रपञ्चं विडम्बयसि प्रपञ्चस्थं पुत्रादिभावमनुकरोषि प्रापञ्चिकेषु पित्रादिषु प्रापञ्चिकाः पुत्रादयो यथा चेष्टन्ते तथैव त्वमपि चेष्टसे इत्यर्थः । तेन जीवानां यथा पितृपुत्रादिभावो ह्यवास्तवस्तथा तव न तव तु सनिष्प्रपञ्चत्वाद्वास्तवो नित्य एवेति तव लीला नित्या प्रपञ्चातीताऽपि प्रपञ्चानुकरणमयीति सिद्धान्त उक्तः किमर्थं विडम्बयसि प्रपन्ना या जनता तस्या वत्सलादृशीलीलास्वादनोत्थ आनन्दसन्दोहस्तं प्रथयितुं ब्रह्मानन्दाद्वैकुण्ठलीलानन्दादपि विस्तृतीकर्तुं भूतल इत्ययं भावः । प्रकाशे दीपो नातिशोभते यथान्धकार एव श्वेतराजतपात्रे हीरकरत्नं नातिशोभते यथा नीलकाचादिपात्रे, तथैव चिन्मयवैकुण्ठे चिन्मयी लीला नातिचमत्करोति यथा मायामये प्रपञ्च इति यद्यपि व्रजमण्डलमपि चिन्मयमेव तदपि कृष्णस्य प्राकृतपुरुषसाधर्म्यमिव भूतलस्थव्रजमण्डलस्यापि प्राकृतभूतलसाधर्म्यमेव इहतोऽत्र लीला चमत्करोत्येवेति हे प्रभो ! इति मामपि प्रपञ्चमध्ये स्थापयेति भावः ॥ ३७ ॥

सत्यं, तर्हि मत्स्वरूपस्य मद्गुणमाहात्म्यस्य मदीयलीलाया मत्कृतेश्च सर्वमेव तत्त्वं भवज्ञोऽपि स प्रतिभमेनं व्याख्याया भवद्विधा अस्मिन् जगति कियन्तो वर्त्तन्ते तान् जिज्ञासे कथयेति वक्रोक्तिमाशङ्क्य सभयं सकम्पं सानुतापमाह—जानन्त एवेति । ये जानन्तस्ते जानन्तु अहं तु महामूर्ख एवास्मीति भावः । ननु, तर्हि कथमेतावत्पर्यन्तं ब्रूषे एव तत्राह, किं बहुक्त्येति । त्वदग्रे बहूक्तिरेव मूर्खत्वद्योतिनीत्यर्थः । ननु, ब्रह्मन् ! निष्कपटं ब्रूहीति तत्राह, नेति तव वैभवमैश्वर्यं मम मनसो न गोचर इति ध्यानेनान्तप्राप्त्यभावात् वपुष इत्यधुनैव चक्षुषाऽपि वाच इति "गुणात्मनस्तेऽपि गुणान् विमातुम्" इति मया तावदुक्तमेव । यद्वा, तव मनसो वैभवं मम न गोचर इति त्वन्मनसि यत् किमप्यस्ति तत् किं मया ज्ञातुं शक्यते "साक्षात्तवैव किमुतात्मसुखानुभूतेः" इति पूर्वमेव मदुक्तेः एवं त्वद्वपुष इति त्वद्वपुषि किमस्तीति तव वाच इति तव वेदलक्षणायां वाचि किमस्तीति साक्षात्तव तु मयि मौनवत्त्वात् वचनगन्धस्याप्यप्राप्तेरेव तस्मात् के खलु त्वदग्रे मदादयो वराका इति भावः ॥ ३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, सर्वदा परच्छन्देन वर्तमानस्य कथं सर्वजनशरण्यत्वमित्यत्र भगवतः स्वातन्त्र्यं वदन् शरणागतेषु कृपालुतामाह—प्रपञ्चमिति । निष्प्रपञ्चोऽपि पारवश्यादिरूपप्रपञ्चरहितोऽपि प्रपञ्चं पारवश्यादिचेष्टितं विडम्बयसि अनुकरोषि तत्प्रयोजनमाह, प्रपन्नेत्यादि । हे प्रभो, समर्थ ! प्रपन्नजनतायाः शरणागतजनसमूहस्य आनन्दसन्दोहं स्वकृपानिमित्तसुखसमूहं प्रथयितुम् ॥३७॥

यथाशक्ति भगवन्तं स्तुत्वा पूर्वोक्तमियत्तानवच्छिन्नत्वमुपसंहरति । जानन्त इति ॥ ३८ ॥

---

### भाषा टीका ।

हे प्रभो ! आप निष्प्रपञ्च हौ, अर्थात् प्राकृत शरीर और वाके व्यापार सों रहित हौ, तौ भी आप के शरणागत जन समूह के आनन्द कों उनके आनन्द बढायवे कूं अपनी इच्छा सों या संसार को अनुकरण करौ हौ ॥ ३७ ॥

हे प्रभो ! जो आप के स्वरूप स्वभावादि कों जानें हैं ते जांनते रहौ मेरे बहुत कहवे सूं कछु प्रयोजन नहीं है, परंच इतनी तौ मैं कहूं हूं कि आपको वैभव मेरे वपु ( देह ) मन वाणी के विषय नहीं हैं अर्थात् आपके वैभव कूं मैं वाणी सों तौ कैसे कहसकूं परंच मन में हू नहीं आय सके है ॥ ३८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

जगदीशत्वाद्यभिमानं परित्यज्याह—अनुजानीहीति । स्वमहिमानमस्मदादीनाञ्च ज्ञानबलादि सर्वं त्वमेव वेत्सि यतः सर्वदृक् जगतां नाथस्तु त्वमेवेत्येतावज्ज्ञातमतो ममतास्पदं जगदेतच्छरीरञ्च तवार्पितम् ॥ ३९ ॥

---

(१) सर्वकरणसमर्थोऽसि इति क० पुस्त० पा० ।

श्रीकृष्ण ! वृष्णिकुलपुष्करजोषदायिन् ! क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ! ।
उद्धर्मशार्वरहर ! क्षितिराक्षसध्रुगाकल्पमार्कमर्हन् ! (१) भगवन्नमस्ते ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं किङ्करं प्रस्थापयेत्यत्यादरेण नमस्करोति-श्रीकृष्णेति । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन हे सूर्योपम ! क्ष्मा चावनिर्निर्जरा देवाश्च द्विजाश्च पशवश्च त एवोदधयस्तेषां वृद्धिकारित्वेन हे चन्द्रोपम ! उद्धर्मः पाषण्डधर्मस्तदेव शार्वरन्तमस्तद्धरतीति तथा अनेन सूर्योपम ! हे क्षितिराक्षसध्रुक् ! क्षितौ राक्षसाः कंसादयः उग्रत्वेन तेभ्यो द्रुह्यतीति पुनः सूर्योपम ! सूर्योपमाऽपि न्यूनेति मत्वाह—आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, पूज्य ! भगवन्नाकल्पं कल्पपर्यन्तस्ते शुभमस्तु इति ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

इत्थं स्तुतिप्रभावजनितश्रीभगवत्प्रसादविशेषतोऽखिलाभिमानापगमेन परमदैन्यमाश्रितो व्रजजनादिनेव निजं स्थानं गन्तुमनुज्ञां प्रार्थयते—अनुजानीहीति । कृष्ण, हे निजाशेषभगवत्ताप्रकटनपर ! सर्वम् उक्तत्वद्वैभवं त्वमेव वेत्सि यतः सर्वदृक् सर्वज्ञः यद्वा, सर्वदृगपि त्वं वेत्सि किं काका नैवेत्यर्थः । अनन्तत्वात् अतस्तत्स्तोतुमपि नार्हामीति प्रस्थापयेत्यर्थः । किञ्च, त्वद्भक्तिसिद्धं अभिमानत्यागेन निजं सर्वं त्वय्यर्पयामीत्याह—त्वमेवेति जगत्त्रैलोक्यं ईशितम् । अथवा भो ब्रह्मन् ! त्वयाऽत्र किमपि जन्माद्युनेव प्रार्थितं तत् किमन्यत्र गन्तुमिच्छसि तत्राह—सर्वमिति । चतुर्मुखेनानेन देवदेहेनाऽत्र स्थातुं नार्हामीत्यादिकं मद्वृत्तं त्वं चैषां प्रेमवश्यो यथेष्टमेतान् रमयितुं व्यग्रोसीत्यादिकं च निवृत्तं हे कृष्ण ! व्रजजनैकप्रिय ! त्वं वेत्स्येव तत् कथमत्र स्थास्यामीति भावः । किन्तु निजतत्प्रार्थितसिद्ध्यै सर्वं त्वय्यर्पयामीत्याह—जगतां नाथस्त्वमेवेति अर्पणाभिमानोऽपि न मम घटते अतोऽर्पणमप्यर्पितमिति भावः । भो परमेष्ठिन्, सृष्ट्यादिना तावज्जगदीशस्त्वं तत् कथमीदृग्दैन्यमालम्बसे तत्राह—जगतामेव नाथस्त्वमित्यहं दास एवेति भावः । ननु, पितामहस्य तव पुत्रपौत्रादिमयं जगत् साक्षात्त्वयाऽपि क्रियमाणमेतद् दृश्यते तत्राह, तवैव एतज्जगत् अर्पितं मयि त्वयैव अतोऽत्र न मम नाथत्वं किन्तु तत्कर्तृकार्पणमहिम्नैव मदधिकृततया स्फुरतीति भावः ॥ ३९ ॥

हे श्रीकृष्णेति श्रीः सर्वविषयकविविधशोभा तदेककृष्ण श्रीमत्त्वादेव सर्वचित्ताकर्षकेति सर्वथा सर्वतो वैशिष्ट्यमभिप्रेतं तदेवाभिव्यनक्ति, वृष्णीत्यादिना तत्र तत्र हेतुः भगवन्निति सर्वैश्वर्यविस्तारकेत्यर्थः । मत्प्रवैर्याख्यातम् यद्वा, इत्थं सञ्जातपरमभक्त्यान्ते विचित्रनामसङ्कीर्तनरूपां स्तुतिं कुर्वन् सर्वमवतारप्रयोजनमेकश्लोकेन संक्षिप्य वर्णयन् सपक्षाग्रहं प्रणमति—तत्र वृष्णिकुलेति सूर्योदयेन कमलानां तमोमुद्रानिरसनपूर्वकप्रकाशनमिवाविर्भावमात्रेण श्रीवसुदेवादियादववर्गाणां दुःखनाशनपूर्वकानन्दप्रदत्वं प्राग्वर्णितम्, तथोक्तमेव "स बिभ्रत् पौरुषं धाम" इति दिष्ट्या हरेऽस्या भवतः पदोभुवः" इत्यादिना किञ्च पृथिव्याश्च देवानां च पशूदधेश्च गवादिपशुसमुद्रस्य श्रीनन्दव्रजस्य वृद्धिकारिन् ! अधर्मनिवर्त्तनधर्मप्रवर्त्तनादिना साक्षाद्दुःखहरणसुखसम्पादनादिना च वर्धनशील ! यद्यपि क्ष्मावर्धनेनैव तदन्तर्गतानां द्विजगवादीनां वृद्धिकारित्वं स्वत एवायाति तथाऽप्यवतारेऽस्मिन् तद्विशेषापेक्षया पृथग् निर्दिष्टम् । यद्वा, महर्लोकादिवर्त्तिनामृषीणां (गो)लोकादिवर्त्तिगोकुलानां च अर्थार्थं यद्वा, व्रजसम्बन्धिनो ये क्ष्मानिर्जराः विप्राः द्विजाश्च पक्षिणः पशवश्च गोमहिष्यादयः प्रसिद्धा प्राचुर्यात् एवोदधिस्तद्वृद्धिकारिन्निति प्राधान्याद्व्रजस्यैव सम्बन्धित्वमुक्तम् अधुना प्रेमभक्तिविस्तारणं मुख्यप्रयोजनमन्ते वर्णयति, धर्मोऽत्र भक्तिलक्षणः तद्विरुद्धं ज्ञानादिकमेवोत्पथाविद्यावेनोद्धर्मः स एव सदा सर्वत्र प्रकाशमानस्यापि भक्तिमार्गस्याच्छादकत्वाच्छार्वरं तमस्तद्धरतीति तथा अत एव हे क्षितिराक्षसध्रुक् क्षिति राक्षसाः द्विविधाः एके तत्र तमसि ये चरन्ति रजनीचरत्वाद्याख्यातलोकजीवनभक्तिमार्गविघातकत्वाच्च राक्षसाः अन्तर्निगूढासुरभावा असन्तः अन्ये च वृष्णिकुलविद्वेषिणः प्रकटदैत्याः कंसादयः तेभ्यो द्रुह्यतीति तथा तत्रासतां दुर्मदादिनिग्रहेण कंसादीनां च साक्षान्मारणेनैव तत्र तेषां हितार्थमेवेत्याह—भगवन् ! हे परमकृपालो ! सतां भक्तौ प्रवर्त्तनात् एतच्चापूर्वदुष्टं त्वमेव कर्तुमर्हसि नाऽन्यः कोऽपीत्याह, अर्हतीत्यर्हन्, हे सर्वं कर्तुं योग्य ! समर्थेति वा अतः आकल्पं मज्जीवनकालमभिव्याप्य । यद्वा, आकल्पं त्वदीयगुञ्जावतंसबर्हापीडादिकं वामहस्तस्थ कवलादिकं च भूषणमभिव्याप्य तथा आर्कम् आर्को नाम वृक्षो भगवदनर्हपुष्पो वैष्णवानामनादरणीयः तमप्यत्र स्वमभिव्याप्य तत्सत्साहित्याय अशेषनिजैश्वर्यप्रकटनशीलायुक्तकृष्णपरमनन्दनन्दन ! नमस्ते "श्रीमच्चैतन्यदेवानुगृहीतानामनुग्रहात् तेषां मुदे स्तुतिर्ब्राह्मी व्याख्यातेयं यथारुचि" ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तत्तत्प्रकरणान्ते या दैन्यात्मिका भक्तिरेव तत्प्रापितकारणत्वेन वर्णिता, तामेवाविःकुर्वन् अनुज्ञां प्रार्थयते—हे कृष्ण ! सर्वेन्द्रियाकर्षकरूपगुण ! अनुजानीहि अनेन गमनानुज्ञं नात्मेच्छया प्रार्थयते किं त्वत्राऽवस्थानानर्हतयैवेति सा च प्रार्थितस्यापि तस्य मौनितयेति भावः । त्वयि च यन्मयोक्तं यद्वा वक्तव्यं तत्सर्वं पुनरुक्तमेवेत्याह—सर्वं स्ववैभवं मद्वैभवं च स्वमनोगतं मन्मनोगतं च स्वनिगूढलीलत्वं मदयोग्यत्वं चेत्यादिकं त्वमेव वेत्सि नाहमिति अतस्त्वदाज्ञां विना तृणादिरूपेणाप्येषां तृणादीनां सौभाग्यमासादयितुं न शक्नोमीति भावः । विषयमपि त्यक्तुं न शक्नोमीत्याह—त्वमेवेति । तव त्वयैव मह्यमर्पितं दासस्याऽऽज्ञारूपायैस्त्वमेव युक्तमिति भावः । यदि चैवं ब्रूषे अपहृतात्मनां वत्सवत्सानां दर्शनं विना कथमनुज्ञां याचसे तत्राप्येवं निवेदयामीत्याह—सर्वं त्वं वेत्सि सर्वदृगिति चात्र ज्ञापितम् ॥ ३९ ॥

(१) आर्कस्तु मद्धस्तिति वी० पा० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीति सादरसर्वसम्पदनुभवपूर्वकं प्रणामाय प्रथमतः कृष्णेति स्वरूपनाम्ना सम्बोधनं पुनः क्रमेण ततो बहिर्बहिर्विशेष्यं व्यञ्जयन् जन्मकर्मनामभिरपि सम्बोधयति, वृष्णीत्यादिना । वृष्णिकुलं श्रीवसुदेवादिकं श्रीनन्दादिकं च पूर्वोक्तप्रामाण्यात् तत्र प्रस्तुतत्वेन श्रीनन्दादिकमेवाऽत्र मुख्यं ज्ञेयम् पशुपाङ्गजायेति प्रतिज्ञातत्वात् क्षमेत्यविशेषेण आप्तत्वेऽपि विशेषविवक्षया द्विजपश्वोरुपादानं गोब्राह्मणहिताऽवतारताप्रसिद्धेः उद्धर्मो भगवद्विमुखो धर्मः क्षितिराक्षसाः उद्धर्मप्रवर्तकाः कंसादयश्च चन्द्रसूर्यरूपोभयत्वेन रूपकव्यञ्जना सर्वशुभकारिताविवक्षया कीर्तिप्रतापप्रशंसाद्योतनेच्छया च हे भगवन् ! तत्स्वभूतश्रीकृष्णरूपत्वेन स्वयं भगवन्नित्यर्थः । तथार्कं स्वभुवभूलोकव्यापकप्रकाशमर्कमारभ्य महावैकुण्ठपर्यन्तमर्हन् पूज्य ! यद्वा, एतच्चापूर्वं दृष्टं त्वमेव कर्तुमर्हसि नान्यः कोऽपीत्याह—अर्हतीत्यर्हन् हे सर्वं कर्तुं योग्य ! समर्थेति वा अत आकल्पं मञ्जीवनकालरूपान् कल्पानभिव्याप्य यद्वा, आकल्पं त्वदीयगुञ्जावतंसबर्हापीडादिकं वामहस्तस्थकवलादिकं च भूषणमभिव्याप्य तुभ्यं तथा आर्कम् अर्को नामवृक्षो भगवदनर्हपुष्पो वैष्णवानामनादरणीयः तमप्यन्तं समभिव्याप्य तत्तत्सहितायेत्यर्थः ।

"अथैतन्मयैवानुगृहीतानामनुग्रहात् ।
तेषां मुदे स्तुतिर्ब्राह्मी व्याख्यातेयं यथा मति" ॥४०॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति स्तुत्वाऽनुज्ञां प्रार्थयते—अनुजानीहीति । अतो मामनुज्ञापय याहीत्याज्ञापय हे कृष्ण ! मयि सत्त्वसुखज्ञानप्रदत्वेन सच्चिदानन्दघनस्वरूपरूपे"अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति श्रुतेः । वत्सबालादीन् सर्वान् त्वमेव वेत्सि यतः सर्वदृक् सर्वदर्शी जगतां समष्टिजीवानां नाथः त्वमेव नाहं एतज्जगत् चिदचिद्विशिष्टं ब्रह्माण्डं तव शरीरभूतं न मम तच्चार्पितं त्वयि समर्पितम् एवम् आत्मात्मीयभरसमर्पणं कृत्वा नमस्करोति ॥ ३९ ॥

श्रीकृष्णेति हे श्रीकृष्ण ! श्यामसुन्दरविग्रह ! सदानन्दस्वरूप ! अयं परवासुदेवः विष्णुर्नारायणः श्रीकृष्णावतारश्रीरामावतारश्यामसुन्दरः सच्चिदानन्दस्वरूपरूप एव सर्वत्रानुसन्धेयो वैष्णवैरिति रहस्यं नन्वहो यादवकुले जातो यादव एवेत्याह, वृष्णिकुलमेव पुष्करं तस्य जोषं प्रीतिः तां ददातीति जोषदः यस्य सः तत्सम्बोधनम् "यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम्" इति कुन्तीवाक्येन यदुकुलस्य यशोदानायैव भवत्प्रादुर्भाव इति अवतारहेतुत्वकथनम्, अनेन सूर्योपमत्वं च क्षमानिर्जरा विप्राः द्विजाः पक्षिणः पशवः गवादयः श्रीवृन्दावनस्थाः तेषाम् उदधिरिवोदधिश्च श्रीवृन्दावनं तस्य वृद्धिं करोतीति तत्सम्बोधनं चन्द्रोपमत्वं च उद्धर्मं पाखण्डमेव शार्वरं शर्वरीसम्बन्धि अन्धकारं हरतीति हरः तत्सम्बोधनं क्षितिराक्षसध्रुक्, क्षितौ ये राक्षसाः तान् द्रुह्यतीति कंसादिमारक ! मन्देहाश्च तेषामुदयसमय एव मारक ! सूर्योपम ! पुनः सम्बोधयति, आ अर्कम् अर्हन् ! अर्कं देवम् अभिव्याप्य सर्वदेवानां पूज्यतम ! आकल्पं कल्पपर्यन्तं ते नमः आकल्पं शृङ्गारम् अर्हन् ! योग्य ! इति वा ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ जिगमिषुरात्मनोऽस्ततारतम्यं सर्वज्ञस्त्वमेव वेत्सीति वदन्ननुज्ञां पृच्छति—अनुजानीहीति । हे कृष्ण ! सर्वदृक् हेतुगर्भमिदं तत्त्वात्सर्वं वेत्सि जगतां नाथस्त्वं न त्वहमिति भावः । एतत्परिदृश्यमानं जगत्त्वत्स्वयाऽर्पितम् उत्पाद्य त्वय्येव निहितमित्यर्थः । न तु ममेति भावः अतो मामनुजानीह्याज्ञापयेत्यर्थः ॥ ३९ ॥

एवमापृच्छ्याक्षिसङ्कोचनेनैव तदनुज्ञातः पुनर्हर्षातिशयात्स्वकृतावतारासाधारणधर्मैः सम्बोधनपरिकरस्य प्रणम्य च जगामेत्याह—श्रीकृष्णेति द्वाभ्याम् । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन सूर्योपमा क्षमानिर्जरा भूदेवा ये द्विजास्तेषाम् । यद्वा, क्षमायाः निर्जराणां देवानां द्विजानां पशूनां च उदधिवद्वर्धितारः तस्य वृद्धिं करोतीति तथाभूत ! तत्समुदायवृद्धिकारित्वेन चन्द्रोपमात् उद्धर्मः पाषण्डधर्मः स एव शार्वरं तमः तद्धरतीति तथाऽनेन हि द्व्योपमा हे क्षितिराक्षसध्रुक् ! क्षितौ ये राक्षसाः कंसादयः उद्धर्मास्तेभ्यो द्रुह्यतीति पुनः सूर्योपमा सूर्याद्युपमाऽपि न्यूनेति मत्वाऽऽह—आर्कमर्कमाभिव्याप्य सर्वेषां सुमहत्पूज्य ! हे भगवन् ! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमः ॥ ४० ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

किञ्चेदानीमहमस्मिन्स्वाधिकारे स्थास्यामीत्याग्रहो नास्ति मत्तः स्वमेव यस्मिन् त्वदाराधनभूते कर्मणि मामपि नियोजयितुमिच्छा तव वर्तते तस्मिन्नेव नियोजयेत्याह—अनुजानीहीति । कथंभूतः—स्वशेषभूतान् ब्रह्मादीन्स्वस्वाधिकारे नियोजयतीति कृष्णस्तत्सम्बुद्धौ हे कृष्ण ! मां अनुजानीहि आज्ञां देहि मम तु त्वत्कैङ्कर्यमेव परमप्रयोजनमिति त्वमेव वेत्सि यतस्त्वं सर्वदृक् "यः सर्वज्ञः सर्ववित्"इत्यादि श्रुतेः नियोजने हेतुमाह, यतस्त्वमेव जगतां असङ्ख्यातब्रह्माण्डानां नाथः किञ्चैतज्जगत्त्वदर्पितं त्वच्छेषभूतं त्वदधीनमित्यर्थः तथाचोक्तं "कृष्णस्य हि कृते सर्वं जगदेतच्चराचरम्"इति ॥ ३९ ॥

तदेवं नौमीत्यारभ्य स्वाभाविकानन्तमन्तव्यभाव एवैतावत्पर्यन्तं कथापितः अतः पुनस्तमेव स्वशेषिणमत्यादरेण "कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः" इति न्यायेन नमस्कुर्वन्नुपसंहरति—श्रीकृष्णेत्यादिभिर्विशेषणैः स्वज्ञानबलादिभिः शत्रून् स्वाश्रितविरोधिन आकर्षति नाशयतीति कृष्णस्तत्सम्बुद्धौ हे श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् ! वृष्णीनां कुलमेव पद्मं तस्य जोषदायिन् प्रीतिदानेन सूर्यतुल्य ! क्षमानिर्जरद्विजपश्वब्धिवृद्धिकारिन् ! क्षमायां निर्जरा देवा द्विजा भूदेवाः पशवश्च त एवोदधयस्तेषां वृद्धिकारिन् चन्द्रतुल्य उद्धर्मशार्वरहर ! उद्धर्मः पाषण्डं तदेव शार्वरं गाढ तमस्तद्धरतीति पुनः सूर्यतुल्य ! आर्क दपमार्क

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

क्षितिराक्षसधुक् क्षितौ राक्षसाः कंसादयस्तेभ्य आकल्पं ब्रह्मकल्पं मर्यादीकृत्य मार्क सूर्यप्रलयं मर्यादीकृत्य "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः । उद्यन्नेव द्रुह्यतीति पुनः सूर्यतुल्य ! यथा सूर्य उद्यन्नेव राक्षसेभ्यो द्रुह्यति तथा त्वमपि आविर्भवन्नेव ताञ्जाशयतीत्यर्थः । हे अर्हन् ! अस्मदादीनां सर्वेषां पूज्यतम ! भगवन्, हेयनिषेधपूर्वकाप्राकृतज्ञानादिषडैश्वर्य ! तत्र्यम: अहं त्वच्छेषभूतस्त्वदर्थमेव स्यां न मम इति फलितार्थः । यद्वा, आकल्पमित्यत्र आ अकल्पमिति च्छेदः अकल्पो मोक्षस्तमभिव्याप्येत्यर्थः । तदुक्तं प्रथमस्कन्धे उपक्रमे "पिबत भागवतं रसमालयम्" इति आर्कमिति तु पूर्वोक्त एवार्थः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वमिति तथाप्यत्रावस्थानाज्ञाया अलाभात् कथं स्थास्यामीति भावः । क्षिप्रमपि न त्यक्तुं शक्नोमीत्याह—तवेति । तव स्वत्वेन सुस्थापितं दासस्याश्रयस्य स्थायित्वमेव च युक्तमिति भावः ॥ ३९ ॥ ४० ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उपसंहरति—अनुजानीहीत्यादि । हे कृष्ण ! मां अनुजानीहि ननु, किमनुज्ञास्यामीत्याशङ्क्याह—सर्वं त्वं वेत्सि तत् किं कथनीयम् । ननु, कथमहं वेद्मि तत्राह—सर्वदृक् सर्वज्ञोऽसि ननु, ज्ञातं मो ज्ञातं तद्भूरिभाग्यमिहेति यदुक्तं तदेव तव तु जगत्स्रष्टुरेवं न युज्यत इत्याशङ्क्याह—त्वमेवेति । जगतां नाथस्त्वमेव नान्योऽस्मद्विधादिः कुत ? इत्याह—जगदेतत्तवार्पितं त्वय्येवार्पितं त्वय्यर्पितस्य नाथस्त्वां विना कोऽन्यो भवतु तस्माद्यथाऽभिलषितमेव भूयादित्यनुजानीहि ॥ ३९ ॥

तस्माद्भूयोऽपि ते नम इति सस्तवं प्रणमति—श्रीकृष्णेति हे भगवन् ! नमस्ते वृष्णिकुलपुष्कराणां जोषः प्रीतिस्तां दातुं शीलं यस्येत्यनेन भानुत्वं व्यञ्जयं क्षमा पृथ्वी निर्जरा देवा द्विजाः पशवश्च वृन्दावन सम्बन्धिनस्त एवोदधयः तुरङ्गाद्यस्मात् तेषां वृद्धिकारित्वेन चन्द्रत्वम् उद्धर्मा एव शार्वराणि तमांसि तेषां हरत्वेन महाज्योतिष्ट्वात् वह्नित्वम् "वह्निर्ध्वान्ततमोनुदः" इत्युक्तेः । अत एक एव त्वं भानुचन्द्रवह्नीनां मण्डलानि । अयमर्थः यथाऽमी तेजोमण्डलरूपेण बहिः प्रकाशन्ते अन्तस्तु स्वस्वाकारेण वर्तन्ते, तथा त्वमपि ब्रह्माकारेण विश्वव्यापी दृश्यमानाकारेण परिच्छिन्न इति । क्षितिराक्षसध्रुक् ! त्वम्, एतत्त्रितयतेजोव्यतिरिक्तनिजतेजोविशेषवत् त्वम् आर्कम अर्कमभिव्याप्य नमः यावत् सूर्यो भास्यति तावत्कालपर्यन्तं नमस्यामीत्यर्थः । किं बहुना आकल्पं कल्पो द्विपरार्द्धकालं यावज्जीवामि तावदेव नम इति भावः । हे अर्हन् ! नमस्य ! एवं नौमीत्युपक्रम्य नमस्त इत्युपसंहारः ॥ ४०—५१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्तुत्वा गमनं प्रार्थयते—बालकानामानयनार्थम् अनुजानीहीति । गन्तुमनुज्ञां प्रयच्छ कृष्णेति सम्बोधनं स्वस्य प्रेमख्यापनार्थं प्रेषणे अपराधाभावे वा न किञ्चिन्मया वक्तव्यं यतस्त्वमेव सर्वं वेत्सि यतः सर्ववित् तत्र गतस्य स्थातव्यशङ्का न कर्तव्या यतस्त्वमेव जगतां नाथः अतोऽधिकारस्थित्यर्थं प्रेषय यत एतज्जगत् तवैव त्वय्येव चार्पितं मयि स्थापितम् अतः प्रेषणमुचितमेव ॥ ३९ ॥

गच्छन् नमस्यति—हे कृष्णेति । वृष्णयो यादवाः तेषां कुलमेव पुष्करं तस्य जोषो विकासः तस्य दायिन्निति सूर्यरूपतोक्ता क्षमा पृथिवी निर्जरा देवाः द्विजा ब्राह्मणाः पशवश्च त एवोदधिः तस्य वृद्धिकारिन्निति चन्द्ररूपता उद्धर्मः पाषण्डधर्मः तदेव शार्वरं तमः तस्य निवारकेत्यग्निरूपता क्षितिराक्षसध्रुगिति क्षितावुत्पन्ना ये राक्षसाः तान् द्रुह्यतीति अवतारप्रयोजनम् आकल्पं नमस्त इति आर्कमर्हन्निति अर्कमभिव्याप्य सर्वपूज्येति स्वस्यापि नमस्कारे हेतुः ॥ ४० ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

जगदीशत्वाभिमानं परित्यज्याह—अनुजानीहि । हे कृष्ण ! जगतामनन्तकोटिब्रह्माण्डानां त्वमेव नाथश्च स्वामी तत्र हेतुमाह, एतत्सर्वमपि जगत् तवार्पितं त्वयैव विनिर्मितम् । यद्वा, एतत्पर्यन्तं ममतास्पदं जगत् अहन्तास्पदमेतच्छरीरं च तत्तवार्पितं स्वकीयत्वाभिमानं परित्यज्य तुभ्यं समर्पितमित्यर्थः । ननु, कथं तर्हि तत्र स्वकीयत्वाभिमानः तत्राह, सर्वमिति । स्वमहिमानमस्मदादीनां ज्ञानबलादिकञ्च सर्वं त्वं स्वयमेव वेत्सि जानासि तत्र मया को वा विशेषो वक्तव्य इत्यर्थः । तत्र हेतुमाह, सर्वदृगिति । सर्वसाक्षित्वादित्यर्थः । तथा चाज्ञस्य ममोपरि सर्वज्ञस्य तव कृपैव युक्तेति भावः । ननु, तवाधिकारोऽधुना न परिसमाप्तः कथं वृन्दावने जन्म प्रार्थयसे इत्यत आशङ्क्याह, अनुजानीहि मामिति । तद्धिकारस्थित्यर्थं मामनुजानीहि सत्यलोकं गन्तुमनुज्ञां देहीत्यर्थः ॥ ३९ ॥

नेत्रकटाक्षेणैव गमनाज्ञां प्राप्य गच्छन् बहुधा सम्बोधयंश्च नमस्कारं प्रार्थयते । हे श्रीकृष्ण ! सदानन्दरूप ! वृष्णयो यादवास्तेषां कुलमेव पुष्करं कमलं तस्य जोषो विकासः तस्य दायिन् । "जुषप्रीतौ" इति प्रीतिदातृत्वेन सूर्योपमा सूचिता तथा क्षमा पृथ्वी च निर्जरा देवा द्विजा ब्राह्मणाश्च पशवो गावश्च त एव उदधयस्तेषां वृद्धिकारिन्निति चन्द्रोपमा तथा उद्धर्मः पाषण्डधर्मः तदेव शार्वरं तमः तद्धरतीति तथा तत्सम्बोधनेन चन्द्रसूर्ययोर्द्वयोरुपमा अनेन ममापि मायाप्रसारणारूपपाषण्डकृतापराधं हरेत्यपि सूचितम् । क्षितौ ये राक्षसाः कंसादयस्तेभ्य उद्यन्नेव द्रुह्यतीति तथा तत्सम्बोधनेन पुनरपि सूर्योपमा सूर्याद्युपमापि न्यूनेत्याशयेनाह—आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, हे पूज्य ! पूज्यत्वे हेतुमाह, हे भगवन् ! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमोऽस्तु ॥ ४० ॥

---

## ॥ श्रीशुक उवाच ॥

**इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः ।**
**नत्वाभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥ ४१ ॥**

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, मम वैभवं तव मास्तु गोचरस्तत्र वैभवमहं वेद्मि न वेद्मीति वक्रोक्तिमाशङ्क्य किमहमत्र प्रत्युत्तरं कुर्यामिति व्यञ्जयन् सलज्जं सनिर्वेदमाह—अनुजानीहीति । अन्तर्धानं वितरणार्थम् अनुज्ञापयत्यर्थः । अत्र स्थले चणमपि स्थातुमयोग्यमतिनीचं मामाज्ञापय यादृशोऽहं तादृश स्थलं सत्यलोकमेव गच्छेयमिति भावः । हे कृष्णेति चित्तं तु त्वमत्राकर्षस्येव किं तु तद्दूरभाग्यमिह जन्मेति मत्प्रार्थनायां हामिङ्कितनाऽप्यास्त्विति श्रीचरणानोक्तमतः किं कुर्वे तस्मात्त्वत्पुलिनभोजनकथावन्तरायं कुर्वन्नयमपराधी त्वल्लीलाप्रातिकूल्यादेव श्रीमुखोद्गतवचनसुधालेशमप्यनाप्नुवन्नहमितो झटित्येव दूरमपसरामि त्वं वत्सान् चालयित्वा पुलिने भुञ्जानैः प्रियसखैः सह सहासोक्तिप्रत्युक्तिकौतुकं भोजनलीलाशेषं समापयेति त्वनयः । अथमहं त्वतितीरत्यात् पुनः पुनः किं वा विज्ञापयामीत्याह, सर्वसकमत्रादीनां मनोवपुषां वैभवं त्वमेव वेत्सि किं च नाहमस्य जगतः स्रष्टत्वाभावः किं तु त्वमेव जगतामस्येषामपि बहूनां नाथः अत एतत् जगत् चुद्रतरं तव त्वदीयमेव त्वदर्पितं यमिच्छासि योग्यमल्प जानासि तमस्माधिकारिकं कुर्विति भावः ॥ ३९ ॥

यद्यपि मामपराधिनं विज्ञाय मा कूर्वो तदपि क्षणेनाक्ष्यां सानुग्रहावलोकनामृतं तु मह्यं देहि यथा तेनैवाहारेण नित्यं प्राणान् रक्षन् कल्पपर्यन्तं जीवितुं प्रभविष्यामीति व्यञ्जयन् प्रणमति—श्रीकृष्णेति । सूर्यस्वरूपं दक्षिणं नेत्रमालक्ष्याह, वृष्णिकुलपद्मस्य जोषः प्रफुल्लत्वं तत्प्रदायिन् मामपि पद्मसन्तानं कृपया प्रफुल्लयेति भावः । चन्द्रस्वरूपं वामनेत्रमालक्ष्याह क्ष्मा क्ष्मातलस्था मनुष्यादयः निर्जराः स्वर्गस्था देवा द्विजाः पक्षानश्च वृन्दावनस्थाः पक्षिणो गावश्च त एवोदधयस्तेषां वृद्धिकारिन् । मामपि देवाधमं कृपया वर्द्धयेति भावः, युगपदेव नेत्रे द्वे एव पुष्पवन्तावालक्ष्याह—उडुमः पाषण्डधर्मः स एव शार्वरमन्धतमसं "शार्वरं त्वन्धतमसम्" इत्यमरः तद्धरतीति तथा तेन स्वप्रभौ त्वय्यपि मायाचिकीर्षालक्षणो मम पाषण्डं कृपया हर यथा पुनरेवं न कुर्यामिति भावः । चितौ राक्षसा अघासुरादयस्तेभ्यो द्रुह्यसि द्रोहेणापि स्वगतिं ददासीत्यतस्त्वद्वत्सवृन्दवत्सवृन्दविद्रोहित्वात् सत्यलोकब्रह्मराक्षसं मामपि दण्डप्रदानेनापि संस्कुरुष्वेति भावः । स्वप्रभोरनुग्रहं वा दृष्ट्वा दासो जीवितुमुत्सहते औदासीन्यं दृष्ट्वा न प्राणान् धर्तुमीष्टे इति भावः । हन्त हन्त महामहेश्वरोऽपि वेत्रगुञ्जागैरिकपिच्छादिरचितकल्पो गोचारकबालकैः समं खेलन् दृश्यतीत्यनोचित्यं मत्प्रतापकल्पो गोचारकबालकैः ...मोरिति पूर्वं विचारितवता तत्त्वानभिज्ञेन मया वेत्त्वपराद्धोऽसि पूर्वं विचारितवता तत्त्वानभिज्ञेन मया वेत्त्वपराद्धं तानपि प्रसादयामीति मनसि विभाव्याह—आ आकल्पं त्वदीयगुञ्जादिवेषमभिव्याप्य आर्कं अर्को नाम वृक्षो भगवद्वनदं पुष्पस्तमपि व्रजस्थमभिव्याप्य हे अर्हन्, मत्पूज्य ! किं वा हे योग्य कृपाऽकृपाभ्यां मद्भद्राभद्रं कर्तुं समर्थ ! ते तत्सत्सहिताय तुभ्यं नमः—

"सर्वसंशयहृत् सर्वभक्तिसिद्धान्तसन्ततिः ।
अस्तु ब्रह्मस्तुतिश्चित्तभित्तौ मे चारु चित्रिता" ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सर्वज्ञः सर्वेश्वरः सर्वाधारस्त्वमेवेति वदन् आज्ञां देहीत्याह—अनुजानीहीति । इहैव परिचर्यां कर्तुं सत्यलोकं प्रति गन्तुं वा आज्ञापय मामित्यर्थः ॥ ३९ ॥

अविसंकोचेनैव स्वलोकं व्रजेत्यनुज्ञातो नमस्करोति—श्रीकृष्णायेति । हे श्रीकृष्ण ! श्रीयुक्तसदानन्द ! वृष्णिकुलपुष्करस्य जोषदातृत्वेन प्रीतिदातृत्वेन हे भास्करोपम ! क्ष्मादय एवोदधयस्तेषां वृद्धिकारित्वेन हे चन्द्रोपम ! उडुमाः नानापाखण्डधर्मास्त एव शार्वराः निशाचराः तान् हन्तीति हे देवेन्द्रोपम ! चितिराक्षसाः दुर्वृत्ताः जनाः तेभ्यो द्रुह्यतीति हे नरेन्द्रोपम ! निःसमानातिशयप्रीतिदातृत्वादिगुणनिधे ! भास्करादुपमान्यूनेति मत्वाऽऽह, आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, पूज्य ! हे भगवन् ! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमः ॥ ४० ॥ ४१ ॥

---

### भाषा टीका ।

हे श्रीकृष्ण ! अब आप मोकुं आज्ञा देओ तब भगवान् बोले, कि—ब्रह्मा जी तुम बडे पोथा पढे हौ हमारे बछरा और बालक [सखा] खोयगये सो तुम बतायें जाओ । तब ब्रह्मा बोल्यो, कि महाराज ! आप सब जानो हौ काहे सों कि आप सब के द्रष्टा हौ, और सब जगत के आप ही नाथ हौ ये जगत् हू आप ही में अर्पित होय रह्यो है ॥ ३९

हे श्री कृष्ण ! [ दर्शन करन वारेन के चित्त कुं खींचन वारे ] हे यदुकुलकमल के विकास देन वारे ! हे भूमि देवता ब्राह्मण गौ और समुद्र के वृद्धि करन वारे ! हे पृथिवी पै जन्म लेनवारे राक्षसन के नाश करन वारे ! हे भगवन् ! हे पूज्य ! कल्पपर्यन्त और जब तक सूर्य तपै हैं तब पर्यन्त आप कों नमस्कार होय ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्सखिवत्सकमोक्षणकौतुक ! द्रुतविधाविबुधमुदेऽद्भुतम् ।
निखिलरूपमसौ कथदच्युतोऽवतु स वः कलयन् व्रजमङ्गलम् ॥
पादयोर्नत्वा अभीष्टं सर्वतः पूजितमभिप्रेतं वा ॥ ४१ ॥

**ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान् ।**
**वत्सान् पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥ ४२ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुज्ञाप्यानुज्ञां प्रदाप्य पृष्ठेत्यर्थः स्वभुवं ब्रह्माणम् यथापूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनम् ॥ ४२ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भूमानम् अपरिच्छिन्नमाहात्म्यम् इति अभिष्टूय एवमभिष्टुत्य अभितःस्तुत्वा । यद्वा, सर्वव्यापकमपि तथाऽवस्थितं भक्त्या त्रिःपरिक्रम्य अभीष्टं प्रियतमं स्वधाम सत्यलोकवर्त्तिनिजगृहं गत इति प्रथमं लज्जादिना व्रजवासिलोभेन वा पारमेष्ठ्यपदं परित्यज्य कुत्रापि निलीय स्थास्यामीति मनसि कृत्वा स्थितः इदानीं च श्रीभगवत्प्रसादमासाद्य निजप्रियपदमेवागच्छदित्यर्थः । अतो जगद्धाता अन्यथा तत्पदच्युत्या विश्वसृष्ट्यसिद्धिः अतः श्रीभगवानेव प्रस्थापयामास ॥ ४१ ॥

न च केवलं स्वेच्छया गत इत्याह—तत इति । अनुज्ञाप्य प्रस्थाप्येत्यर्थः । स्वभुवमात्मजम् इति सर्वापराधक्षमादिकं सूचितम् ततो ब्रह्मानुज्ञापनानन्तरमेव प्राक् पूर्वमेव यथापूर्वसखं स्वकं निजभोजनस्थानं वत्सानां पूर्वावस्थितिस्थानं वा सरःपुलिनं अवस्थितान् वनान्तर्वर्त्तमानान् वत्सान् आनिनाय इत्थं च श्रीब्रह्मणानीय समर्पिता इति श्रीभगवतैव वा कुतोऽपि सवत्सा बालका आनीतास्ते वा स्वयं कुतोऽप्यागत्य पुनस्तत्रोपविष्टा इत्युक्तमापात् केवलं मायापगमेन पूर्ववत् पुलिने भोजनार्थमासीनेषु पूर्वमेव तानाश्वास्य वत्सानयनार्थं गतोऽसौ वत्सानेवाधुनानीतवानित्युक्तेश्च, मायामोहिताः सन्तोऽन्यत्र वर्त्तन्ते तत्रावसन्तेति स्पष्टमेवावगम्यते. न च व्यक्तमिदम् अन्यैर्जनैर्गोपादिभिः कथ्यन्ते तत्र न दृष्टाः शीतवातादिना वा कथं न हि बाधिता इति मायायाः सर्वशक्तिमत्त्वात् यदि वा वक्तव्यमिदं श्रीभगवता दृष्टापि तादृगवस्थास्ते कथमुपेक्षिताः स्युः । अतः श्रीब्रह्मणा सत्यलोकादौ श्रीभगवददृश्यस्थाने कुत्रापि नीत्वा मायया मोहयित्वा रक्षिता इति तन्न युक्तं यतो ब्रह्ममुदे न ते समानीता इत्यादावुक्तमेव मायाश्रयेत्युक्त्या श्रीभगवत्कृपया च तेषां दुःखाभाव एव. यत्र कुत्रापि नीता अपि ज्ञानघनमूर्त्तेः श्रीभगवतो नैवादृश्याः स्युर्नाम पूर्वं तु यत्क्षणं न ते दृष्टाः इतस्ततो मार्गिताश्च तत्स्नेहपरवशतया किं वा श्रीब्रह्ममोहार्थमेवेत्यपि पूर्वमुक्तमेव इति सर्वथा ते तत्र तत्रैव तथा स्थिता इति सुसिद्धचेत् अत एव श्रीस्वामिपादैरपि लिखितम् । नन्वेतावन्तं कालं कथं ते तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमित्यादि यथापूर्वं सखायो यस्मिन्निति प्रागवस्थितानिति च बालकवत्सपुलिनभोजनभोजनार्थोपवेशादिकमपि सर्वं पूर्ववदेव वर्त्तमानं बोधयति—किन्तु आदिकवये सा कियत्कालादिबुद्धिर्नैया तथा मात्रादिषु तत्तद्बालकाचरितादिकं श्रीभगवत्प्रभावेण तेषु निजतया परिस्फुरितमिति च बोद्धव्यम् अन्यथाऽदृष्टस्थितेरागन्तुकैस्तैः सहवैलक्षण्यापत्तेरिति दिक् ॥ ४२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूमानं सर्वथैवापरिच्छिन्नम् इति, एवम् अभिष्टूय अभिष्टुत्य अभितः स्तुत्वा । यद्वा सर्वव्यापकमेव तथावस्थितं भक्त्या त्रिःपरिक्रम्य अभीष्टं सामीप्ययाच्ञया कृतमौनेन श्रीकृष्णेनाभिप्रेतं धाम यतो जगद्धाता अन्यथा तत्पदत्यागे विश्वसृष्ट्यसिद्धेः एवं "यावदधिकारमवस्थितिराधिकारिणाम्" (३।३।३२) इति न्यायेन तदन्ते तदभीष्टसिद्धिर्भविष्यतीति ज्ञाप्यते ॥ ४१ ॥

स्वभुवम् आत्मजम् इति सर्वापराधक्षमादिकं सूचितम् अनुज्ञाप्य इदानीमप्यात्मयानीति सस्मितं पृष्ट्वा अनुज्ञापनं चेदं स्वसाक्षाद्दिव्यज्ञानोपालम्भनोत्प्रासशिक्षात्तमानुग्रहवित्तयादिव्यञ्जकमपीदं व्यञ्जयति, तादृशस्वरूपैरपि बालवत्सैर्न मम लीलासुखं किन्तु तैरेवेति ततो ब्रह्मानुज्ञापनानन्तरं प्राक् प्राग्वदेवावस्थाचेष्टादिभिरवस्थितान् यथापूर्वं पूर्ववदवस्थाचेष्टाद्यनतिक्रमेण वर्त्तमानाः सखायो यत्र तत् स्वकं स्वभोजनस्थानं पुलिनमानिन्ये अत्र सकवलपाणेः कृष्णस्यागतस्य तैः पूर्ववदेव दृश्यगानस्यावस्थितिश्च पूर्ववदेव ज्ञेया एतत्सर्वसमाधानं च श्रीकृष्णेच्छासम्वलितमायावैभवमेव तथा मात्रादिभिर्व्यवहारोपयिकं ह्यस्तनादितत्तद्बालकाचरितं स्मृतमपि प्राचीनेषु स्माहयितुं नेष्टमित्यपि बोद्धव्यम् ॥ ४२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूमानमिति, सर्वतोऽल्पत्वरहितं स्वरूपरूपगुणविभूतिभिर्वैपुल्यविशिष्टसुखरूपम् अभीष्टं सुखमेव सर्वाभीष्टं भवत्यतोऽभीष्टं स्वस्य प्राप्यतयाऽभीष्टं प्रियं परब्रह्मनारायणावतारतया तदभिन्नं त्रिःपरिक्रम्य परव्यूहविभवेषु त्रिस्वरूपेषु तृतीयस्य विभवरूपस्य भगवतः त्रिःपरिक्रमणं योग्यमेव प्रावर्योर्नत्वा शरणागतस्य नमनमेव पुमर्थः जगद्धाताऽपि नत्वेति अहन्ताममतानिवृत्तिर्व्यज्यते नाहं न मम तवैवाहम् इति नमःशब्दार्थत्वात् इत्यलम् ॥ ४१ ॥

ततो भगवान् ज्ञानबलैश्वर्यादिषड्गुणः स्वभुवं स्वस्य नारायणत्वात्स्वपुत्रम् अनुज्ञाप्य आज्ञाप्य अपराधक्षमालक्षणां यथापूर्वं सखाय उपविष्टा यस्मिन् तत् पुलिनं स्वकं स्वीयं वत्सान् आनिन्ये द्विकर्मकस्य धातोरन्वयः । स्वस्य कं सुखं यस्मिन् तत्पुलिनमिति वा ॥ ४२ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं सम्बोधनैः पूर्वोक्तैश्च धर्मैरभिष्टूय जगद्धाता ब्रह्मा भूमानमपि लीलया सङ्कुचितविग्रहं भगवन्तं परिक्रम्य पादयोर्नत्वा प्रणम्य स्वधाम सत्यलोकं प्रत्यपद्यत जगाम ॥ ४१ ॥

तत इति । ततः स्वस्माद्भवश्चतुर्मुखमाज्ञाप्याविसङ्कोचेनेति शेषः । यथापूर्वं सखायो यस्मिंस्तत्स्वकं पूर्वाधिष्ठितं पुलिनं प्रत्येव वत्सानानिन्ये ॥ ४२ ॥

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

भूमानं निरवधिकभूमगुणविशिष्टं पादयोर्नत्वा नमस्कृत्य द्वितीयार्थे षष्ठी पादौ नत्वेत्यर्थः । अभीष्टं सर्वतः पूजितं धा ॥४१॥

अनुज्ञाप्य अनुज्ञां प्रदाय स्वभवं स्वस्माद्भवो जन्म यस्य तं चतुर्मुखं यथापूर्वं तिष्ठन्ते सखायो यस्मिन् तत् स्वकं पुलिनम् ॥४२॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अभीष्टसामान्ययाञ्चायां कृतमौनेन श्रीभगवताऽभिप्रेतं स्वधाम भूमानमेवाभीष्टम् ॥ ४१ ॥

अनुज्ञापनेन चैवं ज्ञापितं तादृशस्वरूपैरपि बालवत्सैर्न ममलीलासुखं किन्तु तैरेवेति स्वकं निजभोजनस्थानं यथापूर्वसखमिति प्राक् प्राप्तवदेवावस्थितानिति ॥ ४२-४४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्तुत्वा गत इत्याह—इतीति । भूमानं पूर्वमनन्तकोटिब्रह्माण्डरूपेण प्रदर्शितात्मानं त्रिःपरिक्रम्य पुनः पादयोर्नत्वा अभिमतमिष्टं भगवन्तं स्वाभिलषितं स्वधाम वा प्रत्यपद्यत प्रस्थितः गत इति यावत् ॥ ४१ ॥

ततो भगवत्कृत्यमाह—तत इति । यावद्गत्वा ब्रह्मा स्वगृहं बालकान् वत्सांश्चानयति तावद्भगवानेव ब्रह्माणमनुज्ञाप्य प्रागवस्थितान् वत्सान् पुलिनमानिन्ये पुलिनमपि स्वकीयमेव, यत्र पूर्वं बालकाः स्थिताः तत्रापि यथापूर्वसखं पुलिनं यथापूर्वं सखायो यत्र पूर्वं पुलिने बालकान् पूर्ववदुपवेश्य पश्चाद्वत्सानयनार्थं गत इव वत्सान् पुलिनमानिन्ये ॥ ४२ ॥

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

जगद्धाता ब्रह्मा इत्येवं भूमानं सर्वतो व्यापकमपि जगद्धितायाल्परूपेण विराजमानं श्रीकृष्णमभिष्टूय स्तुत्वा त्रिःपरिक्रम्य तत्पादयोर्नत्वा अभीष्टं सर्वतः उत्कृष्टतया सर्वाभिप्रेतं स्वाभिप्रेतं वा स्वधाम सत्यलोकं प्रत्यपद्यत जगाम जगद्धातेत्यनेन तत्र तस्य स्थितिरावश्यकीति सृष्ट्यधिकारस्थानत्वात् सूचितम् ॥ ४१ ॥

भगवानेवं स्वभुवं स्वपुत्रं ब्रह्माणमनुज्ञाप्य स्वलोकगमनाऽनुज्ञां दत्त्वा ततस्तदनन्तरं यावत् ब्रह्मा स्वस्थानाद् बालकवत्सानानयेत्तावत्स्वशक्त्यैव ततस्तानानीय प्रथमतो बालान्पुलिने पूर्ववदवस्थितान् कृत्वा पश्चाद्वत्सानयनार्थं गत एव वत्सानपि यथापूर्वं सखायो यस्मिंस्तत्स्वकं स्वकेलिसम्पत्सरःपुलिनम् आनिन्ये ब्रह्मद्वारा तेषामानयने पुनरपि पूर्ववत् संवत्सरो व्यतीतः स्यादिति ज्ञेयम् ॥ ४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभीष्टं भगवता प्रस्थापयितुमिति शेषः, यतो जगद्धाता अन्यथा सहसा तत्पदत्याजने विश्वसृष्ट्यसिद्धेः ततश्च "यावदधिकारमवस्थितिराधिकारिकाणाम्" [३।३।३२] इति न्यायेनाधिकारान्ते तदभीष्टं सेत्स्यतीति बुद्ध्यते ॥ ४१ ॥

स्वभुवं ब्रह्माणम् अनुज्ञाप्य आज्ञाप्येति मौनेनैव अनुजानीहि मां कृष्णोऽस्याज्ञाप्रार्थने कृते "मौनं सम्मतिलक्षणम्" इति ब्रह्मणा सहसावगमात् मौनत्यागाभावस्तु पशुपवंशशिशुत्वदशायामङ्गीकृतस्य ब्रह्ममोहनार्थं नाट्यस्यारम्भपरिसमाप्तिसिद्ध्यर्थं तत्र "ततो वत्सानदृष्ट्वेत्य पुलिनेऽपि च वत्सपान् । उभावपि वने कृष्णो विचिकाय समन्ततः" इति वत्सबालकान्वेषणनाट्यारम्भे नौमीड्य स्यादिब्रह्मस्तुतौ प्रवृत्तायां कुतस्त्योऽयं चतुर्मुखः किमीहते किं वा मुहुर्मुहुर्नमतीति स्ववत्सान्वेषणव्यग्रोऽहं गोपशिशुर्न बुद्ध्ये इति व्यञ्जकेन मौनेन तस्यैव नाट्यस्य परिसमाप्तिरिति स्वाधीनब्रह्मणोऽग्रे कृष्णेन निजमहैश्वर्यस्याज्ञानमभिनीयतेस्मेति तन्नाट्यमेवानूच्यते "तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यम्" इत्यादिना वात्सल्यादिरसपरिकरव्रजेश्वर्यादीनामग्रे तु तन्महाप्रेमाधीने कृष्णो निजमहैश्वर्यस्य तन्महाप्रेममाधुर्यरसाच्छादितस्याज्ञानं यथार्थमेवेति तत्र न तस्याभिनय इति न तन्नाट्यशब्दे वाच्यमिति विवेचनीयं प्राक् प्राग्वदेव तृणचरणादिचेष्टाभिरवस्थितान् स्वकं स्वभोजनस्थानं पुलिनमानिन्ये कीदृशं यथापूर्वं पूर्वापरकालिकमतिक्रम्य अपरित्यज्य वर्तमानाः सखायो यत्र तत् समासान्त आर्षः । यद्वा, यथा यथावदेव स्थिताः पूर्वसखाः स्वरूपभूतसखेभ्यः पूर्वं सखायो यत्र तत् ॥ ४२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं स्वभुवं ब्रह्माणमनुज्ञाप्य अविसङ्कोचेनैव सत्यलोकं प्रत्याज्ञाप्य यथापूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनं प्रतिवत्सानानिन्ये ॥ ४२ ॥

### भाषा टीका ।

॥ श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—ऐसे भूमा भगवान् श्रीकृष्ण की चालीस श्लोकन सों स्तुति करके तीन परिक्रमा देके चरणारविन्दों में ढोक देके अभीष्ट जो अपनो धाम है, ताको जगत् के धाता [विधान करनवारे] ब्रह्माजी प्राप्त होत भये ॥४१॥

एकस्मिन्नपि याते ऽब्दे प्राणेशञ्चान्तरात्मनः ॥
कृष्णमायाहता राजन् ! क्षणार्द्धं मेनिरेऽर्भकाः ॥ ४३ ॥
किं किं न विस्मरन्तीह मायामोहितचेतसः ॥
यन्मोहितञ्जगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥ ४४ ॥
ऊचुश्च सुहृदः कृष्णं स्वागतन्तेऽतिरंहसा ॥
नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥ ४५ ॥
ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥
दर्शयंश्चर्माऽऽजगरं न्यवर्तत वनाद्व्रजम् ॥ ४६ ॥
बर्हप्रसूनवनधातुविचित्रिताङ्गः (१) प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः ॥
वत्सान् गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥ ४७
अद्याऽनेन महाव्यालो यशोदानन्दसूनुना ॥
हतोऽविता वयञ्चास्मादिति बाला व्रजे जगुः ॥ ४८ ॥

भाषा टीका ।

ता पीछें भगवान् भी ब्रह्माकूं आज्ञा देंके यमुनाजी के पुलिन में जैसे के तैसे जहां अपने सखा बैठे हे ताहं जगे आगी में स्थित जो बछरा हे तिन कों लावत भये ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेतावन्तं कालं कथं तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमत आह—एकस्मिन्निति श्लोकद्वयेन । अब्देऽपि याते प्राणेशं कृष्णमन्तरा च विनाऽपि प्रियविरहे क्षणोऽपि वर्षोऽधिको भवति तथापि मायाहताः क्षणार्द्धं मेनिरे ॥ ४३ ॥

यत् यया मायया मोहितञ्जगदभीक्ष्णं पुनःपुनर्विस्मृतात्मकं विस्मृत आत्मैव येन तत्तथा ॥ ४४ ॥

अत एवमूचुश्च ते त्वयाऽतिवेगेन स्वागतं सुष्ठु आगतम् एकोऽपि ग्रासस्त्वां विनाऽस्माभिर्नाभोजि न भुक्तः इत एहि साधु अविक्षेपेण भुज्यतामिति ॥ ४५ ॥

अभ्यवहृत्य भुक्त्वा ॥ ४६ ॥

प्रोद्दामो वेणवादिस्तस्य रवैरुत्सववत्तेनाढ्यः स्वरूपतः गृणन्नुपलालनैराह्वयन् गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ॥ ४७ ॥

यशोदानन्दसूनुनेति बहूनामुक्तिः सहैव दर्शिता केचिदाहुर्यशोदासूनुना अपरे नन्दसूनुनेति । यद्वा, यशोदां नन्दयतीति यशोदानन्दः स चासौ सूनुश्चेति तथा तेन अस्मान्माहाव्याऽऽद्वयञ्चाविता रक्षिताः ॥ ४८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

आत्मनः स्वस्य प्राणेशं आत्मनः श्रीकृष्णस्य मायाहता इति वा माया यद्यपि ब्राह्म्येव तथापि श्रीभगवतानुमोदिता सती भागवत्येव संवृत्ता अतः प्राक् श्रीबलदेवचिन्तने "प्रायो मायास्तु मे भर्तुः" इति एवं सर्वमेव सङ्गच्छते तच्च पूर्वं लिखितमेव अतस्तया आहताः व्याप्ताः प्राणेशत्वे हेतुः कृष्णं श्रीव्रजेन्द्रकुमारम् किञ्च अर्भकाः श्रीनन्दव्रजबालकाः हे राजन्निति परमाद्भुतत्वात् ॥ ४३ ॥

इह जगति विस्मृत आत्मैव किंवा सर्वव्यापको भगवानपि येन तत् सर्वमितीन्द्रादिमोहापेक्षया अभीक्ष्णमिति कथञ्चित् कदाचित् स्मृतस्य स्मारितस्याऽपि वा मुहुर्विस्मरणात् इति मोहमाहिमोक्तः ॥ ४४ ॥

स्वागतं सर्ववत्सवर्गानयनपूर्वकं सुखेनागतमित्यर्थः । अन्यत्तै-र्व्याख्यातम् । यद्वा, अतिरंहसा स्वागतमित्यस्य लक्षणं नैकोऽपीति यद्वा, त्वय्येकोऽपीति । यद्वा, त्वय्येकोऽपि कवलो नाभोजि श्रीहस्ते पूर्वकवलवृत्तेः अतः इतः अस्मिन् सर्वेषामस्माकं मण्डलमध्य-स्थाने एहि प्रविश साधुनिजोदरपरिपूरणादिप्रकारेण सम्यक् यथा स्यात्तथा भुज्यताम् ॥ ४५ ॥

हसन्निति तेषां मायामुग्धवाक्यश्रवणात् किंवा क्षुधादि-व्यञ्जकोक्त्यश्रवणेन प्रहर्षोदयात् अर्भकैः सहाभ्यवहृत्येति तैर्विना स्वयं तेनैतावन्तं कालं किमपि नाभोजीति । सूचयति ननु, तर्हि श्रीयशोदादिभिस्तत् कथं सोढं तत्राह—हृषीकेशः सर्वेन्द्रियवृत्ति-प्रवर्तक इति भुज्यत इत्यनुकारादिचातुर्येण तेषां चित्तं ग्राहित मित्यर्थः । यथा श्रीलक्ष्मणेन श्रीरघुनाथादिषु तद्वृत्तं च पुराणेषु प्रसिद्धमेव । यद्वा, तदानीं स्वयं प्रीतिरहितोऽपि केवलं तेषां सन्तो-षार्थमभुङ्क्त इदानीं च निजस्नेन्द्रियादिगवसेनेन तत्तद्रस-गन्धादिग्रहणपूर्वकं परमप्रीत्या भुक्त्वेत्यर्थः । व्रजं प्रति न्यवर्तत

(१) प्रोद्दामवेणु० इति वी० पा० ।

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

पाठान्तरेपि स एवार्थः आजगरं चर्म्म दर्शयन्निति अघासुरवधस्य व्रजे कथनाय तत्स्मरणार्थम् इति तच्चापि श्रीभगवता तावत् कालं मायवाच्छाद्य रक्षितमासीदिति ज्ञेयम् ॥ ४६ ॥

इति निजप्रियसहचरबालकवत्ससङ्गतिजनितहर्षभरतो वन्यवेशादिविशेषेण व्रजस्थस्त्रीजनानां नेत्रानन्दं सञ्जनयन् व्रजान्तर्जगामेत्याह—बर्हेति। वनधातुर्गैरिकादिः बर्हादिभिर्विशेषेण चित्राणि भूषितान्यङ्गानि येन किंवा सखिभिर्यस्य सः अतः प्रोद्दामः अत्युच्चः यो वेणुदलशृङ्गाणां रवः तेन स एव वोत्सवः किंवा उत्सवश्च नृत्यगीतादिरूपस्तेनाढ्यः अत एवानुगैस्तैरेव बालकैर्गीता हर्षभरेण गीतवत् सुस्वरं तालादिसहितमुच्चैः कीर्त्तिता पवित्रा निर्म्मला जगत्पावनी वा कीर्त्तिः अघासुरवधादि रूपा यस्य गोपीशब्देन श्रीयशोदादयः सर्वा एव व्रजस्त्रियः तासामपीदानीमेव श्रीकृष्णहर्षभरेणाऽधिकनेत्रानन्दोत्पत्तेः । यद्वा, श्रीकृष्णैकप्रिया भगवत्यः श्रीराधादयः तन्नेत्राणामेव विशेषतस्तद्दर्शनोत्सवसिद्धेः । अन्यत्तैर्व्याख्यातम् । यद्वा, गोपीनां दृग्भिस्तत्कर्त्तृकसाक्षाद्दर्शनैरुत्सवो यस्यास्तथा भूता दृशां हर्षस्थैर्यस्यान्योन्यं सन्दर्शनसुखमुक्तम् एतच्च व्रजान्तरेव बोद्धव्यम्, तदानीं वत्सपालने व्रजाद्दूरचरत्वेनातिविरहानुत्पत्त्या । व्रजाद्बहिरप्रेऽनभिगमनात् तत्रापि गोपालने रसविशेषाविर्भावसमये व्यक्तं वक्ष्यते ॥ ४७ ॥

यशोदाया आनन्दरूपसूनुनेति तस्य तत्कर्मणा तस्या एव विशेषतः सन्तोषोत्पत्तेः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा तेषां कालाज्ञानं च माययैवेत्याह—आत्मनः स्वस्य प्रणोशम् आत्मनः श्रीकृष्णस्य मायाहता इति वा माया यद्यपि प्राकृतैव तथाऽपि श्रीभगवताऽनुमोदिता सती भागवत्येव संवृत्तेति अतः श्रीबलदेवचिन्तने "प्रायो मायाऽस्तु मे भर्तुः" इति तत्तथाऽसम्भवमपि तदिच्छाशक्तेः सर्वशक्तितो बलवत्त्वात्यसम्भवम् अतस्तया हताः प्रतिबद्धाः "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः" इत्यमरः । प्रायोशत्वे हेतुः कृष्णं बल्लवेन्द्रकुमारम् । किञ्च, अर्भकाः श्रीनन्दव्रजबालकाः त्रुट्यर्द्धं पलपञ्चकं मेनिरे तत्र तेषां प्रतीतौ मुहूर्त्तयामदिवसत्वादिपरिवर्त्त विनैव तस्य कालस्य स्थितेः हे राजन्निति परमाद्भुतत्वात् ॥ ४३ ॥

तत्र दृष्टान्तमाह—किं किमिति । इह जगति अभीक्ष्णमिति सुषुप्तौ शास्त्रे वा ज्ञातस्यापि देहद्वयातिरिक्तस्य तस्य मुहुर्विस्मरणात् इति मायामहिमोक्तः अतो भगवदिच्छाबलाधिकत्यास्तादृशेष्वपि मोहनत्वं घटेत इति भावः ॥ ४४ ॥

स्वागतं सर्ववत्सवर्गानयनपूर्वकं सुखेनागतमित्यर्थः । एवं वर्षेऽत्यतीते तथैव कवलादिस्थितिः श्रीभगवदिच्छावैभवेन ज्ञेया अन्यत्तैः । यद्वा, त्वयाऽप्येकोऽपि कवलो नाऽभोजि, श्रीहस्ते पूर्वकवलदृष्टेः अतः इतः अस्मिन्नेव सर्वेषामस्माकं मण्डलमध्यस्थाने एहि प्रविश साधुवत्सान्वेषणे सम्प्रत्यपि तत्सम्भालने वा जातवैयग्र्यं त्यक्त्वा सम्यक् यथा स्यात्तथा भुज्यताम् ॥ ४५ ॥

हसन्निति तेषां मायामुग्धानां वाक्यश्रवणात् दुःखाद्यश्रुकोकिश्रवणेन प्रहर्षोदयाच्च हृषीकेश इति तेषां परमप्रहृष्टत्वात् व्रजं प्रति अभ्यवर्त्तत, निरवर्त्तदिति पाठे स एवार्थः परस्मैपदमार्षम् आजगरं चर्मं दर्शयन्निति अघासुरवधस्य व्रजे कथनार्थं इति तच्चाऽपि श्रीभगवता तावत्कालं मायवाऽऽच्छाद्य तथैव रक्षितमासीदिति ज्ञेयम् ॥ ४६ ॥

इति निजप्रियसहचरबालकवत्ससङ्गतिजनितहर्षभरतो वन्यवेशादिविशेषेण, व्रजस्थस्त्रीजनानां नेत्रानन्दं सञ्जनयन् व्रजान्तर्जगामेत्याह—बर्हेति । वन धातुर्गैरिकादिः वनपदं गृहवश्यसुवर्णादिव्यवच्छेदार्थं बर्हादिभिर्विशेषेण चित्रितानि भूषितान्यङ्गानि येन किं वा सखिभिर्यस्य सः अतः प्रोद्दामोऽत्युच्चैः यो वेणुदलशृङ्गाणां रवः तेन स एव वोत्सवः किं वा स च उत्सवश्च नृत्यक्रीडागीतादिरूपस्तेनाढ्यः परमसमृद्धिमान् अत एवानुगैस्तैरेव बालकैः गीता हर्षभरेण गीतवत् सुस्वरं तालादिसहितमुच्चैः कीर्तिता पवित्रा निर्मला जगत्पावनी वा कीर्तिः अघासुरवधादिरूपा यस्य गोपीशब्देन यशोदादयः सर्वा एव व्रजस्त्रियः तासामपीदानीमेव श्रीकृष्णहर्षभरेणाधिकनेत्रानन्दोत्पत्तेः एवं सख्यांशेन श्रीकृष्णाविर्भावेऽप्येतेभ्योऽप्येषामाधिक्यं दर्शितम् ॥ ४७ ॥

मातृकुलोत्पन्नैर्यशोदासूनुना अन्यैर्नन्दसूनुनेति प्रोक्तमिति ज्ञेयम् । यद्वा अतिसन्तोषेण द्वयस्यैवाविशेषतः प्रशंसा द्वाभ्यामपि ताभ्यां गोकुलकुलभाग्यद्योतनाय ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मनः प्रणाशं कृष्णमन्तरा विना एकस्मिन्नब्दे यातेऽपि आत्ममाया हता अर्भकाः त्रुट्यर्द्धं मेनिरे इत्यन्वयः । अथवा मायाहृता मायया कृष्णकृपया प्राप्ता व्याप्ताः "हनहिंसा गत्योः" इति धातोः । अन्यथा श्रीकृष्णस्य विरहे त्रुट्यस्यापि कथं तेषां सहनं स्यात् ? एवं राज्ञपादानापि ज्ञेयम् ॥ ४३ ॥

कृपाव्याप्तत्वमेवाभिनयेनाह—माया श्रीभगवत्कृपा तया मोहितचेतसः किं किं विषयं न विस्मरन्ति यथाऽत्रैव श्रीयशोदायाः कुन्त्याः वसुदेवदेवक्योः कंसवधानन्तरम् अक्रूरादेश्च श्रीभगवदिच्छया तत्तद्विस्मरणं श्रीकृष्णनाट्यानुसारिकमेव वर्णितमिति तदेवाह—यया मायया इच्छया विचित्रशक्त्या वा जगत् चिदचिद्रूपम् अभीक्ष्णं वारंवारं विस्मृतस्वस्वरूपरूपकं वर्त्तत इति ॥ ४४ ॥

अत एव ते ऊचुरित्यादि, श्लोकः स्पष्टार्थः ॥ ४५ ॥

हृषीकाणामीशः देहेन्द्रियप्राणमनोविशिष्टात्मसमूहनियन्ता परमात्मा तैः सहाभ्यवहृत्य भुक्त्वा व्रजं स्वयवर्त्तत इत्यनेन तेषां सर्वक्रिया श्रीभगवत्कृतैवेति ॥ ४६ ॥

बर्हादिभिः विचित्रितानि अङ्गानि येन तत्र बर्हेण मुकुटशोभा कृता प्रसूनैः मालारूपैः सर्वाङ्गालङ्कारः वनेन जलेन धातुभिस्तिलकादिरचनेति विभागः नवधातु इति वा पाठः वेणुरवेण शृङ्गरवेण प्रोद्दामः प्रबलः उत्सवः तेनाढ्यः वत्सान् तत्रत्यान्तामुच्चारयेन गृणन् गोपीदृगुत्सवदायि दर्शनं यस्य सः गोष्ठं प्रविवेश ॥ ४७ ॥

महाव्यालः अघासुरः अद्येति वर्षानन्तरमुक्तावपि मायामोहितत्वेन तेषाम् एकदिवसलीलाज्ञानं बाधा इति च इदमेव उपोद्बलयति व्रजे व्रजस्य पुरुषस्त्रीषु जगुरकथयन् ॥ ४८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेतावन्तं कालमेते कथं तत्रैवोपविष्टाः कथं वा तेषां क्षुत्पिपासादिविस्मरणं तत्राह—एकस्मिन्निति द्वाभ्याम् । अब्देऽपि याते आत्मनः प्राणेशं कृष्णमन्तरा विरहेणाऽपि प्रियविरहक्षणोऽपि वर्षाधिको भवति तथापि हे राजन् ! कृष्णस्य मायया हृता मोहिता क्षणार्धं मेनिरे ॥ ४३ ॥

भगवन्मायया मोहितानि चेतांसि येषां ते ऽत एव किं किं न विस्मरन्ति ? सर्वं विस्मरन्त्येव यस्य मायया मोहितं जगदभीक्ष्णं पुनः पुनः विस्मृत आत्मैव येन तत्तथा किमुत क्षुत्पिपासादिकमिति भावः ॥ ४४ ॥

अत एवैवमूचुरित्याह—ऊचुश्चेति । ते त्वयाऽतिवेगेन स्वागतं सुस्वागतम् एकोऽपि ग्रासस्त्वां विनाऽस्माभिर्नाभोजि न भुक्तः अत एहि साध्वविक्षेपेण भुज्यतामिति ॥ ४५ ॥

ततोऽर्भकसहितोऽभ्यवहृत्य भुक्त्वा वनाद्व्रजं प्रति न्यवर्त्तत— जगाम ॥ ४६ ॥

कथम्भूतो न्यवर्त्तत तत्राह—बर्हेति । बर्हादिभिर्विचित्रितान्यङ्गानि यस्य धातवो गैरिकादयः प्रोद्दामाः दाम्नायमानाः ये वेणवः दलानि च तरुणानि वेष्टनीकृत्य मुखवायुपूरितानि शृङ्गाणि च तेषां रवेण य उत्सवो हर्षस्तेनाढ्यः वत्सान् गृणन् हुङ्कारादिभिः प्रेरयन्नित्यर्थः । अनुगैर्वत्सपैर्गीता पवित्रा कीर्तिर्यस्य गोपीदृशामुत्सवरूपा दृष्टिर्दर्शनं यस्य तथाभूतो गोष्ठं प्रविवेश ॥ ४७ ॥

ततो व्रजे आगता वत्सपा जगुर्जगदुः किमिति तदाह—अद्यास्मिन्नहन्यनेनाजगरो हतः अस्मान्महाव्यालमुखाद्रक्षन् अनेन नीताः व्रजं प्रापिताश्चेति ॥ ४८ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

आत्मनः स्वस्य प्राणेशं कृष्णमन्तरा विना अब्देऽपि याते तथापि कृष्णमायाहृता अर्भकाः क्षणार्धं मेनिरे अयमाशयः श्रीकृष्णं विना पूर्वं क्षणार्धमपि वर्षाधिकं भवति तदेवाद्य कृष्णमायामोहितास्ते अब्दमपि क्षणार्धं मेनिर इत्यर्थः ॥ ४३ ॥

अहो ! भगवन्मायावैभवमिति मन्वानं प्रत्याह—किंकिमिति । यया मायया अभीक्ष्णं पुनःपुनर्विस्मृतात्मकं विस्मृत आत्मा स्वात्मा श्रीकृष्णाऽऽख्यो येन तत्तथा तथा च वक्ष्यति श्रीशुकः “कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ,, इति ॥ ४४ ॥

अतिवेगेन त्वया स्वागतं एकोऽपि ग्रासस्त्वां विनाऽस्माभिर्नाभोजि न भुक्तः इत एहि साधु धैर्येण भुज्यताम् ॥ ४५ ॥

अभ्यवहृत्य भुक्त्वा स्पष्टमन्यत् ॥ ४६ ॥

प्रोद्दाम उत्कटो वेणवादिरवैरुत्सवस्तेनाढ्यः सम्पन्नः वत्सान् गृणन् उपलालनैराह्वयन् गोपीदृगुत्सवदृशिः गोपीनां दृशां दृष्टीनां उत्सवरूपा मङ्गलरूपा दृशिर्दर्शनं यस्य सः ॥४७॥

यशोदानन्दयोः सूनुना यशोदासूनुना नन्दसूनुना इति वा बहुना मुक्तिः स्पष्टमन्यत् ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

“ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा” इति च वत्सानितो वत्सपाश्चीत्वान्यत्रेत्यनेनान्यत्र सकृदीक्षितानामपि तेषां पुनस्तत्रावस्थापनं तेषां तु तदपि न ज्ञातमासीदिति ज्ञापयति, अत्र सर्वा ह्यनुपपत्तिर्माययैव वारिता सा च माया ब्रह्मणोऽपि श्रीभगवदनुमोदितत्वात्तदीयैव जातेति ज्ञेयम् अतः श्रीसङ्कर्षणेनोक्तम् “प्रायो मायाऽस्तु मे भर्त्तुः” इति अभीक्ष्णं यया मोहितम् ॥ ४५ ॥ ४६ ॥

गोप्यः श्रीयशोदादयः ॥ ४७ ॥ ४८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा बालकाः समागतं भगवन्तं कथं ज्ञातवन्त इत्याकाङ्क्षायामाह—एकस्मिन्नपीति । एकस्मिन्नप्यब्दे वर्षे याते गते आत्मनः प्राणेशमन्तरा भगवन्तं विना अल्पोऽपि कालः यत्र विरहात् भूयान् भवितुमर्हति तत्र तावन्तमपि कालं कृष्णमायया आहृताः व्याप्ताः न तु ब्रह्ममायया क्षणार्धमेवार्भका मेनिरे ॥ ४३ ॥

ननु, कथमेतावतः कालस्य विस्मरणं तत्राह—किं किमिति । मायामोहितचेतसः किं न विस्मरन्ति यद्यस्मात् सर्वमेव जगत् मोहितं सत् अभीक्ष्णं सर्वदैव विस्मृतात्मकं विस्मृतः आत्मा येन तादृशम् ॥ ४४ ॥

अत एव स्वसुहृदं कृष्णमूचुः ते त्वया अतिरंहसा स्वागतमिति तत्र हेतुत्वेनाहुः—नैकोऽप्यभोजि कवल इति । तव गमनानन्तरम् एकोऽपि कवलो नाऽभोजि न भुक्तः अनेन भगवति प्रेमाऽपि सूचितम् अत एवैहि मध्ये पूर्ववत्तिष्ठ साधु भुज्यतामिति ॥ ४५ ॥

ततो भगवता तथैव कृतमित्याह—तत इति । अर्भकैः सह अभ्यवहृत्य भुक्त्वा अघासुरस्य चर्म प्रदर्शयन् वनात्व्रजं प्रतिन्यवर्त्तत ॥ ४६ ॥

समागच्छन्तं भगवन्तं वर्णयति—बर्हेति । प्रोद्दाम गोबन्धनरज्जुः दोहसम्बन्धी अधिको वा वत्सान् गृणन् उच्चारयन् अनुगैर्बालकैर्गीता पवित्रा कीर्त्तिर्यस्य गोपीदृशामुत्सवरूपा दृष्टिर्यस्य ॥ ४७ ॥

ततो बालका अघासुरवधं व्रजे प्राहुः—अद्याऽनेनेति । केचिद्यशोदासूनुनेति वयं चास्माद्व्यालादविताः ॥ ४८ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

नन्वेवं सम्वत्सरपर्यन्तं कालं ते कथं तत्रैवोपविष्टाः कथं वा क्षुत्पिपासादीन् विस्मृतवन्तस्तत्राह— एकस्मिन्निति । आत्मनः स्वस्य प्राणेशमन्तर्यामिणं प्रियतमं कृष्णमन्तरा विना एकस्मिन्नब्दे याते व्यतीतेऽपि तेऽर्भकाः क्षणार्धं मेनिरे । ननु, प्रियविरहेण क्षणार्धमपि वर्षादधिकं भवति कथन्तेषां वैपरीत्यज्ञानं तत्राह—कृष्णमायाहृता इति । न च तर्हि मन्मायामोहितेतरं इत्युक्तं ब्रह्मणा कथमिति शङ्कनीयं भगवत्परिग्रहभूतानां

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

ब्रह्ममायया मोहासम्भवात् "भावो मायाऽस्तु मे भर्तुः" इति श्रीबल-भद्रेणापि तथैवोक्तत्वात् । भगवतैव स्वलीलासिद्ध्यर्थमन्ते मोहिता ब्रह्मणस्तथा वाक्यन्त्वभिमानमात्रेण ज्ञेयम् । राजन्निति सम्बोधनं विश्वासार्थम् ॥ ४३ ॥

भगवन्मायामाहात्म्यमाह—किङ्किमिति । मायया मोहित-श्चेतो येषां ते प्राणिन इह संसारे किङ्कि न विस्मरन्ति ? सर्व-मेव पर्यायेण विस्मरन्तीत्यर्थः । किं बहुनोक्तेन सर्वमेव जगत्प्राणि-मात्रं यया मायया मोहितं सत् अभीक्ष्णं पुनः पुनः शास्त्राचार्यैः प्रबोधितमपि विस्मृतः आत्मा स्वरूपमपि येन तथा भवति ॥ ४४ ॥

मोहेन त्रुट्यर्द्धाभिमानादेव ते सुहृदः गोपबालास्तं कृष्णं ते त्वयाऽतिरंहसाऽतिवेगेन स्वागतं सम्यगागतमस्माभिस्तु-तावदेकोऽपि कवलो ग्रासस्त्वां विना नाभोजि न भुक्तोऽत इतः अस्मिन् स्वोपवेशस्थाने एहि उपविश्य साधु यथा भवति तथा वत्सानां प्राप्तत्वादपि क्षेमेण भुज्यतामित्यूचुश्च ॥ ४५ ॥

ततो मोहप्रयुक्तवाक्यश्रवणानन्तरं हृषीकेशः सर्वा-न्तर्यामी श्रीकृष्णो हसंस्तैरर्भकैः सहाभ्यवहृत्य भुक्त्वा आजगरमघासुरशरीरजं चर्म तेषां दर्शयन् वनात् व्रजं प्रति न्य-वर्त्ततेत्यन्वयः ॥ ४६ ॥

वनाद्व्रजमागच्छन्तं वर्णयति—बर्हेति । बर्हो मयूरपिच्छश्च प्रसूनानि च नवधातवो गैरिकादयश्च तैर्विचित्रितान्यङ्गानि यस्य सः प्रोद्दामा अत्युत्कटा ये वेणुवादिरवाः शब्दास्तैर्य उत्सवस्ते-नाढ्यः सम्पन्नः वत्सान् गृणन् उपलालननामभिराह्वयन् अनुगैर्गोपैर्देवैर्गीता पवित्रा श्रवणादिपराणां सर्वदोषनि-वर्तिका कीर्तिर्यस्य सः गोपीनां दृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः कृष्णः गोष्ठं व्रजं प्रविवेश ॥ ४७ ॥

बहूनां सहैवोक्तिः तत्र केचिदाहुः—यशोदासूनुनेति । केचिच्च नन्दसूनुनाऽनेनाद्य वने महाव्यालो हतोऽस्माश्च व्यालाद्भयमविता रक्षिता इति गोपबाला व्रजे जगुः कथितवन्तः ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्र तावत् कालाज्ञाने तथैव कवलपाणेः कृष्णस्यागतस्य तैः सह तथैव भोजनक्रीडाशेषादिकं दुस्तर्क्ययोगमायावैभव-मेवेत्याह—एकस्मिन्नित्यादिचतुर्भिः । आत्मनः स्वस्य प्राणेशं कृष्ण-मन्तरा विनाऽपि योगमायया आहृता आवृताः ॥ ४३ ॥

मोहनसाधर्म्येण योगमायया बहिरङ्गमायां दृष्टान्तयति—किं किमिति । विस्मृत आत्मा येन तत् तथैव योगमायया वर्षं व्याप्य कृष्णविरहदुःखं ते विस्मारिता इति भावः ॥ ४४ ॥

अर्भका ऊचुः, अतिरंहसा सुखेनैवागतं दूरगतवत्सानयने घटिकैका स्वल्पं भविष्यतीत्यस्माभिर्विचारितं त्वया तु क्षणा-र्द्धेनैवागतमिति भावः । एकोऽपि कवलो ग्रासस्त्वया विना नाभोजि तस्मादित एहि ॥ ४५ ॥

हसन्निति, तेषामानन्ददर्शनात् अभ्यवहृत्येति वर्षे गतेऽप्य-न्नव्यञ्जनादीनां क्षणार्द्धमात्रपरिणामित्वं जातं तच्च न वैरस्यं जनयतीति भावः । दर्शयन्नित्यहो सखायः अद्य मृतोऽयं सर्पो वसारक्तादिक्लिन्नो वर्त्तेत एवेति पश्यतेति तद्वधस्य व्रजे प्रख्यापनार्थं योगमाययैव तावत्कालपर्यन्तं तत्तदाच्छादितमासी-दिति ज्ञेयम् वनात् वनविहरणात् व्रजञ्जगामेति शेषः ॥ ४६ ॥

गृणन् उपलालनैराह्वयन् गोपीनां वत्सलानां दृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ॥ ४७ ॥

यशोदानन्दयोर्भाग्यमानन्दो यशो वा यस्मात्तथाभूतेन सूनु-नेति शाकपार्थिवादित्वान्मध्यपदलोपी कर्मधारयः तस्मान्महा-व्यालाद्वयञ्चाविताः ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनः प्राणेशं श्रीकृष्णमन्तरा विना एकस्मिन्नब्दे यातेऽपि कृष्णमायया हृता मोहिता अर्भकाः त्रुट्यर्द्धं मेनिरे ॥ ४३ ॥

विस्मृत आत्मा येन तत् ॥ ४४ ॥

ते त्वया अतिरंहसा अतिवेगेन स्वागतं सम्यगागतम् एकोपि कवलस्त्वां विना अस्माभिर्नाभोजि न भुक्तः इत एहि साधु अविक्षेपेण भुज्यताम् ॥ ४५ ॥

ततस्तेषामुक्तितः हसन् अभ्यवहृत्य भुक्त्वा ॥ ४६ ॥

बर्हादिभिर्विचित्रितानि विभूषितान्यङ्गानि येन सः प्रोद्दामो यो वेणुवादिरवैरुत्सवः तेनाढ्यः सम्पन्नः तत्र दलानि मधुर शब्दोत्पादनार्थमावेष्टितानि पिप्पलादिपत्राणि गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः वत्सान् गृणन् उपलालयन् ॥ ४७ ॥

अस्मात् महाव्यालात् ॥ ४८ ॥

---

### भाषा टीका ।

हेराजन् ! प्राणेश जो श्रीकृष्ण हैं तिनके विना एक वर्ष काल बीत चुको तौ भी श्रीकृष्ण की माया सों व्याप्त होय-के बालक आधे क्षण की बरोबर मानत भये ॥ ४३ ॥

माया सों जिनको चित्त मोहित होय रह्यो ऐसे पुरुष या संसार में कहा २ नहीं भूलेहैं विस्मृत होय रह्यो आत्मा श्रीकृष्ण जाकों ऐसो सम्पूर्ण जगत् निरन्तर जाकी माया सों मोहित होय रह्यो है ॥ ४४ ॥

जब कृष्ण पुलिन में आये तब सब सुहृद ग्वाल बाल कृष्ण सों बोले, कि—अरे भैया ! तूं बडी जल्दी आवतयो देख हमन ने एक कौर भी नहीं खाय पायो, तासों अब तूं यहां आयजा, अब अपन सब मिलके भली तरियां भोजन करें ॥ ४५ ॥

तब तौ श्रीकृष्ण हंस करकें बालकन के साथ भोजन करन लगे, इसबे को यही अभिप्राय है, कि मोकूं तौ बछरा वन के धूर चाटते २ और बालक, वन के घर २ के कामें काज करते २ एक वर्ष बीत गयो और इनके जानें बडी जल्दीही आय गयो, ऐसे भगवान् बछरा चराय के बालकन कों अघासुर अजगर को चर्म दिखावत वन तें व्रजकों लौटत भये ॥ ४६ ॥

॥ राजोवाच ॥

ब्रह्मन् ! परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत् ॥
यो ऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥ ४९ ॥

॥ श्रीशुक उवाच ॥

सर्वेषामपि भूतानां नृप ! स्वात्मैकवल्लभः
इतरे ऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ ५० ॥
तद्राजेन्द्र ! यथा स्नेहः स्वस्वकात्मनि देहिनाम् ॥
न तथा ममतालम्बिपुत्रवित्तगृहादिषु ॥ ५१ ॥
देहात्मवादिनां पुंसामपि राजन्यसत्तम ! ॥
यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥ ५२ ॥

भाषा टीका ।

श्रीकृष्ण को वनते ब्रजमें आयवे समें की शोभा कहें हैं, कि-मोर मुकुट धारण किये, तामें पुष्पन के गुच्छा लटकाये, पुष्पन को सिंगार किये, नवीनधातु अर्थात् गोवर्द्धन के खान की आंजनी शिला सिन्दूरी शिला जो आज काल प्रसिद्ध हैं ताकी गेरू की चित्र विचित्र खोर लगाये, और सब अंगन में लिखना काढ़ें भये, ऊंचें स्वर वारी वेणु, पत्रोंमान की पिपीरी, और माहिष शृंग इनके शब्द के कुतूहल में मग्न, नाम ले ले के बलराम को बुलावत ब्रज में आवत भये । प्रभु के ब्रज में आवते समें सब सखा आप की पवित्र कीर्त्ति गावते हे वा समें को आपकी श्रीमूर्त्ति को दर्शन, गोपीन के नेत्रन कों उत्सव रूप होत भयो ॥ ४७ ॥

या प्रकार एक वर्ष पीछें बालक ब्रज में आयके कहा बोले, कि—या कन्हैया ने आज अबही एक बडो अजगर मारयो, और वातें हम सबन की रक्षा करी । इतने में लोग पूछन लगे कि—कौन ने मारयो ? तब यशोदा के पक्ष के बालक बोले, कि—हमारी यशोदा मैया के लाला ने मारयो। और नन्दके पक्ष के बोले, कि हमारे बाबा नन्द के लाला ने मारयो हो ऐसे गावत भये ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

"व्रजौकसां स्वतोकेषु स्नेहवल्ल्यान्दमन्वहम् । शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत्" इत्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं तत्र पृच्छति—ब्रह्मन्निति ॥ ४९ ॥

श्रीकृष्णस्य साक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमन्तावदात्मनः स्वतः प्रेष्ठत्वमन्येषान्तु तदुपाधिकमिति दर्शयति-पञ्चभिः सर्वेषामपीति ॥ ५० ॥

कुतः ? तथा दर्शनादित्याह—तदिति । तस्मादेव कारणात्स्वस्वकात्मन्यहङ्कारास्पदे देहे ॥ ५१ ॥

आत्माध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानन्तन्निबन्धनमेवेति दर्शयितुं मूढामूढभेदेन विशेषमाह—देहात्मवादिनामिति द्वाभ्याम् । तं देहमनुभवन्ति ये पुत्रादयस्ते तु न तथा प्रियतमा इत्यर्थः ॥ ५२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ब्रह्मन् ! साक्षाद्ब्रह्मरूपेति त्वं सर्वमेव वेत्सीति भावः ! इयान् एतावान् यः याचान् परोद्भव इति श्रीकृष्णे तेषां श्रीयशोदानन्दनबुद्धिरेव न तु भगवद्बुद्धिः यथा स्वापत्येभ्योऽप्यधिकस्नेहः स्यादिति भावः । ननु, वस्तुस्वभावेन भवेदिति चेत्तर्हि तत्र का युक्तिरिति पृच्छति—कथमिति । च अपि स्वोद्भवेष्वपि पाठान्तरं स्पष्टं कथ्यतां तन्निरूप्यताम् एवं तत्प्रकारस्यैव प्रश्नः ननु तद्योग्यतायाः तदर्थं पुत्रादिपरित्यागसुप्रसिद्धेः । यद्वा तत्रोपविष्टानां केषांचित्तपःपराणां मुनीनां पुत्रादिष्वेव स्नेहं दृष्ट्वा श्रीभगवति तमनालोक्य तानुपहसन्निव पृच्छति ब्रह्मन्निति कथं कुतः ? अन्यत् समानम् ॥ ४९ ॥

परमात्मा श्रीकृष्णोऽसौ सर्वेषामेव प्रियाद्यात्मनोऽप्यधिकप्रियः किमुतात्मीयेभ्य इति वक्तुं देहादावात्मनः स्वतः प्रेष्ठत्वमन्येषां च तदुपाधिकमेवेत्याह—सर्वेषामिति पञ्चभिः । स्वस्यात्मेति सम्यग्ज्ञातात्पत्त्या परेषामात्मना सह भेददृष्टेः किं वा स्वस्य आत्मनः प्रेष्ठतायाः स्वयमेव साक्षादनुभवसिद्धेः आद्यशब्दात् गृहदारादयः अपत्यादिभ्योऽधिकवल्लभस्यापि देहस्यानुक्तिः, अग्रे देहात्मरागिणां मते विशेषेण देहस्यैव प्रियतमताया वक्ष्यमाणत्वात् यद्वा, आद्यशब्देन सोऽपि गृहीतः तस्य स्पष्टानुक्तिः सदाधिकपालनादिना तस्य वल्लभतायाः प्रत्यक्षत्वात् एवमग्रेऽपि हे नृपेति प्रजापालनमपि भवादृशो राज्ञो यत्प्रियं तद्ध्यात्मात्मत्वेनात्मनः प्रियत्वादेवेति भावः । हीति सर्वानुभवादिप्रामाण्यं बोधयति ॥ ५० ॥

तदेवाह—तदिति । स्वार्थे कः स्वस्मिन् स्वस्मिन्नात्मनि देहा-

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

धिष्ठातरि मनस्तस्य साभिमानत्वाच्चैरपि व्याख्यातम् अहङ्कारास्पद इति आत्मनि देह इति व्याख्या चायुक्ता तस्य निरन्तरश्लोके वक्ष्यमाणत्वात् देहिनां देहातिरिक्तात्मज्ञानवतामित्यर्थः । ममतालम्बीति अहन्तास्पदादप्यात्मनः सकाशान्ममतास्पदपुत्रादिषु स्नेहस्य न्यूनतायोग्यत्वादित्यर्थः । हे राजेन्द्रेति साम्राज्येऽप्यात्मवत्स्नेहो नास्तीति भवता ज्ञायत एवेति भावः ॥ ५१ ॥

देह एवात्मेति वादिनाम् अत्यन्ताविवेकिनामित्यर्थः । अत एव देहातिरिक्तात्माऽज्ञानाद्देह एव प्रियतमः तन्मतेऽप्यात्मनः प्रियतमत्वं पर्य्यवस्येदेव आत्मतयैव देहस्य मननेन प्रियतमत्वात् हि निश्चये त्वर्थे चकारः हे राजन्यसत्तमेति केचिद्राजन्या देहात्मवादिनोऽसन्त एव ब्रह्मवादिनश्च सन्त ईश्वरवादिनः सत्तराः तेषु च श्रीकृष्णैकप्रियत्वात्त्वं सत्तम इति भावः ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, स्नेहस्तावत्त्रिधा दृश्यते विषयसौन्दर्य्येण ममताविशेषेण स्वाभाविकदैहिकसम्बन्धविशेषेण च तत्र प्रथमं प्रागेव यावद्धत्सपेत्याद्युक्तत्वात् द्वितीयश्च तद्वदेव तत्तत्सम्बन्धस्यानतिरेकात् यश्च तृतीयः श्रीप्रद्युम्नागमने तन्मातरि श्रुतः सत्वत्र विपरीत एव तर्हि कथं "व्रजौकसां स्वतोकेषु" इत्यादिकमुक्तमित्यभिप्रेत्य विशेषबुभुत्सया परविबोधिषया वा पृच्छति—ब्रह्मन्निति । श्रीकृष्णो श्रीदामादिनामरूपाभ्यां व्यक्ते न तु स्वस्वरूपेणैव व्यक्ते तस्मिन् अन्यथा तत्रापि पूर्वपक्षः प्रसज्जेत स च पुरा न कृत इति यः यावान् अत्र परोद्भवत्वं "नन्दस्त्वात्मज उत्पन्ने" इत्युक्तसिद्धान्तानुसारेणैवोक्तम् अन्यथा श्रीमन्नन्दयशोदे प्रत्यप्ययं पूर्वपक्षः प्रसज्जेत स च पुरा न कृत इति यद्वा यथा कृष्णो त्वपूर्ववदिति दृष्टान्तिते श्रीकृष्ण एव पूर्वपक्षः एतत्पक्षे विषयसौन्दर्य्यस्याधिक्यमस्त्येव किं तु ततोऽपि ममतादेहसम्बन्धयोराधिक्यं विवक्षितं तच्च सिद्धान्तविशेषबुभुत्सयेति ज्ञेयम् ॥ ४९ ॥

परमात्मा श्रीकृष्णोऽसौ सर्वेषामेव प्रियादात्मनोऽप्यधिकप्रियः किमुतात्मीयेभ्यः सुखदविषयादिभ्य इति वक्तुमादावात्मनः स्वतः प्रेष्ठत्वमन्येषां तदुपाधिकमेवेत्याह—सर्वेषामिति पञ्चभिः । अत्र प्रथमतः स्वात्मेति देहदेह्यविवेकेनाहन्तास्पदमात्रमुच्यते ममतास्पदे प्रेमव्यवच्छेदार्थं स्वशब्दश्च प्रतिस्वमनुभवापेक्षया भूतानामित्यादावौपचारिकभेदेन हे नृपेति त्वादृशस्य स्वधर्मतः प्रजापालनमपि तथैवेति भावः हीति तत्रानुभवादिप्रामाण्यं बोधयति ॥ ५० ॥

तदेव व्यतिरेकेणाह—तदिति अत्राहङ्कारास्पद इत्यन्तैव तेषां व्याख्या परत्र पद्ये तु अहङ्कारास्पदेऽपि देह आत्मेत्यादिका ज्ञेया पाठान्तरं तु न सङ्गतम् अस्यैव विवक्षितत्वाद्देहस्य निरन्तरश्लोके वक्ष्यमाणत्वात् ममतावलम्बीति षष्ठ्यर्थस्य वा व्यवहितत्वात् न्यूनता योग्यैवेत्यर्थः । हे राजेन्द्रेति साम्राज्येऽप्यात्मवत् स्नेहो नास्तीति भवता ज्ञायत एवेति भावः ॥ ५१ ॥

देह एवात्मेति वादिनां अत्यन्ताविवेकिनाम् इत्यर्थः । तन्मतेऽप्यात्मन एव प्रियतमत्वं पर्यवस्येत् आत्मतयैव देहाऽभिमानेन प्रियतमत्वात् हि निश्चये त्वर्थे चकारः हे राजन्यसत्तमेति केचिद्राजन्या देहाऽत्मवादिनोऽसन्त एव आत्मवादिनश्च सन्तः ईश्वरवादिनः सत्तराः तेषु श्रीकृष्णैकप्रियत्वात् त्वं सत्तम इति भावः ॥ ॥ ५२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परोद्भवे परपुत्रे श्रीकृष्णे इयान् बुद्धिस्थोऽपरिच्छिन्नः प्रेमा यः स्वोद्भवेष्वपि तोकेषु बालेषु अभूतपूर्वः कथञ्जातः ? इति कथ्यताम् ॥ ४९ ॥

उत्तरयति शुकः भूतानां चेतनजीवशरीरयोः वाची भूतशब्दः सर्वेषां देवतिर्य्यङ्मनुष्यस्थावरशरीरवतां स्वात्मा जीवदेहविशिष्टं स्वस्वरूपं परमात्मरूपं विशेष्यं न तु देहात्पृथग्भूतं वा प्रीति विषयं तस्याऽननुभवात् इतरेऽपत्यवित्ताद्या तद्वल्लभतया तस्य देहविशिष्टस्य स्वस्य प्रियत्वेन प्रीतिदातृत्वेनैव प्रिया भवन्ति ॥ ५० ॥

देहाधीनम् एवात्मपदवाच्यानां त्रयाणां प्रेमास्पदत्वं विवृणोति—तदिति । हे राजेन्द्र ! ततः कारणात् यथा देहिनां स्वस्वदेहज्ञानविशिष्टानां जीवानां स्वस्वकात्मनि अहन्ताविषये स्वस्य स्वस्य देहे स्नेहः भवति तथा ममतालम्बिपुत्रवित्तगृहादिषु ममताविषया ये पुत्रवित्तगृहदासादयस्तेषु स्नेहः न भवति ॥ ५१ ॥

अपि च देहात्मवादिनाम् आसुरस्वभावानां पुंसामपि यथा देहः प्रियतमः प्रीतिविषयीभूतः तथा तं देहमनु ये पुत्रकलत्रादयस्ते न प्रियतमा इति ॥ ५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम्" इत्युक्तं पुरस्तात्तत्र स्नेहाधिक्यकारणं पृच्छति—राजा ब्रह्मन्निति स्वोद्भवेष्वप्यभूतपूर्वः प्रेमा स परोद्भवे कृष्णे कथमभूदिति प्रश्नः, कथ्यतां तत्र हेतुः कथ्यताम् ॥ ४९ ॥

"न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति" इत्यादिश्रुत्युक्तरीत्या पुत्रादिषु प्रेमा यत्सङ्कल्पायत्तं तस्मिन्नेव साक्षात्पुत्रतामापन्ने सति युक्तमेव प्रेमाधिक्यमित्युत्तरमाह—सर्वेषामिति । स्वात्मा जीवान्तरात्मा परमपुरुष एव निरतिशयप्रिय इतरे तु देहतदनुबन्ध्यादयो जीवपर्यन्तास्तस्य परमात्मनो वल्लभतयैव निरतिशयप्रियत्वेनैव हेतुना प्रियाः ॥ ५० ॥

तस्माद्धे राजेन्द्र ! देहिनां निरतिशयस्वरूपपरमात्मसङ्कल्पायत्तप्रीतियुक्तानां जीवानां स्वस्वदेहे या ममता तदवलम्बी प्रेमा यथा स्वस्वदेहे न तथा पुत्रादिषु । अयं भावः साक्षान्निरतिशयप्रियस्वरूपपरमात्मसम्बन्धादात्मनि या प्रीतिर्न सा देहे जीवे न व्यवहितत्वाद्या च देहे प्रीतिर्न सा पुत्रे देहात्मव्यवधानाद्या च पुत्रे न सा वित्ते या च वित्ते न सा गृहादिष्विति ॥ ५१ ॥

## ॥ पञ्चदशोऽध्यायः ॥

—:o:*:o:—

श्रीशुक उवाच ।

ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ ।
गाश्चारयन्तौ सखिभिः समं पदैर्वृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥
तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ।
पशून्पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥
तन्मञ्जुघोषाऽलिमृगद्विजाकुलं महन्मनःप्रख्यपयःसरस्वता ।
वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान्मनो दधे ॥ ३ ॥
स तत्र तत्राऽरुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ।
स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे धेनुपालनं धेनुकार्दनम् ।
कालियक्ष्वेडतो गोपरक्षणं च निरूप्यते ॥१॥
अहिनक्रप्रवेशेन वृथाखिन्नान् सखीनतः ।
कृष्णः प्रावेशयत्पक्वफलं तालालिकाननम् ॥२

पशुपालसम्मतौ पशुपालने सम्मतौ पशुपालानां वा सम्मतौ ईषद्बयोबलातिरेकमनुकृतवन्तावित्यर्थः । अतीव चक्रतुः सर्वतः प्रसर्पणेन ॥ १ ॥

स्वयशो गृणद्भिर्गोपैर्वृतस्तद्वनं प्राविशत् ॥ २ ॥

तद्वनं निरीक्ष्य रन्तुं मनो दधे कथम्भूतम् ? मञ्जुघोषा येऽलिमृगद्विजा भ्रमरमृगपक्षिणस्तैराकुलं व्याप्तं महन्मनःप्रख्यपयःसरस्वता महतां मनसा प्रख्यं तुल्यं स्वच्छं पयो यस्मिन्स्तत्सर आश्रयत्वेनास्ति यस्य तेन वातेनेति शैत्यमुक्तं शतपत्रगन्धिनेति परिमलवत्त्वं जुष्टं वनमिति मान्द्यं सूचितम् ॥ ३ ॥

अरुणपल्लवश्रिया सह स्पृशन्त्यः शिखाः शाखाग्राणि येषां तान् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततः पञ्चमवर्षक्रीडानन्तरं स्वर्थे चकारो भिन्नोपक्रमात् व्रज इति पूर्ववत् एवमग्रेऽपि ज्ञेयम्, पशुपालसम्मताविति समन्ततः श्रीवृन्दावनविहारार्थं सामञ्जस्य श्रीभगवतो गोपालनेच्छा चिरं जाताऽस्ति सा च बालवहृष्ट्या श्रीनन्दादीनां स्नेहभरेण सम्मता न स्यात् अधुना च यथाकालं किञ्चिद्वयोबलातिरेकप्रकटने सम्मताऽभूदित्यर्थः । पशुपालानां वा सम्मतौ इति व्याख्या तु तयोः पशुपालनप्रावीण्यसूचिका पण्डितसम्मत इति वत् किं वा पशूनां पालानां च सम्मतौ सन्तौ श्रीभगवता पालितानां मुकुरत्वात्वेन मातृसङ्गे मेलितानामपि तं त्यक्तुमशक्नुवतां वत्सानां तन्मातॄणां च तदनुगत्वेन वृषादीनामपि साहचर्येण निरुध्यमानानामपि सर्वेषां तस्या के समागमनात् तेन विना वने पशूनामगमनाच्च तत्र ताविति गणत्वेन निर्देशात् स्नेहभरद्योतना क्रीडा सौष्ठवार्थो सखिभिः सममिति ततः प्रभृतिपूर्वं गोपालनान्निवृत्ता इति ज्ञेयम् ये खलु "ततः प्रवयसो गोपाः" इत्यादौ वर्णिता इति ज्ञेयम् अयम्भावः । पूर्वं स्वधर्मरूपेण गोचारणे तस्मिन् पुत्ररूपस्य प्रतिनिधेरयोग्यत्वात् श्रीव्रजेश्वरेण स्वयमेव गोचारणं तत्तत्सङ्गानुरोधेन तत्सवयस्कैरेव स्वस्वगोचारणम् अधुना तु श्रीकृष्णेन तदारम्भेण तत्सङ्गयोग्यैस्तत्सवयस्कैरेव तदिति. एतच्च कार्त्तिकशुक्लाष्टम्यां तथा च पाद्मे कार्त्तिकमाहात्म्ये—

"शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाऽष्टमी बुधैः ।
तद्दिनाद्वासुदेवोऽभूद्गोपः पूर्वं तु वत्सपः" ॥

इति । पदैः(१)तादृशगोसेवायाः गोपजातिस्वधर्मत्वेन पादुकाद्यग्रहणात् साक्षाद्युदितैः श्रीपादाब्जचिह्नैः पुण्यं पुण्यजनकं सुन्दरं वा अतीवेति पूर्वापेक्षया(वैकुण्ठाद्यपेक्षया) वा सर्वतः प्रसर्पणेन ॥ १ ॥

एवं सामान्येन द्वयोरपि गोचारणादिकमुद्दिश्याऽधुना विशेषतो विचित्रमधुरमधुरक्रीडां सक्षयन् तत्र च श्रीभगवतः प्राधान्यं द्योतयन् प्रथमदिनक्रीडामन्यत्रापि दिग्दर्शनार्थमाह—तदित्यादिना । तच्छ्रीवृन्दावनाख्यं किं वा सुप्रसिद्धमनिर्वचनीयमाहात्म्यं वा तच्छब्दप्रयोगश्च प्रेमभरेण स्मरणविशेषात् माधवो लक्ष्मीकान्तः

(१) स्वावतारार्थेऽदनादिप्रवर्तकश्रीचरणवाञ्छया वा ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति वृन्दावनस्य सर्वसम्पद्विस्तारणाभिप्रायेण श्लेषेण वसन्त इव तदुल्लासकः उच्चैः ईरयन् वादयन् तच्च तदन्तःप्रवेशेन स्वस्यैव हर्षोदयात् श्रीवृन्दावनवर्त्तिनां निजप्रवेशज्ञापनेन प्रहर्षणौत्सुक्याच्च स्वस्य यशोगृणद्भिरिति विहारारम्भे तेषां तत्प्रेममयहर्षभरोदयः सूचितः, आविशत् आविवेश प्रांत्यान्तः प्रविवेश श्लेषेण पशुपक्षिवृक्षादयः तत्रस्थाः सर्वे श्रीकृष्णाविष्टा बभूवुरित्यर्थः । कुसुमानामाकरमिति स्वभावत एव सदा सर्वपुष्पसमृद्धेः अनेन तथा पशव्यमिति स्वत एव पशूनां सुखसिद्ध्या तत्पालनप्रयासाभावेन च तथा गोपैर्वृत इति बलान्वित इत्येताभ्यां सुखविहारसामग्री दर्शिता अत एव विहर्त्तुकाम इत्येवोक्तम् ॥ २ ॥

अन्यामपि तां वर्णयन् श्रीभगवतो विहारारम्भमाह—तद्दिति । महान्तो भगवद्भक्ताः तन्मनःप्रख्यत्वेनात्यन्तस्वच्छत्वं श्रीभगवद्विहारयोग्यत्वं चोक्तं किन्त्वत्र समासप्रविष्टः सरःशब्दो बहुवचनान्त एव ज्ञेयः, तज्जलकणिकाव्याजेन महन्मनोवृत्तय इवेत्युत्प्रेक्षा च ध्वनिता निरीक्ष्य सर्वतः प्रसन्नदृष्टिप्रसारणेनानुमोद्य मनो दधे प्रीत्या मनोऽभिनिविष्टं चक्रे भगवानपीति तन्मोहनत्वातिशयो द्योतितः ॥ ३ ॥

तत्र तत्र स्थाने स्थाने सर्वत्रैवेत्यर्थः । श्रीः सम्पत् भरो भारः अरुणेति तैर्व्याख्यातम् । यद्वा, तया तेन च हेतुना करणेन वा स्पृशच्छिखान् एवं श्रेष्ठयन् वनानां पतीन् वनस्पतीन् महावृक्षानित्युक्तं यद्यपि "वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः" इत्यमरोक्त्या वनस्पतिशब्देन वृक्षमात्रं नोच्यते तथापि लिङ्गसमवायन्यायात् तच्छब्देन वानस्पत्या अपि गृह्यन्ते स्मयन्निति नर्मद्योतकं कुर्वन्ति गोप्य इत्यादौ तत्प्राकट्यात् तत्तादिति चापल्यक्रीडोपोद्बलकत्वेन एवमित्यादिना वक्ष्यमाणाच्च तत्रैकात्म्येन सवयस्कतया सह सर्वदा क्रीडापरत्वेन बाल्ये सख्यांशप्राबल्यात् तथैवाऽग्रजस्य तदानीं गौणत्वमालक्ष्याह—अग्रजमिवेति, अग्रजमपि स्मयन्निवेति च तथैवाभिप्रायः, दर्शयिष्यते च तद्भावद्वये कस्यापि कदाचिदुद्भूतत्वं क्वचित् क्रीडापरिश्रान्तम् इत्यादिभ्यां अतोऽग्रजभावांशसत्त्वेन नर्म चेदं स्तुतिरीत्यैव कृतम् नन्वेवञ्चेत् श्रेष्ठत्वादग्रजेनैव कथं न तस्मै नर्म निर्मितं तत्राह—आदिगुणादिना श्रेष्ठश्चासौ पुरुषश्चेति एवं कविना तु सविनोदं तत्तन्नर्मसङ्गीतमयी स्तुतिरपि तस्मिन्नेव पर्यवसायिता एतदपि कर्त्तव्येषु रमणविशेषेषु चित्तोल्लासेन प्रथममेकं क्रीडनमेव रन्तुं मनो दध इत्युक्तत्वात् एवं सनर्मवचनमपि भगवन्निर्मितत्वात् सर्वं यथावदेव ज्ञेयम् ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चमादुपरि आनवमात्पौगण्डम् आषोडशात्कैशोरम् ॥ १—४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ पौगण्डावस्थावस्थितयो रामकृष्णयोः काञ्चित्क्रीडां वर्णयन् रामकर्तृकं धेनुकासुरभञ्जनम् उभयकर्तृकं तदनुचरभञ्जनं कृष्णकर्तृककालीयह्रदजलपानमूर्च्छितगोगोपोत्थापनं च वर्णयति पञ्चदशेन । ततः कैशोरानन्तरं प्राप्तपौगण्डवयसौ पशुपालने सम्मतौ पशुपालानां वा सम्मतौ तौ रामकृष्णौ सखिभिः सह गाश्चारयन्तौ पदैः पादविन्यासैर्वृन्दावनमतीव पुण्यवच्चक्रतुः, तत्सदा स्वकीर्तिं गृणद्भिः गोपैः परिवृतो बलेन सह समन्वितो वेणुमुदीरयन्नादयन् पशून् पुरस्कृत्य विहर्त्तुमिच्छुः कुसुमानामाकरं पशुभ्यो हितं वनं प्राविशत् ॥ १ ॥ २ ॥

मञ्जुः रमणीयो नादो येषां तैरलिमृगपक्षिभिर्व्याप्तं महतां योगिनां मनसा तुल्यं स्वच्छं पयो यस्मिंस्तत्सर आश्रयत्वेनास्ति यस्य तेनैवमातिशैत्यमुक्तं शतपत्राणां गन्धो यस्य तेन वातेन जुष्टम् एवं परिमलयुक्तत्वमुक्तम् एवंविधं वनं निरीक्ष्य रन्तुं मनश्चक्रे ॥ ३ ॥

अरुणपल्लवानां श्रिया सह फलानां प्रसूनानां च भरेण पादयोः स्पृशन्त्यः शिखा अग्राणि येषां तांस्तरून् वीक्ष्यादिपुरुषः श्रीकृष्णः मुदा स्मयन्निवाग्रजं रामं प्रतीदं वक्ष्यमाणमाह ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रवणमननाभ्यां दुरितहरणाय हरेः पौगण्डवयसि क्रियमाणं विक्रमं निरूपयत्यस्मिन्नध्याये ततः कौमारात्पौगण्डवयः नववर्षलक्षणं वयः श्रितौ प्राप्तौ पशुपालत्वेन सम्मतौ योग्यौ ॥ १ ॥

उदीरयन् ध्वनयन् कुसुमाकरं कुसुमोत्पत्तिस्थानम् ॥ २ ॥

मञ्जवः मनोहराः घोषा येषाम् अलयश्च मृगाश्च द्विजाश्च मञ्जुघोषैः अलिमृगद्विजैः आकुलं महतां नारायणचरणारविन्दनिरन्तरमनसां मनःप्रख्यं मनस्तुल्यं निर्मलं पयो जलं यस्य तत्तथा महन्मनःप्रख्यपयश्च तत्सरश्च महन्मनःप्रख्यपयःसरस्तदस्यास्तीति महन्मनःप्रख्यपयःसरस्वान् तेन शतपत्राणां पद्मानां गन्धोऽस्यास्तीति शतपत्रगन्धी तेन वातेन वायुना ॥ ३ ॥

पल्लवारुणश्रिया युक्तयोः पादयोः प्रसूनोरुभारेण स्पृशन्त्यः शिखा एव कराग्रकोटयो येषां ते तथा तान्वनस्पतीन् वृक्षान्दृष्ट्वा अत्र भक्तिभरभुग्नग्रीवाः पुरुषाः यथा पुष्पनिचयादिना मुकुन्दचरणारविन्दमर्चयन्ति, तथा वृक्षाश्च पुष्पभरोपनतशाखाकराग्रैः पूजयन्तीत्याक्षिप्तः शेषार्थो बोद्धव्यः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२ ॥

स्मयन्निति नर्मद्योतकं कुर्वन्ति गोप्य इत्यादौ तत्प्राकट्यात् तत्तादिति चापल्यक्रीडोपोद्बलकत्वेन एवमित्यादिना वक्ष्यमाणाच्च तत्र सवयस्कतया सह सर्वदा क्रीडापरत्वेनैकात्म्येन सख्यांशभावात् तत्रैवाह—अग्रजमिवेति । अतस्तत्त्वभावेन नर्म चेदं स्तुतिरीत्यैव कृतम् एवं सनर्मवचनमपि भागवतत्वात् सर्वं यथावदेव ज्ञेयम् ॥ ४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"यशोदानन्दयोरेवं निरोधः सुनिरूपितः गोपालानां निरोधोऽत्र सखीकाणां निरूप्यते ॥१॥ मध्यमोऽयं समस्तानां निरोधः परिकी-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्यते । पञ्चधैवानुभावोऽत्र दुष्टनिग्रहरूपवान् ॥ आध्यात्मिकीमाविद्यां वै दूरीकर्तुं तथाकृतिः । तदर्थं क्रमतोऽध्याया उभयेषां तथा द्वयम् । स्नेहाधिक्यसुसिद्ध्यर्थं स्नेहान्तो मध्यमः स्मृतः । प्रथमं द्वादशेऽध्याये देहाऽध्यासो हि धेनुकः । तच्चो ज्ञानपूर्वो हि फलावधि निरूप्यते । कालीय इन्द्रियाध्यासश्चतुर्विषयास्तद्विषं मतम् ततः सर्वविनाशः स्यादित्यन्ते मरणाभिधा । ततश्चेज्जीवितः सर्वं पुनर्देहान्तरस्थितिः ।" तत्र प्रथमं ज्ञानं निरूपयन् भगवान् देशशुद्धिं वनप्रवेशं वनक्रीडायां मनश्च कृतवानित्याह—त्रिभिः ततश्चेति । वन एव ज्ञानं सात्त्विकत्वात् तत्रोद्वेगो न भवतीति तत्र क्रीडायां मनो निरूपणीयम् । प्रवेशश्च ग्रामाद्विप्रक्रमार्थो वक्तव्यः तत्र प्रथमं भगवतो मध्यमलीलायां वृन्दावनस्यैव दैत्यभूयिष्ठत्वात् शुद्धिमाह—तत इति । पौगण्डं वयः षष्ठं वर्षमारभ्य नववर्षपर्यन्तं पुरुषार्थचतुष्टयसाधककालाभिमानिन्यो देवता भगवन्तं सेवितुमागताः पौगण्डशब्देनोच्यन्ते दोषाभावः प्रथमं निरूपणीय इति पञ्चात्मकः कालः पूर्वं निरूपणीयः ततस्तदनन्तरं पौगण्डमेव वयस्ताख्यमिवाश्रितौ व्रजे पशुपालानां सम्मतौ बभूवतुः पशूनां पालने वा योग्यौ तौ रामकृष्णौ साधारणावित्युभयोरिति अतो गाश्चारयन्तौ सखिभिः सख्यपर्यन्तमागतैर्बालकैः गोरक्षाधर्मः स तैः कार्यते अन्यथा सख्यपर्यन्तं गता यदि विक्षिप्ता भवेयुस्तदा वैकुण्ठे नयनलक्षणामात्मसमर्पणां नोपपद्येरन् सखिभिः समं वा वृन्दावनमतीव पुण्यं चक्रतुः समस्ताद्यागभूमिरेषा इदानीं पुण्यरूपैव जाता पदैः पादन्यासैः पादयोः पुण्यनिकायोऽस्तीति पूर्वमवोचाम: पुण्यं ऐहिकपारलौकिकसाधनं कामानुरूपफलदं च इयमपि निःसाधनानां स्वयमेव भगवत्प्राप्तिसाधनरूपं लीलाविशिष्टं सत् स्वतः फलरूपम् अयमेवातिशयो ज्ञेयः कामाभावेऽपि भगवत्प्रापकत्वं च ॥ १ ॥

ततो भगवान् विशेषाकारेण वृन्दावनप्रवेशं कृतवानित्याह—तन्माधवइति । सामान्यलीला एकेनैवोक्ता: तत् तत्र माधवो लक्ष्मीपतिः लक्ष्म्या सह क्रीडां कर्तुं शब्दब्रह्म च सस्वादार्थं मुदीरयन् वेणुरिति वक्ष इश्च वयो स्वरूपानन्दविषयानन्दावणू यस्मात् स वेणुरुभयविस्मारकस्तद्वादेन विषयिणो मुक्ताश्च सर्वे समायान्ति आध्यात्मिका आधिदैविकाश्चोद्बुद्धा भवन्ति ततो वृतो गोपैराधिदैविकैरत एव स्वयशो गृणद्भिः भगवद्यशस्ते निरन्तरं गीयते सामर्थ्यार्थं बलान्वितः बलभद्रो हि क्रियात्मा क्रियायां पशूनां विनियोग इति पशून् पुरस्कृत्य तानादौ क्रियाशक्त्या शुद्धान् कर्तुं वनमाविशत् स्थानमपि पशव्यं पशूनां हितं भगवता पूर्वं तथा कृतत्वात् विहर्तुकाम इति तत्र विहारेच्छया प्रविष्टः विहारे क्रिया पूर्णा भवति रजसैव विहार इति स्थानस्य रजस उद्रेकमाह—कुसुमाकरामिति कुसुमानां रजोविकासानामाकरं स्थानभूतं वनामिति वनलीला सात्त्विकीति सत्त्वप्रधानैव रजोलीला ॥ २ ॥

पश्चाद्भगवान् तत्र स्थिताभिः सर्वाभिरेव देवताभिरलौकिकीभिः सह रन्तुं मनः कृतवानित्याह—तदिति । मञ्जुघोषो येषामलीनां मृगाणां द्विजानां च कुलैराकुलं दृष्ट्वा रन्तु मनो दधे इति सम्बन्धः अत्र त्रिविधा अपि मञ्जुभाषाः तत्र भूयो नास्ति इति ज्ञातव्यं तृणपुष्पफलात्मकं च वनं भवति तत्सम्बन्धिनश्चेन्निर्दुष्टास्तदा तृणादयोऽपि निर्दुष्टा एव भ्रमरादीनां मञ्जुघोषत्वस्यानुक्तिसिद्धत्वेऽपि यत्कथनं तेन लोकप्रसिद्धातिरिक्तो भगवत्स्वरूपनादानुभवानन्दजत्वलक्षणो मञ्जुत्वविशेषो यः स उच्यतेऽतो नानर्थक्यम् अत एव मृगाणामप्युक्तिः अन्यथा रसोद्दीपकत्वं तेषां लोकेन सिद्धमिति तदुक्तिरयुक्ता स्यात् स्वस्थितिदेशो प्रियस्थितिज्ञापकत्वमपि मञ्जुत्वं तेषां ज्ञेयम्, किञ्च न केवलं दोषाभावस्तत्र किन्तु गुणपूर्णताऽपीत्याह—महन्मनःप्रख्यपयः सरस्वता वातेन जुष्टमिति । अन्तरिक्षदैवत्याहिपत्राणोऽरण्यप्रतिष्ठास्तत्र वायुरुभयाधिपतिर्गवासरयस्य च स चेत सर्वथा दोषरहितो गुणवांश्च भवति तदैव लीला सङ्गच्छते श्रमापनोदनार्थं च तस्यापेक्षा लोकसिद्धा वृन्दावने सामान्यतः सर्वदोषनिवृत्तेरुक्तत्वात् वायोरागन्तुकदोष एव परिहर्तव्यः जलपुष्पाणि च तत्सम्बन्धीनि शैत्यमान्द्यसौरभ्याणि च गुणाः तथा सति वायुराधिदैविको भवति महतां मनोवत् यत् सरः सर्वदोषाभावपूर्वकगुणेषु निदर्शनं महतां मनस्ततोऽपि प्रकर्षेण स्थातिर्यस्य भगवल्लीलौपयिकत्वात् एतादृशं पयस्तद्युक्तं सरो व्ययविक्षेपशून्यं शान्तं तरङ्गादिरहितम् अनेन शैत्यमान्द्ये निरूपिते सदादिपदेषु सत्स्वपि यन्महत्पदग्रहणं तेन सरस्यापि नाल्पत्वं महत्परिमाणवत्त्वमेतल्लीलामध्यपातित्वातिरिक्ताशातत्वं च ज्ञाप्यते, शतपत्राणि कमलानि कुशेशयानि पुष्पविशेषा वा तेषां गन्धोऽस्यास्तीति सौरभ्यं निरूपितं तेनापि चेत्सेवितं तदा भगवान् षड्गुणैः सह तत्र रमणार्थं प्रवृत्तः भृङ्गादिषु त्रयो गुणाः वाते च त्रयः अतो वृन्दावनं षड्गुणयुक्तं स्वसमाने च रमणं भवति ॥ ३ ॥

कदाचित्प्राकृतरतिं भगवान् करोतीति कस्यचिच्छङ्का स्यात् तत्परिहारार्थं वृक्षाणां भ्रमराणां मृगपक्षिणां भूमेश्च स्वरूपं प्रकटयति वनं हि भूमिवृक्षात्मकं तत्स्था अपि यदि दुष्टा भवेयुः स्वरूपतोऽपि तदापि वनं त्याज्यमिति दोषाऽभावो गुणाश्च वक्तव्याः तान् भगवानेव जानाति बुध्यते च बलभद्र एव अतोऽग्रे प्रत्यक्षतो लीलां कर्तुं तेषां स्वरूपं बलभद्रं बोधयति—स तत्र तत्रेति । यदि वनस्था न स्वभावं प्रकटयेयुस्तूष्णीं वा तिष्ठेयुः तदा तेषां स्वरूपं भगवान् न वदेत् किन्तु त एव नम्रा इत्याह—तत्र तत्र सर्वत्र वने अरुणपल्लवानां श्रिया उपलक्षितान् फलप्रसूनयोः उरुभरेण स्वपादयोः स्पृशच्छिखान् वनस्पतीन् वीक्ष्येति पल्लवा अङ्गुलिस्थानीयाः तेन हस्ताभ्यां नमस्कारः सूच्यते फलानि पुष्पाणि च निवेदयन्ति साष्टाङ्गश्च नमस्कारः पादयोः शिखार्पणेन यथा प्रथमं सूचितः तानुद्धृतान् दृष्ट्वा भगवतो हर्षः स्मयन्निवेति मन्दहासो मुखप्रसादहेतुः बलभद्रस्य तदज्ञानात् विस्मयः आश्चर्यभावादिवेति बलभद्रोऽप्यावेशित्वेन बोधनीयः अन्यथा देवताचिन्तनाभावे सा देवता नाविष्टा स्यात् । तन्मावेशापेक्षयाऽवतारो मुख्य इति कथं बलभद्रपरत्वेन तेषां निरूपणमित्याशङ्क्याह—अग्रजमिति । अग्र स एवाविर्भूत इति तर्हि बोधनमनुचितमिति चेत्तत्राह—आदिपुरुष इति पुरुषोत्तमः ॥ ४ ॥

श्रीभगवानुवाच ।

**अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ।**
**नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

धेनूनां रक्षणं ज्येष्ठस्तुतिः स्वैः सह खेलनम् ।
धेनुकस्य वधो रक्षा विषात् पञ्चदशे गवाम् ॥

ततः पञ्चमवर्षक्रीडानन्तरं पशूनां पालने सम्मतौ गोपैः सम्मतीभूतौ तद्दिनं तु पाद्मे कार्त्तिकमाहात्म्ये दृष्टम्—

शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः ।
तद्दिनाद्वासुदेवोऽभूद्गोपः पूर्वं तु वत्सपः ॥

इति पदैः पद्मचिह्नध्वजादिभिः पुण्यं चारु अतीवेति पूर्वमूनविंशतिचिह्नानां चरणयोर्लघुत्वाद्रेखाणामतिसूक्ष्मत्वेन स्पष्टीभावात् ॥ १ ॥

तद्वनं पशव्यं पशुभ्यो हितम् प्राविशत् समन्तादाविशत् माधव इति श्लेषेण वसन्त इव तदुल्लासकः ॥ २ ॥

सर्वपञ्चेन्द्रियाह्लादकं वनं निरीक्ष्य मञ्जुघोषा अलयो मृगा द्विजाः पक्षिणश्च तैर्व्याप्तमिति विविधेन सौस्वर्येण श्रोत्रस्य वातेन जुष्टं सेवितमिति व्यञ्जितेन मान्द्येन महतां मनःप्रख्यं मनःसदृशं शीतलमधुरस्वच्छं पयो यत्र तत्सरः आश्रयत्वेनास्ति यस्य तेनेति शैत्येन च त्वगिन्द्रियस्य माधुर्येण रसनायाः शतपत्रगन्धिनेति सौरभ्येण नासायाः शतपत्रस्य सौन्दर्येण नेत्रस्याप्याह्लादकम् ॥ ३ ॥

अरुणपल्लवानां श्रीः शोभा अधोमुखत्वेन पादस्पर्शनात् फलानां प्रसूनानां चोरुभरेण पादयोः स्पृशन्त्यः शिखा येषां तान् वनस्पतीन् वृक्षान् विलोक्य स्मयन् स्मयमान इति विवक्षितस्य वनस्पतीनामुत्कर्षस्य पर्यवसानं सोत्कर्ष एव स्यात् स्वोत्कर्षस्य च स्वयमुक्तत्वनौचित्यात् मुदेत्यानन्दजनितेन गाम्भीर्याभावेनोक्त्या विना स्थातुमशक्तेश्च रामे सख्यभावोऽथेन स्मितेनानेन स्वमहोत्कर्षोऽपह्नवश्चैव व्यञ्जितः, अत एवाग्रिमश्लोके आदिपुरुषेति स्वतास्ताऽपि तस्य सम्बोधनं करिष्यते इवेति मदभिप्रायमिमं भवग्रजो मा बुध्यतामिति स्मितनिह्नवात् तु स्मयन्निन्यर्थः, तथा हि "श्रीवृन्दावनतद्वासिमाधुर्यालब्धचेतसा । तरुतले हरिणा कश्चे निजोत्कर्षावसायिनम् ॥ तमालोक्य ततो राममपदिश्य व्यञ्जयि सः । अतोऽत्र नैव तात्पर्यं रामोत्कर्षानुवर्णने ॥ सख्यभावात्तथा रामे नर्मोक्तमुरारिणा" इति भागवतानुतीया सार्द्धकारिका। आदिपुरुष इति तदनुजत्वेऽपि स्वं भगवत्त्वात्तदादिः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति प्रकटीकृतपौगण्डावस्थयोः राममाधवयोर्गोपालनादिलीलां सानुचरधेनुकासुरवध कालीयनागक्ष्वेडतो गोपरक्षणं च पञ्चदशे ऽस्मिन्नध्याये वर्णयति—तत इति । कौमारं गोपनानन्तरं पौगण्डवयः श्रितौ प्राविष्कृतपौगण्डावस्थौ राममाधवौ सखिभिः समं सह गाश्चारयन्तौ पदैः पादपद्मविन्यासैः वृन्दावनमतीव पुण्यं चक्रतुः ॥ १ ॥

तत्तदा कुसुमाकरं पुष्पाश्रयं गोपालानां प्रियं पशव्यं पशुभ्यो हितं वनं माधवः श्रीपतिः प्राविशत् ॥ २ ॥

तद्वनं निरीक्ष्य भगवान् अखण्डैश्वर्यो रन्तुं मनो दधे कथम्भूतम् मञ्जुमधुरो घोषो नादो येषां तैरल्यादिभिराकुलं व्याप्तम् महतां मनोभिः प्रख्यानि तुल्यानि अत्युज्ज्वलानि पयांसि यस्मिन् तत्सरः आश्रयत्वेनास्ति यस्य तेन शीतलेन शतपत्रगन्धिना शतपत्राख्यपद्मपरिमलवता वातेन जुष्टं सेवितम् अनेन निबिडवनसङ्कुलत्वस्य मन्दगतित्वमपि द्योतितम् ॥ ३ ॥

स आदिपुरुषः प्रकृतिपुरुषप्रेरकः श्रीकृष्णः अरुणपल्लवश्रिया सह पादयोः स्पृशन्त्यः शिखा अग्राणि येषां तान् वनस्पतीन् वीक्ष्य मुदा स्मयन्निव अग्रजं श्रीराममाह, स्वभावत एव सदा प्रसन्नवदनत्वादिवेत्युक्तिः ॥ ४ ॥

---

ॐ कुब्जाकृष्णाम्बरधराय नमः ।

श्रीशुक उवाच ।

श्रीशुक देवजी बोले, कि हे राजन् ! कौमार अवस्था बीते पीछे जब दोऊ भैया पौगण्ड अवस्थाकूं प्राप्त भये तब सब गोपन की सम्मति सों सखान सहित गायें चरावत श्रीवृन्दावन कूं अपने चरणन के सञ्चार सों अत्यन्त पवित्र करत भये ॥ १ ॥

अपने यश को गावनवारे गोपन के सहित और बलदेवजी सहित श्रीकृष्णचन्द्र वेणु को बजावत गैयान को आगे करके गायन को हितकारी, और पुष्पन की खान ऐसो जो वन है ता में विहार करवे की इच्छा सों प्रवेश करत भये ॥ २ ॥

मधुर सुरसे बोलनवारे भौंरा पशु पक्षी इन सों व्याप्त महत् पुरुषन के मन की नाईं निर्मल जा में जल भर्यो ऐसो सरोवरन के स्पर्श तें शीतल और मन्द सुगन्ध वारो पवन जा में चले ऐसे या वृन्दावन कूं देखिके श्रीकृष्णचन्द्र के मन में खेलवे की इच्छा होत भई ॥ ३ ॥

या वन में जहां तहां अरुण पल्लवन की शोभा फल फूलन के बोझ से वृक्ष लूम झूम रहे हैं झुक रहे हैं, ताही सों चरणन में जिनकी शिखा लगे ऐसे वृक्षन कों देखके मुसकाय कें आदिपुरुष श्रीकृष्णचन्द्र बड़े भैया श्रीबलदेवजीसे ऐसे बोलत भये ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तरुजन्म येन तमसा कृतं तस्य तमसः पापस्यापहत्यै नाशाय अथवा येन स्वैश्वर्येण सर्वोपकारकं तरुजन्म कृतं

एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषाऽनुपदं भजन्ते।
प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६ ॥
नृत्यन्त्यमी शिखिन ईड्य ! मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥
(१)धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः।
नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तं त्वां नमन्ति एवं श्लाघ्येऽपि जन्मनि यदज्ञानरूपं तमोऽस्ति तस्याऽपहत्यै ॥ ५ ॥

हे अनघ ! वने गूढमपि त्वां न त्यजन्ति त्वयि मनुष्यवेषेण निगूढे सति मुनयोऽप्यलिवेषेण निगूढास्त्वां भजन्तीत्यर्थः ॥ ६ ॥

इयान् हि सतां निसर्ग इति यदस्ति स्वस्मिंस्तद्गृहमागताय महते महापुरुषाय समर्पयन्तीति ॥ ७ ॥

तृणवीरुधश्च तव पादौ स्पृशन्तीति तथा करजाभिमृष्टा नखैः स्पृष्टाः सदयैरवलोकनैः श्रीरपि यस्मै स्पृहयति केवलं तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्या इति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो इति प्रहर्षे आश्चर्ये वा, अमी इमे स्थावरयोनयोऽपि हे देववर ! सर्वदेवोत्तम ! सुमनसः पुष्पञ्च फलं च तदेवार्हणं पूजोपकरणमात्मनः शिखाभिरग्रभागैः श्लेषेण शिरोभिः उपादाय उपादेयत्वेन गृहीत्वा ते तव पादाम्बुजं नमन्ति नमस्कुर्वन्तः शिखाभिरेव तव पादाम्बुजे समर्पयन्तीत्यर्थः। कीदृशं पादाम्बुजम् अमरा ब्रह्मादिदेवा मुक्ताश्च तैरप्यर्चितम्। ननु, कथं स्थावरयोनीनामीदृशं ज्ञानं तत्राह—तम इति। येषामीदृशो भावस्तेषामज्ञानं नास्त्येव प्रत्युत तमोऽपहत्यै पश्यतां शृण्वतां च तमोनाशाय यत् यैः श्रीवृन्दावनसम्बन्धि तरुजन्म कृतम् अङ्गीकृतम्। यद्वा, तमोऽपहत्यै पशुपक्ष्यादिवदस्वरसङ्गमात् सकिदुःखनाशाय नमन्ति के तेऽमी यत् यैस्तरुजन्म कृतं प्राप्तमित्यर्थः। एवं नित्यसिद्धान् प्रतिविवक्षितं साधनसिद्धान् प्रति तु आत्मनस्तमोऽपहत्यै तथाप्राप्तदुःखनाशाय यदित्यादि यथा ब्रह्मणा प्रार्थितमिति भावः। एवं सर्वत्र प्रकारेण मुहुः सर्वेषामेव सुखं कार्यमिति स्वैरविहारेच्छया प्रोक्तम् ॥ ५ ॥

एत इति। श्रीमदग्रजो वर्णयति—अविशेषेणाखिललोकानां तीर्थं संसारमलपावनं स्वच्छन्दमाहात्म्यद्योतकगुरुरूपं वा अनुपथं पथि पथि भजन्ते अनुवर्तन्ते त्वाम् अनुपदमिति पाठेऽपि तदेव तच्च युक्तमेवेत्याह, हे आदिपुरुषेति। सदास्तत: सर्वेषां स्वस्सेवकत्वादिति भावः। अत्रानुमिमीत इव प्राय इति भवदीया भवतो नाना रूपस्योपासका ये तेष्वपि पूर्णस्य

भजरूपस्य भवत उपासकत्वान्मुख्या ये मुनयः परममनननिश्चितैतद्रूपत्वद्भजनेन तत एवान्यत्र मौनशीलत्वेन चानन्या इत्यर्थः। तेषां गणाः अत एव श्लेषेण मुनयोऽपि गणा अनुगा येषां ते मुनीश्वरा इत्यर्थः। श्रीब्रह्मणापि दुर्लभस्य लाभात् ते वने श्रीवृन्दावने गूढमन्यरूपोपासकैरज्ञातमपि अत्रैव काचित्क्रीडाविशेषाय निलीयस्थितमपि च न जहति तत्र हेतुः, आत्मदैवमिति। भवदीयमुख्या इति च अनयोश्च मिथो हेतुत्वं हे अनघ ! न विद्यते भक्तानामघं यस्मिन् सः हे अपराधाग्राहिन् ! परमकारुणिकेति यावत् अनघात्मदैवमित्येकं वा पदं तदेवमेषामभीष्टसिद्धिः कार्येति भावः। प्राय इति वितर्के श्रीनारदादिवत् यशोगानपरमरहस्यतदन्वेषणाऽनुगत्यादिसाम्यात् ॥ ६ ॥

ईड्य ! हे स्तुतियोग्येति लज्जया स्मित्वा विमुखीभवन्तमिवाग्रजमभिमुखीकरोति मुदेत्यस्य सर्वैरप्यनुषङ्गः ईक्षणेन प्रियं प्रीतिं भावं ते तुभ्यं जनयन्ति "श्लाघ्यर्थानां प्रीयमाणः" ( १।४।३३ ) इति सम्प्रदानत्वं गोप्य इवेति वीक्षणस्य सुष्ठुतया प्रेम्णा च साम्यात् दैर्घ्यचाञ्चल्यसप्रेमत्वादिना तत्स्मरणाच्च अत एव श्रीरामप्रेयस्योऽप्यन्या ज्ञेयाः इत्थं पौगण्डमारभ्य तासु तस्य भावोदयः सूचितः। परमतेजस्वित्वेन पौगण्ड एव कैशोराविर्भावात् तासामपि तादृशत्वात् सूक्तैः श्रोत्रसुखदशब्दैः तत्तत् कुतः ? गृहमागताय अभ्यागतायेत्यर्थः। तच्च "वाक् चतुर्थी च सूनृता" इति न्यायेन युक्तमेवेत्याह, इयानिति ॥ ७ ॥

एवं तत्कर्तृकसेवया तान् स्तुत्वा श्रीरामकर्तृकप्रसादेनापि धरण्यादिसहितान् एव तान् स्तौति—धन्येति। इयमादितो वर्तमाना विचित्रावतारस्पर्शसौभाग्यवती विशेषतः श्रीवराहशेषप्रसादातिशयलब्धमाहात्म्यापि अद्य त्वदवतार एव धन्या परमप्रशंसनीयाऽभूत् आस्तां तावदस्या धन्यात्वं तत्सम्भवानां मध्ये वाधिष्ठा इमाः श्रीवृन्दावनवर्तिन्यः तृणवीरुधस्तृणरूपा लता दूर्वाद्या अपि धन्याः यतस्त्वत्पादस्पृशः एवमुत्तरत्र च धन्येयमिति वचनं लिङ्गव्यत्ययेनानुवर्त्यं स्यादिति छान्दसो ङसो लुक् ततो यथास्थानमाकर्षणीयं तथा द्रुमा लताश्च करजैरङ्गुलिभिः किसलयादीनां सौकुमार्यस्पर्शाय भूषणाद्यर्थच्छेदनाय वा स्पृष्टाः सन्तः "मालत्यदर्शि वः कच्चित्" इत्यादिवत् करजाः नखा इत्यर्थे तु तैरभिमर्शो नाम नागरतासूचकः किसलयादौ लेखो ज्ञेयः, स च श्रीगोपीनामुद्दीपनार्थः "पश्यतेमा लताः" इत्यादिवत् तथा एताः नद्यः एतेऽद्रयोऽपि त्वत्पाद-

(१) अयंश्लोको विजयध्वजेनैकोनविंशतिसंख्यायामग्रे पठितः ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्पृशः सन्त इति गम्यं योज्यं वा तेषु तस्यैव प्राधान्यात् नद्यस्तदेत्यादौ गृह्णन्ति पादयुगलमिति हन्तायमद्रिरित्यादौ यद्वा-नद्यस्तदा मकुन्दचरणस्पर्शप्रमोद इति वक्ष्यमाणाच्च अथ गोपीपर्यायां श्यामसारिवां तर्हि कथञ्चित्तद्दत्तोलम्भां दर्शयन् श्लेषेणाह, गोप्य इति । मत्पितृव्यादवतीर्णस्य पुनर्मत्पितुर्मता प्राप्तस्य गोपकन्यापरिणयनमेव भविष्यतीति सूचयन्त्य इति भावः । तदेवम्भावी यस्तस्य प्रियात्वं प्राप्स्यन्तीभिः काभिश्चिद्-गोपीभिः सह विहारस्तस्य सूचना कृता यत्स्पृहेति श्री-वैकुण्ठनाथवक्षःस्थिता लक्ष्मीरपि यत्स्पृहेत्यर्थः । न केवलं स्पृहा-मात्रं किन्तु वक्ष्यते चान्यन्नागपत्नीभिः "यद्वाञ्छया श्रीर्ललना-चरत्तपः" इति एवमन्यत्र श्रीगोकुले तद्प्राप्तिः श्रीगोपीना-मिव तदनन्यत्वाभावात् तासु तदधिकारिणीष्वननुगतत्वाच्चेति भावः । अत्र सर्वेषां सर्वेषु सत्स्वपि तस्य तस्य प्रभावस्य परमकाष्ठाप्राप्तत्वात् विशेषोक्तिरिति ज्ञेयम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमी तरवः सुमनःफलार्हणां सुमनःफलानुरूपं पूजासाधनं तमोऽपहत्यै "पाप्मापेत" इति श्रुतेः ॥ ५—६ ॥

निसर्गः स्वभावश्चरितमबलक्ष्यते ॥ ७—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—अहो इत्यादिभिः चतुर्भिः स्वयमादिपुरुषोऽपि लोकमर्यादास्थापनार्थमवतीर्णत्वात्स्वशेषभूतमपि शेषमग्रतोऽवतीर्णत्वमा-श्रेया स्वतोऽधिकमिव सम्भावयन्नाह—अहो इति । हे देववर ! यद्वा, देववरै रमरैरर्चितं तव पादाम्बुजं पुष्पफलादिरूपं पूजासाधन-मुपादाय शिखाभिर्नमन्ति तरवः किमर्थमात्मनस्तमसः पापस्या-ऽपहत्यै नाशाय येन तमसा तरुजन्म कृतं सम्पादितं तस्य तमसो-ऽपहत्यै इत्यन्वयः ॥ ५ ॥

हे आदिपुरुष ! एते भृङ्गास्तवानुपदमखिललोकपावनं यशो गायन्तः भजन्ते तिरश्चां कथमेवंविधं ज्ञानं तत्राह—अमी अलयः प्रायेण भवद्भक्तेषु मुख्या मुनिगणाः एवात एवानपाना-गाय ते आत्मनां दैवतं गूढं गोपवेषेणेति शेषः । त्वां न जहति न त्यजन्ति ॥ हे ईड्य ! अमी शिखिनो मयूरा नृत्यन्ति तथा हरिण्यो गोप्य इवेक्षणेन ते तुभ्यं प्रियं कुर्वन्ति तथा स्वगृहं प्रत्याग-ताय ते कोकिलानां गणाः सूक्तैः प्रियं कुर्वन्ति एते कोकिलादयो वनौकसोऽपि धन्या एव सतां निसर्गः स्वभाव इयान् हि मृदुस्वादि-भिस्तृणानिव हि ॥ इयं धरणी तृणानि वीरुधश्च धन्याः भिन्दुमानमिवानेव हि ॥ इयं धरणी तृणानि वीरुधश्च धन्याः कुतः ? यतस्तव पादौ स्पृशन्तीति तथा तथा द्रुमलताश्च धन्याः कुतः ? यतस्तव पादौ स्पृशन्तीति तथा नद्यद्रयादयोऽपि धन्याः कुतः ? सदये-कृतः करजैरभिमृष्टाः तथा नद्यद्रयादयोऽपि धन्याः कुतः ? सदय-अवलोकनैः त्वया वीक्षिता इति शेषः । तथा गोप्योऽपि धन्याः कुतः ? भुजयोरन्तरेण वक्षसा आलिङ्गिता इति शेषः । कथम्भूतेन अखादिमस्पृहा स्पृहावती श्रीः तेन ॥ ८—९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इममेवार्थं विशदयति—अहो इति । देववर ! यद्वा, देववराः ब्रह्मादयः अमरा देवाः एतैरर्चितं सुमनःफलार्हणैः पुष्पफलोपायनैः आत्मनः स्वस्य तमोपहत्यै अज्ञाननिमित्तपापनिरासाय तरुषु जन्म येन तमोनिमित्तपापेन ॥ ५ ॥

यतो यथा देवादयो मनुष्यलिङ्गमवाप्य भगवन्तं सेवन्ते तथा एते भ्रमरा अपि तेष्वेतेषु तस्मात्त्वच्चरणपद्मसेवानवरतं न हातव्या मुमुक्षुभिरिति भावेनाह—एत इति । अलिनो भ्रमराः "भ्रमराणां पद्ममूलमलमाहुर्मनीषिणः" इति अखिललोकतीर्थे समस्तजनस्य स्नानलक्षणां कीर्तनयोग्यं शुद्धिजननस्थानीयं "शाख्येस्व-स्मसि पावने" इति च अखिलः अनल्पः लोकः प्रकाशः ज्ञानं येषां ते तथा तेषां सेवायोग्यशास्त्रस्थानीयं "लुक् प्रकाशे" इति धातुः अनुपथं "पथगतौ" इति धातुः यत्र गच्छसि त्वं तत्रानुगमनलक्षणसेवां कुर्वन्तीत्यर्थः । अनुपदं वा मुनिगणाः सर्वज्ञानां देवादीनां गणाः "येन वेदस्य सर्वस्य मुनिः सङ्कीर्तितः" इत्युपमाला स्वकीयेषु वैष्णवेषु मुख्या गूढं मनुष्यलिङ्गधरं न जहाति त्यजन्ति "ओहाक् त्यागे" इति धातुः अहासीति पाठे वा "व्यत्ययो बहुलम्" (३।१।८५) इति सूत्राभियोगः अमराणामात्मदैवं कुर्वन्ति अनघात्मदैवमिति पाठे अनघानां निर्दुःखानां मुक्तानाम् आत्मदैवम् "मुक्तानां परमागतिः" "दुःखेनोव्यसनेष्वघम्" इत्यमरः अनघेति पृथक् पदं वा ॥ ६ ॥

पूर्वोक्तमतिदिशति—नृत्यन्तीति । शिखिनो मयूराः अन्यत्र केश-शिखाधारिणः तापसाः हरिणयः मृगस्त्रियः अन्यत्र हिरण्म-यवत्तपस्तेजसा उज्ज्वलन्ते भासा भाराऽस्तीति हरिणयः परोप-देशसम्बन्धेन हरिभक्तजनतापहरिणय इत्युच्यन्ते "महेशाज्ज्ञान-मन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" इति स्मृतेः "हरिणी सा हिरण्मयी" इत्यभिधानं ते तवेक्षणेन प्रियं कुर्वन्ति कोकिलगणाश्च सूक्तैः कर्णरम्यैः वचनैः प्रियं कुर्वन्तीति अन्यत्र कः ब्रह्मा उः शिवः तयोः किल वार्ता कीर्तनं सम्भावना च येषां ते कोकिलाः इन्द्रादयः परभृतः इतरप्राणिरक्षार्थं प्राणधारिणः न स्वार्थं परमभागवता इत्यर्थः । स्माद्येन्याय्यः गृहमिति गृहमागताय अतिथये गृहिणाऽर्घ्यपाद्यादिकं दातव्यमिति यस्मात् वनौकसो मृगादयो वा वानप्रस्थादयो वा धन्याः कृतार्थाः स्वं स्वं निवासमागतं त्वां सभाजयन्ति, अयं सतां जातिस्वभाव इत्याह—सतां निसर्गः नितरां स्वभावः इयान् एतावान् हि यस्मात्तस्मा-दिदमुचितमिति भावः । "वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् आशां प्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे" इति "वार्ता सम्भाषणोः किल" इति यादवः ईडच ! सर्वंकर ! ॥ ७—८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहो इति ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भवदाया भवतो नानारूपस्योपासका ये तेष्वपि पूर्णस्य मद्ग्रजरूपस्य भवत उपासकत्वात् मुख्या ये मुनयस्तेषां गणा वने श्रीवृन्दावने गूढमप्यद्रूपोपासकैरवज्ञातमिति न जहाति हे अनघ ! अपराधाग्राहिन् ॥ ६ ॥ ७ ॥

गोप्य इवेति नेत्रगुणेन तत्स्मरणात् अथ गोपीपर्यायां श्यामसारिणीं तर्हि कथञ्चिद्वृक्षोलग्नां दर्शयन् श्लेषया गोप्य इति नेत्रगुणेन तत्स्मरणात् रामप्रियाभिः काचिद्रामस्य भाविविलासस्सूचनेयम् ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमं वनस्पतीनां वैष्णवत्वात् स्वरूपमाह—अहो इति । अहो इत्याश्चर्ये तेषामवान्तरभेददर्शनं स्मृत्वा आश्चर्यमाह, हे देववर ! अमी वृक्षाः अमरार्चितं ते पदाम्बुजं शिखाभिर्नमन्तीति सम्बन्धः । प्रदर्शनेन तेषां चेतनत्वं सूचितम्, आधिदैविकत्वं च यद्यप्येतेऽपि देवाः तथापि भवान् देववरः तत्तदभावेऽपि देवानां देवभजनं न युक्तमित्याशङ्क्याह, अमरार्चितमिति । अमरा ये मुख्या देवास्तैरप्यर्चितं स हि सङ्कर्षणो देवकार्यसाधकोऽतो भूभारहरणार्थं प्रार्थितःअतो यथा तेषां खेदं दूरीकरोत्येवं वनस्पतीनामपि तमो दूरीकर्तव्यम् दूरीकरणार्थं प्रवृत्तः अतो नमन्ति तदाह, तमोऽपहत्या इति । येन तमसा तरुजन्मकृतं सजातीयेनैव सजातीयनिराकरणं भवतीति आधिदैविकतमो नियामकमेव नमस्यन्ति अत एव भगवता स्वनमस्कारो नोक्तः मूलभूतं च तमो न कर्मणा ज्ञानेन च गच्छति किन्तु देवतयैव तरुत्वदोषनिवृत्त्यर्थं च त्वां ज्ञापयितुं तद्रूपेणैव नमस्कारं कुर्वन्ति दयासिद्ध्यर्थं गुणाधिकारोऽयमस्मै दत्त इति मर्यादार्थं तन्निराकरणाय निवेदनं शिष्टं स्वयमेव करिष्यति तदर्थं लीला क्रियत एव । यद्वा, केनचिद्भगवतस्थितिमज्ञात्वा तत्प्रश्ने कृते सुहृत्वं प्रत्याह, तस्य कदम्बस्य प्रियालस्य पनसस्य वा तले क्रीडतीति तदा तदज्ञाननिवृत्तिः स्वस्माद्भवत्येव तच्च तरुत्व एव सम्भवति, नान्यथेति तादृक् तरुजन्म यत् कृतं येन भवता कृतं तमोऽपहत्यै चेति तादृक् तरुजन्म यत् कृतं तमोऽपहत्यर्थमित्यर्थः । आत्मपदस्य सकरणे सर्वेषां तमोऽज्ञानं तदपहत्यर्थमित्यर्थः । आत्मपदस्य शिखाभिरित्यनेन तरुजन्मेत्यनेन वा सम्बन्धः हरौ स्वतश्च क्रीडत्यन्यदेवीवत्तत्स्वत्वं मौढ्यं किं तु तत्सर्वपरिज्ञानमानन्दश्च भवतीत्यात्मनस्तमोऽपहत्या इत्यत्रैव सम्बन्धः । अतस्तमुपकारं स्मृत्वा नमन्तीति भावः । यद्वा, यत् यस्माद्धेतोरात्मनः आत्मीयत्वेन परिगृहीतमिति यावत् तादृक्तरुजन्मकृतमर्थात् त्वयैव हरिणा नमन्तीति सम्बन्धः । वृन्दावनभूमावुत्पत्तिमात्रेणैव हरिदासत्वमात्मीयत्वं मनुत इति तथा यशोत्पत्त्यादिरूपधर्मिणामेतादृशत्वं तत्र धर्मिणां किं वाच्यमिति भावः । वक्ष्यति चाग्रे "न नः पुरो जनपदाः" इत्यादेश्च "नित्यं वनौकसः" इति "तस्मान्मच्छरणं गोष्ठम्" इत्यादि च तमःपदं गुणत्रयोपलक्षकं विशेषाकथनात्सम्बन्धमात्रेण सर्वेषां तथात्वायेति ज्ञेयम् "मन्निकेतं तु निर्गुणम्" इति वाक्यात् ॥ ५ ॥

एवं वृक्षाणां विज्ञापनमुक्त्वा भ्रमराणां विज्ञापनमाह—एतेऽलिन इति । लोकप्रतीत्या यद्यप्येते झङ्कारमिव कुर्वन्ति तथापि वस्तुतस्ते यश एव गायन्ति एतेऽपि तामसाः परं वृक्षापेक्षया किञ्चित्समीचीनाः ते तु फलपुष्पाढ्या इति सुमनांसि फलानि चार्हणरूपाणि पूजारूपाण्यग्रे स्थापयित्वा कायिकं नमनं कृतवन्तः एते तु राजसा इति फलाद्यभावाच्च वाचनिकीमेव सेवां कुर्वन्ति ते सङ्के सुखामोदार्थमायान्तीति न मन्तव्यं यतो यश एव गायन्तोऽनुपथं भजन्ति प्रार्थना त्वेतेषां नापेक्ष्यते यतोऽखिललोकतीर्थं यशो गायन्ति सर्वेषामेव यत् शोधकं तदात्मानं शोधयत्येवेत्यविवादम् प्रभूणां गायका अपि सेवका भवन्ति कदा वा कृपां करिष्यतीत्यनुपथं भजनम् । नन्वेते भ्रमरा हीनाः कथं यशो ज्ञास्यन्ति ? इत्याशङ्क्याह—प्राय इति । अमी सर्वे मुनिगणा एव भवदीयेषु भवत्सेवकेषु मुख्याः ननु, ब्रह्मविदो भक्ताः कथं नीचयोनिं प्राप्तवन्त ? इत्याशङ्क्याह, गूढं वनेऽपि न जहत्यनघात्मदैवमिति भवान् गूढः एतेऽपि गूढाः यथा भवान् मनुष्यभावं प्राप्त एवमेतेऽपि भ्रमरभावं भवदीयमुख्यत्वादनुपथं भजनं मुनिगणत्वाद्गानम् । ननु, किमिति गूढं भजन्ते प्रकटमेव देवान्तरं महादेवादिरूपं कथं न भजन्ति ? तत्राह—अनघात्मदैवमिति । अनघश्चासावात्मदैवं च निर्दोषो हि त्यक्तुं न शक्यः तत्राप्यात्मनः तत्रापि दैवं तामसा एव, हि सेव्याः तत्र महादेवादयः स्वसम्बन्धिनोऽपि देवता अपि भूतगणावृता इति न सेवितुं शक्याः ब्रह्मादयस्तु स्वसम्बन्धिन एव न भवन्ति अन्ये तामसाः देवता एव न अतः एवानघगणा गूढमपि भजन्ते वने, वा गूढं यथा भवति तथा अन्यथा भगवान् रोषं वा कुर्यात् अत एतेष्वप्यनुग्रहः कर्तव्य इति ॥ ६ ॥

मृगपक्षिणां विज्ञापनमाह—नृत्यन्तीति । हे ईड्य ! अमी शिखिनस्त्वामागतं ज्ञात्वा नृत्यन्ति ईड्येति सम्बोधनात् अन्ये गायन्ति स्वयं नृत्यन्ति शिखिनां नृत्यमेव प्रशस्तम् आगमने यो नृत्यति स महान् भक्तः आगमनमेव तस्याभीष्टं यतः हरिणयोऽपि ते ईक्षणेन प्रियं कुर्वन्ति कथञ्चित्प्रीतिरुत्पादनीया ता अपि मुग्धा भवन्तं पश्यन्ति स्वस्य च चक्षूंषि भवते प्रदर्शयन्त्यो गोपिकादिक्षमारकत्वेन सुखं जनयन्ति गोप्य इवेति गोप्यो यथा स्वरूपतः सुखजनिकाः एवं तत्स्मारिका अपि नाट्यकाव्येषु तथानिरूपणात् कोकिलगणास्तु सूक्तैः स्तोत्ररूपैः प्रियं कुर्वन्ति तासां शब्देन महानानन्दो भवति एते वनस्था गृहस्था इव धन्याः यतः इयानेव सतां निसर्गः स्वभावः—

> "आगते परमस्तोषः प्रियार्थस्योपनायनं
> वाक्यैः स्तुतिश्च परमा महत्येतावदेव हि ।
> तृणानि भूमिरुदकं सामान्ये गृहमागते"

अत आह—इयानेव सतां निसर्ग इति ॥ ७ ॥

वृन्दावनभूम्यादीन् स्तौति—धन्येति । इयं धरणी भूमिर्धन्या तव पादस्पर्शात् तृणवीरुधोऽपि धन्याः त्वत्पादस्पृशः द्रुमलता अपि धन्याः करजैर्नखैरभिमृष्टाः नद्योऽद्रयः खगाः मृगाश्च धन्याः दयासहितसावलोकनैः गोप्योऽपि धन्याः तव भुजयोरन्तरेण कृत्वा सर्वाङ्गिकं प्राप्य । ननु, कथमस्य पुंस्त्वं तत्राह—यत्स्पृहा श्रीरिति भूम्यादीनां विज्ञापनं न किञ्चित्कर्तव्यं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यतस्त्वयां यथा कथञ्चित् सर्वं एव तत्तत्प्रकारेण प्रीणिताः आवेशिनः सर्वभावेन निरूपयो आवेशाधिकरणभूतः सम्यक् भावयति ततः श्रीग्रमेणाविष्टा सा देवता भवति अन्यथाभय- थामत्वनिष्ठं स्यात् वृन्दावनस्थानां सङ्कर्षणस्य च भजने अभ- जनेऽपि देवतान्तरभजनेन तेषां नाशः भगवद्भोग्यानां स्त्रीकारेणेतरस्य च अभजने तु सर्वदेवाभजन अतिक्रमः स्यात् अन्यस्य च क्रोधः अतो नित्यत्वावेशासिध्यर्थं बलभद्र- स्य प्रबोधनम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

श्रीमत्पुष्पफलादिभिः सप्रमोः श्रीकृष्णस्य चरणावर्चयाम इति मनोनुतापं युष्माकमहं जानामीति खविज्ञत्वं परममक्तान् श्रीवृन्दावनीयवृक्षान् कटाक्षेण ज्ञापयन्नग्रजमाह—अहोइति। शि- खाभिः स्वस्वशिरोभिरुपायनं तत्तदुपाय पदाम्बुजं नमन्तीति भक्त्याशिरोभिरेव चरणयोस्तत्तदर्पयन्तीत्यर्थः। किमर्थम् आत्मनः तमसोऽपरावस्थाऽपहत्यै येनापराधेन कृतमुत्पादितं तरुजन्म- हताहमाभिरपराध एव कश्चिदकृत यत्कृष्णसान्निधिगमनासमर्थम- स्माकं तरुजन्म विधात्रा कृतमिति तेषामनुरागोत्थं वचनमेवा- न्वयोचद्भगवान् वस्तुतस्तु ब्रह्मादिभिरपि प्रार्थ्यमानत्वाद्वृन्दा- वनीयतरुजन्म नापराधफलमिति ज्ञेयम् ॥ ५ ॥

तत्रस्थान् जङ्गमान् स्तौति—द्वाभ्याम् एतेऽलिनो भ्रमराः अनु- पथं स्वस्वकृतसौरभानुसारित्वात् वने कचिद्रहस्यलीलार्थं गूढं सहचराणामगम्यमपि त्वां न जहति न त्यजन्ति हे अनघेति तत्र गमनेऽप्येषां त्वमघं त्वं न गृह्णासि तस्मादेते भवदीयमुख्या एव मुनिगणा रहस्यलीलामननशीला भ्रमरीभवन्ति तेन भो भ्रमराः! मदतिरहस्यकुञ्जमपि प्रविश्याऽस्मत्सौरभ्यमास्वादयत मासङ्कुचते- तितान् प्रति प्रसादो ध्वनितः ॥ ६ ॥

ते गृहमागताय त्वां ग्रहमागतं सम्मानयितुं सूक्तैः प्रियं कुर्वन्तीति पूर्वेणान्वयः। इयान् सतां निसर्ग इति नृत्यसहर्षा- वलोकनप्रियवचनैर्गृहागतस्य साधोः सम्माननमिति सतां स्वाभा- विको धर्म इत्यर्थः ॥ ७ ॥

एवं तत्तत्कर्तृकसेवया तान् स्तुत्वा श्रीरामकर्तृकप्र- सादेनापि तानेवानुरक्तैरवेक्ष्य सहितान् स्तौति–धन्येयं धरणी अद्येत्यवतारगतस्थूलकालमाक्ष्यमोक्तिवाचकेन पदेन त्वत्स्वरूप- चरणोऽयं स्पर्शोऽपि त्वत्स्पर्शोऽस्या अतिसुखद इति द्योतितम् कुतो धन्येयमिति चेत् धरण्यास्थानां तृणादीनामपि त्वत्सम्प- र्कादेवेत्याह–तृणानि च वीरुधश्च तासां त्वत्पादाभ्यां स्पृक् स्पर्शो यासां तथाभूता यतः द्रुमालताश्च करजैः पुष्पत्रोटनार्थं नखैर- भिमृष्टा स्पृष्टाः यतः नद्यादयश्च सकृपावलोकैः। यद्वा, सन् अयः शुभावहो विभिर्यै पक्षस्तथाभूतैरवलोकैः सहिता यतः किञ्चित्- सुगन्धशीतलां गोपीपरपर्यायां खारिकां वल्लीं वक्षसि कौतुकेन प्रियमाणां विलोकयाद, गोप्यः इयामवल्लयोऽपि भुजयोरन्तरं वक्षस्तेन सहिता यतः श्रीःशोभापि यस्मै स्पृहयति सा या वल्ली श्रीमामपि शोभयतीत्यत एव वक्षसि त्वया धियत इति भावः पक्षे गोप्यो व्रजसुन्दर्य्यो यत्स्पृहा यस्मै भुजान्तरा लक्ष्मीरपि स्पृहयति तथा हि भागवतामृतीयाः कारिकाः—

> "सदा वक्षःस्थलस्थापि वैकुण्ठेशितुरिन्दिरा।
> कृष्णोरःस्पृहयाऽस्यैव रूपं विवृणुते ऽधिकम् ॥
> पौराणिकमुपाख्यानमत्र संक्षिप्य लिख्यते
> श्रीः प्रेक्ष्य कृष्णसौन्दर्यं तत्र लुब्धा ततस्तपः।
> कुर्वन्ती प्राह तां कृष्णः किन्ते तपसि कारणम् ॥
> विजिहीर्षे त्वया गोष्ठे गोपीरूपेति साऽब्रवीत्।
> तद्दुर्लभमिति प्रोक्ता लक्ष्मीस्तं पुनरब्रवीत् ॥
> स्वर्णरेखेव ते नाथ! वस्तुमिच्छामि वक्षसि।
> एवमस्त्विति सा तस्य तद्रूपा वक्षसि स्थिता" ॥

इति ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अहो इत्यतिकौतुके अव्ययम् हे देववर! यत् येन त्वया खेचराणां स्पर्शनीयम् ब्रह्मादिभिरपि वाञ्छितं तरुजन्म कृतम् तस्य ते पादाम्बुजं सुमनःफलादिसमुपादाय नमन्ति। ननु, ब्रह्मा- दिभिः प्रार्थितं वृन्दावने तरुजन्म प्राप्य पुनः किं वाञ्छन्त्यत आह—तमोऽपहत्यै इति। तमः पुनर्भवलक्षणः संसारो निरन्तर- भवत्पादपद्मसन्निकर्षप्रतिबन्धकस्तन्निवृत्तये इत्यर्थः ॥ ५ ॥

हे आदिपुरुष! प्रायः अमी भवदीयेषु भागवतेषु मुख्याः एव अलिनः भृङ्गात्मना स्थिताः यत एते वने गूढमपि आत्मदैवं त्वां न जहति न त्यजन्ति अपि तु! हे अनघ! अखिललोकतीर्थं तव यशोऽनुपदं गायन्तो भजन्ते त्वां भजन्तीत्यर्थः ॥ ६ ॥

हिईसी यतः सताम् इयान् निसर्गः साधूनामीदृशः स्वभावः अतः केचित्सन्त एव मयूरादिरूपेणेह वसन्तीति भावः ॥ ७ ॥

अथ इदं स्वभाकस्मभाया धरणी धन्या त्वत्पादौ स्पृशन्तीति त्वत्पादस्पृष्टतृणवीरुधश्च धन्याः करजैर्नखैरभिमृष्टाः स्पृष्टाः द्रुमलताश्च धन्याः त्वदीये सदयावलोकैर्नद्यादयश्च धन्याः श्रीरपि यत्स्पृहा यत्र स्पृहावती भवति तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्याः ॥ ८ ॥

---

भाषा टीका।

॥ श्रीभगवानुवाच ॥

श्रीभगवान् बोले, कि–हे श्रीबलदेवजी, हे देवताम में श्रेष्ठ! देवन सों पूजित एसे आपके चरणारविन्द कों ये सब व्रज के वृक्ष फूल फल पूजा लेके अपने मस्तक सों प्रणाम करे हैं, काहे सों, कि–जासों ये तरु जन्म भयो है वा अज्ञान के दूर करवे कूं। अथवा और न के तम दूर करवे कूं इन मुमुक्षुन ने तरु जन्म धारयो है, या प्रकरण में आप श्रीकृष्ण जो कछू बलदेवजी के लाई कहैं हैं सो आपही (कृष्ण) को समुझनो चाहिये। आपोल ये वृक्ष मेरे चरणों कूं नमैं है इत्यादि ॥ ५ ॥

हे आदिपुरुष! और ये भ्रमर अखिल लोक के पवित्र करतवारो जो आपको निर्मल यश है ताको क्षण २ में

॥ श्रीशुक उवाच ॥

एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥
रेमे सञ्चारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ ९ ॥
क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः ॥
उपगीयमानचरितः स्रग्वी सङ्कर्षणान्वितः ॥ १० ॥
(१) क्वचिच्च कलहंसानामनुकूजति कूजितम् ॥
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥ ११ ॥
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् ॥
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ १२ ॥

भाषा टीका।

गावे है। प्राय करकें तौ ये सब मुनिगण हैं आपके दासन में कोई मुख्य हैं, ताई सों वन में गुप्त होयबे पै हु अपनो जो दोष रहित स्वामी हैं ताको नाहीं छोडे हैं ॥ ६ ॥

हे स्तुति करवे योग्य! ये वृन्दावन के मोर आनन्द तें आपके आगे नृत्य करें हैं, और ये हरिणी गोपीन की नाई चितवन सों तुमपै प्यार करें हैं, और वन में रहवे वारे ये वृन्दावन के कोकिलानके समूह आपको अपने घर आये जानिके सुन्दर मधुर बोलनि सों सत्कार करें हैं, ये वृन्दावन वासी पशुपक्षी भी धन्य हैं, इतनोई तौ साधुजनन को स्वभाव है, कि–जो बडे पुरुष अपने घर आवें तौ उनको कछू यथा शक्ति सत्कार करनो ॥ ७ ॥

अब तौ ये पृथिवी बडी धन्य हैं, जो आपके चरणकमल को स्पर्श करे है, ऐसेंई तृण छोटे २ बेल बूटी भी आपके चरणन के स्पर्श सों धन्य हैं, और ये लता वृक्ष भी धन्य है जिनको आप हाथनसों नखन सों स्पर्श करो हौ, नदी पर्वत पशु पक्षी भी बडे धन्य हैं, जिनको आप दया पूर्वक देखो हौ, और गोपी भी धन्य हैं कि, जिनको आप वक्षःस्थल सों आलिङ्गन करो हौ, जा वक्षःस्थल की चाहना लक्ष्मीजी को रही है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं श्रीमद्वृन्दावनं प्रति प्रीतः सन्नद्रेः समीपवर्तिसरित्तटेषु पशून् सञ्चारयन् सानुगो गोपैः सह वर्तमानः प्रीतमना रेमे ॥ ९ ॥

तामेव रतिमाह–क्वचिदित्यादित्रयाभिः ॥ १० ॥

बर्हिणं नृत्यन्तमनु अभिनृत्यति बर्हिणमभिमुखो नृत्यतीति वा सखीन् हासयन् ॥ ११–१२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं सनर्मवर्णनादिप्रकारेण वृन्दावनं व्याप्य प्रीतः सन् "कालाध्वभावदेशानाम्" इत्यादिना कर्मत्वम् अद्रेः, श्रीगोवर्द्धनस्य प्रीतत्वप्रीतमनस्त्वयोः सामान्यविशेषाभ्यां भेदः ॥ ९ ॥

प्रीतमनसो रतिं दर्शयन् वर्त्तमानप्रयोगेण साधारणादिनगतामेवाह–क्वचिदित्यादिना। पूर्वं "क्वचिद्गायन्त्वा(?)वन्तः" इत्यादिना बालकानामेव प्राधान्येन तत्तत्क्रीडोक्ता, इदानीं तु प्रीतमनस्त्वेन साक्षात् श्रीकृष्णस्यैवेति विशेषः, क्वचित् कस्मिंश्चित् (पथिसङ्कर्षणान्वित इति वा पाठः) पथि स्रग्वीति पाठे कस्मिंश्चित् प्रदेशे कदाचिदिति वा एवमग्रेऽपि मदेन श्रीवृन्दावनपुष्परसपानजेन श्रीभगवत्सान्निध्यसौभाग्यजेन वा अन्धेषु महामत्तेषु तादृशेष्वलिष्विति गानमाधुर्यमभिप्रेतं सङ्कर्षणशब्दः श्रीभगवता सह तस्यापृथक्तया गानाभिप्रायेण अनुव्रतैः तदेकप्रीतिपरैर्गोपैः अत्र भ्रमराणां स्वजातीयस्य स्वरमात्रस्य गानं श्रीभगवतस्तदनुसारिस्वरस्य तदुचितरागस्य च अनुव्रतानां तु तयोर्गीतवृत्तचरितस्य चेति मिथोगानमेलनं ज्ञेयम् ॥ १० ॥

कलवाक्यैरिति शुकादप्युत्तमजल्पनं बोधयति, एवं बलिवाति च चशब्दो बलिवाति समुच्चिनोति अर्थस्तथैव बर्हिणम् अभिलक्षीकृत्य नृत्यति तदभिमुखः सन् नृत्यतीत्यर्थः। तेषां व्याख्याने उत्तरत्राऽप्यनुराकर्षणीयः तज्जातिनृत्येनैव तन्निर्भयात् सखीन् हासयन् ॥ ११ ॥

पशूनिति श्लेषेण श्रीकृष्णपार्श्वतो दूरं गत्वा निर्बुद्धित्वमुक्तं येन पूर्ववदात्मपश्चादेव तत्स्फुरणात् दूरगत्वज्ञानमपि न जातमिति भावः। मेघेति तद्गर्जितं लक्ष्यते तद्वद्गम्भीरयेति महापुरुषस्वभावत एव ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेव प्रपञ्चयति–क्वचिदित्यादिना। श्रीरामेण साकं प्राकृतेन मदेन मधुपानमदेनान्धेषु भृङ्गेषु गायत्सु सत्सु स्वयं सखीन् हासयन् क्वचिदनुगायति अनुगैः उद्गीयमानं चरितं यस्य सखिभिः सङ्कर्षणेनान्वितो रेमे क्वचित् कलहंसानां कूजितमनुकृत्य कूजति सुकूज

(१) अनुजल्पति जल्पन्तं कलवाक्यैः शुकं क्वचित्। क्वचित्सवल्गु कूजन्तमनुकूजति कोकिलम् ॥ क्वचिदयमधिकः पठ्यते।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा नृत्यन्तं बर्हिणमभिनृत्यति अनु अभिनयं करोतीत्यर्थः । क्वचिन्मेघस्येव गम्भीरया वाचा सङ्केतितनामभिः सखीन् हासयन् दूरगान् पशूनाह्वयति आजुहाव कया गवां गोपानां च मनोज्ञया प्रीत्या तयोपलक्षितो वा ॥ १०-१२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्ण एवम्विधमाहात्म्यं वृन्दावनमवाप्य रेमे इत्यन्वयः अद्रेः पादेषु सरितो नद्यः रोधःसु तीरेषु पशून् सञ्चारयन् ॥ ९ ॥

रतिप्रकारं दर्शयति-क्वचिदिति । अनुव्रतैरनुचरैः सखिभिः सङ्कर्षणेन चान्वितः अनुगतः ॥ १० ॥

हासयन् हासं जनयन् ॥ ११ ॥

नामभिः प्रसूतिवारप्रयुक्तादिलक्षणैः गवां गोपालानां मनोऽन्तःकरणं ह्लापयन्त्या बोधयन्त्या मनोरमया वा ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं स्तनसंवर्णनादिप्रकारेण वृन्दावनं व्याप्य प्रीतः सन् ॥ ९ ॥ १० ॥

एवं प्रथमगोचारणादिप्रसङ्गे साधारणदिनगतां लीलामाह-क्वचिदित्यादिना । बर्हिणमभिलक्षीकृत्य नृत्यति पशूनां दूरगामि-पश्चादेव श्रीकृष्णागमनस्फूर्त्तेः सत्त्वानां मध्ये यो व्याघ्रसिंहयोः भीतः तद्वत्त्वानुरौतिस्म तेषामीषद्भयदर्शनकौतुकार्थमिति भावः ॥ ११—१४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वृन्दावनस्वरूपं निरूप्य तत्रत्यानां च स्वरूपमर्थाद्बलभद्रबोधनं च कृत्वा तादृशे वृन्दावने भगवान् क्रीडां कृतवानित्याह-एवमिति दशभिः । पौगण्डवयसः पुरुषार्थचतुष्टयसाधककालरूपत्वादादौ पुरुषार्थचतुष्टयप्रतिपादनं क्रमेण ततो दशरसोद्भावनेन क्रीडापरमानन्दस्य दशधा रसो लोकेऽनुभूयत इति ब्रह्मानन्दापेक्षया भजनानन्दस्योत्तमत्वप्रतिपादनार्थं तत्र प्रथमं धर्ममाविष्कुर्वन् रतिं कृतवानित्याह-एवंरूपे वृन्दावने कृष्णः पशून् सञ्चारयन् रेमे इति सम्बन्धः, वृन्दावनगुणनिरूपणार्थमेव वचनानामुपयोगादेवमित्यनेनैव सम्बध्यते अतो निरूप्योक्तव्यादिक्रिया नाध्याहर्त्तव्या शाब्दी च सङ्गतिरेवमित्यत्रैव योजनीया यत्र रन्तुं मनो दध्रे यत्र च उवाच तत्र रेमे अन्यानि च कृतवानिति महावाक्ये सर्वेषां सम्बन्धः, यदा पुनस्तत्तदभिमानिदेवताभिः सह रतिं कर्तुमारम्भं कृतवांस्तदा लक्ष्मीः स्वत एव समागता अतो रसानामनुक्तलिङ्गमेवेति अनुभावा उद्दीपनविभावाः व्यभिचारिणश्च निरूप्यन्ते आलम्बनं तु लक्ष्मीरेव नायकोत्कर्षमाह-कृष्ण इति । सदानन्दोऽपि पुरुषोत्तमः मनश्च करणं तथापि दोषनिवृत्तिपूर्वकं गुणा वक्तव्याः तदाह—प्रीतमना इति प्रीतं नितुष्टं सन्तुष्टं मनो यस्य पशून् सञ्चारयन् इति धर्मः, सम्यक्चारणं देशविशेषे गह्वरादिवने वक्तव्ये स्वरसं बाध्येतेति अन्योऽन्यरुपभोगार्थं देशविशेषान् निर्दिशति अद्रेः सरिद्रोधःस्विति पर्वतसम्बन्धिन्यो याः नद्यः सरितस्तासां रोधःसु कूलेषु तत्र हि हरिततृणानि भवन्ति प्ररूढानि च पर्वते स्थित्वा वा अधस्तात् स्थित्वा वा तासामन्यत्र गमनशङ्काभावाच्चारणमेव रमणं सम्भवति अत एव सम्यक्चारणं धर्मरतौ रक्षायां स्वाभिनिवेशे धर्मरमणयोर्हीनता स्यादिति तद्व्यावृत्त्यर्थमाह-सानुग इति । अनुपश्चादनुगच्छन्तीत्यनुगाः सेवकाः तैः सहितः ॥ ९ ॥

एवं धर्मोद्भावनेन क्रीडामुक्त्वा अर्थोद्भावनेनापि क्रीडामाह, क्वचिदिति । मदान्धालिषु गायत्सु क्वचिद्भगवानपि गायति अनुव्रतैः निजभक्तैरुपगीयमानचरितश्च सखिसङ्कर्षणाभ्यां चान्वितः "यदा खलु वै पुरुषः श्रियमश्नुते वीणाऽस्मै वाद्यते" इति श्रुतेः । वीणाऽनुकरणस्थानीया भ्रमरा भवन्ति अर्थभोगेनैव गीतमपि गायति अन्यथा तद्रसोद्रेको न ज्ञापितः स्यात् सर्वतश्च स एव स्तूयमानोऽपि भवति परिकरयुक्तश्च परिकरो द्विविध इति सखिसङ्कर्षणौ निरूपितौ स्वसम्बन्धिनः कुलसम्बन्धिनश्चेति बन्धुभिर्यो न भुज्यत इत्यर्थं तेषां सहभाव आवश्यकः समीपे गानं स्तोत्रं चार्थभोग एव मुनीनां भ्रमरत्वनिरूपणात् समीपे श्रोष्यन्त्यग्रे न भविष्यतीति मदान्धा निरूपिताः मदोऽत्र भगवत्सान्निध्यानन्दः भक्तिरसोन्मादो वा वृन्दावने पुष्पेषु मकरन्दक्षरणसमर्पितेषु भक्तिरूप एवेति अनुव्रतं येषामिति तेषामपि स्वसाम्यकरणं सर्वं सखायः सङ्कर्षणश्च सम्पगन्धर्वः तेषामप्यर्थभोगः सम्यक् सम्पाद्यत इति एवं वृन्दावने श्रीमान् कृष्णः प्रीतमना इति पञ्च पदानि सर्वत्रानुवर्त्तन्ते ॥ १० ॥

एवमर्थलीलामुक्त्वा कामलीलामाह-क्वचिदिति । कलहंसानां कूजितमनुकूजति कामे हि द्वयं कर्त्तव्यं कूजितं रसोद्गमनार्थं वधाश्च रसार्थं तत्र मयूरस्य मयूर्या सह सम्बन्धस्येव मनस्य गात्रविक्षेपे सर्वगतो रसः एकीभूय नेत्राभ्यां निर्गतो मयूर्या मुखे प्रविशत्यूर्ध्वचरो ( रेतो ) निर्गच्छति ध्वानद्वारा च अन्ये सर्वे कामप्राकृता एव रसाः अत एव विचित्रं तत्र कार्यमुत्पद्यते शब्दो मनःपूर्वक इति रसारसयोर्भेदकस्य हंसस्य मानसैकशरणस्य तादृशं भवति कूजितम् अत एव सर्वविलक्षणत्वं हंसे वक्तुं कलहंस उक्तः, स हि कलानां हंसः बहूनामेकविधप्रतिपादकत्वे तदर्थनिष्णातत्वं भवति भगवांस्तु सर्वेषामेव कूजितं रसावान्तरभेदाविर्भावार्थमनुकूजति अभितो नृत्यन्तं बर्हिणं नृत्यति यदि मयूरो मयूर्या सह रसेन नृत्यति अन्यथा मेघादिदर्शनेन स्वभावतो वा यदि नृत्यति तदापि भगवान् नृत्यति रसाभासभावाभासनिरूपणार्थम्, अन्यथा रसः पुष्टो न भवेत् तदाह-हासयन् क्वचिदिति । कदाचिद्बर्हिणं हासयन् नृत्यति बाला बर्हिणं हसन्ति नायं सम्यक् नृत्यतीति सर्वदैवमिति निषेधार्थमाह—पुनः क्वचिदिति ॥ ११ ॥

मोक्षलीलामाह-मेघगम्भीरयेति वाचा दूरगान् पशून् नामभिर्भगवान् क्वचिदाह्वयतीति सम्बन्धः । भगवत्सायुज्यं मुक्तिश्च भगवद्दत्तैव भवति सर्वशास्त्रनिरूपितानां साधनानां भगवतितत्कर्मसम्बन्धजनकानां ततः प्रतिफलितानां भगवत्कृतानामेव साधकत्वमिति सिद्धान्तः—

"यस्त्वनुग्रहमर्पयते काले स्वबुद्धया भद्रसन्धन ! ।
येनोपशान्तिर्भूतानाम्" ॥

चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥
अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः ॥ १३ ॥
क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् ॥
स्वयं विश्रमयत्यार्यं पादसम्वाहनादिभिः ॥ १४ ॥
नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ॥
गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥ १५ ॥
क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

इत्यत्र विशेषतो निरूपणात् अतो भगवन्नामस्मरणं कीर्त्तनं च भगवता नामग्रहणार्थं तदपि ग्रहणं सर्वेषां तापनिवर्त्तकं कृपया तदपि कृपया अवसरे यदा ते दूरङ्गता भवन्ति यथा ते साक्षात्कृतस्य भगवतो नाम न गृह्णन्ति तथा भगवानपि दूरतानेवाह्वयति पशवः सर्वथा गत्यन्तररहिताः अतो बुद्धिर-हिताश्च तदपि नामग्रहणं प्रीत्यैव अन्यथाऽन्यविषयनिवारकत्वं न सम्भवति प्रत्यक्षापेक्षया शब्दस्य दुर्बलत्वात् सापि चेद्वा-यदलौकिकी न भवेत् तदाऽलौकिकं फलं न प्रयच्छेदिति ज्ञापयितुं गोगोपालमनोज्ञमेवेत्युक्तं गवां गोपालानां च मनोज्ञा गवति याथी गोपाला गुरव इति गावोऽधिकारिणय इव उभयेषां मनोज्ञता पूर्वं ततः फलानुभवात् इमामेव लीलां भगवान् मुक्तौ करोति केवलं वाचा समाह्वाने स्वाधिकारो न भाति इति न निवर्त्तेत अतो भिन्नभिन्नाधिकारनिरूपणार्थं नामभिरिति बहुवचनं तदवा-न्तरसाधनपरिग्रहार्थं च प्रमथत एव पशवस्ततोऽपि दूरगाः ते चेद्भगवता ततो न मुच्यन्ते अमुक्ता एव तिष्ठेयुः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवमिति स्पष्टम् । यद्वा, इत्थमग्रजं परितोष्य गोप्योऽन्त-र्मनभुजयोरिति निजोक्त्यैवोद्दीप्तकन्दर्पस्तत्सङ्ग एव गाः सखींश्च नियुज्य भोः श्रीमदार्य्य ! त्वामहमत्र सुबलेन सार्द्धं गोवर्द्धनकन्दरारोपसि विश्रम्यागन्तास्मि त्वमग्रे कालिन्दीरो-धस्सु तावद्विहरेत्युक्त्वा ततो वियुज्य पौगण्डेऽपि कैशोराविर्भावाद्वहसि व्रजबालाभिः सार्द्धं रेमे इत्याह—एवमग्रजं स्तुत्वा तद्द्वारैव पशून् वृन्दावनं सञ्चारयन् अद्रेः सरितो मानस-गङ्गाया रोधस्सु रेमे इत्यन्वयः । श्रीमती व्रजयोषिन्मुख्या सैव प्रीता प्रेमवती यस्मिन् सः कुलालकर्तृको घट इतिवत् प्रीते-स्त्यस्य विशेषत्वविवक्षया परनिपातः अत एव प्रीतमनाः अनु-गाभिः सखीभिः सहितः व्याख्यानस्यास्य रहस्यत्वाद्व्याख्यावरकं रत्नस्य कनकसम्पुटमिव व्याख्यान्तरमवतारितं विनिवारित तद्यथा श्रीमन्तो बलदेवाद्याः प्रीता यस्मिन् सः सानुगः अनुगैः सहितः अभवत् समानम् ॥ ९—१० ॥

बर्हिणाम् अभिलक्षीकृत्य नृत्यति सखीन् हासयन् बर्हिणामेव रसोल्लासयन् ॥ ११ ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं श्रीमद्वृन्दावनं प्रति प्रीतः सन् अद्रेः समीपम् इति शेषः सरिद्रोधःसु यमुनातटेषु च पशून् सञ्चारयन् सानुगः प्रीतमनाः रेमे ॥ ९ ॥

तदेव प्रपञ्चयति—क्वचिदित्यादिभिः ॥ १० ॥

हासयन् वयस्यानिति शेषः ॥ ११—१२ ॥

### भाषा टीका ।

#### श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—या प्रकार शोभायारो वृन्दावन है जामे प्रसन्न मन वारे होयके श्रीकृष्णचन्द्र पर्वत के समीप यमुनाजी के तीरपै गऊन को चरावत ग्वालबालन सहित रमण करत भये ॥ ९ ॥

काहू जगे जामें मदान्ध भौरा गुञ्जार करें हैं तब आप भी गायवे लगे हैं, और सब सखा आपको गावें हैं, आप वनमाला पहिरें है बलदेवजी को साथलियें हैं ॥ १० ॥

कोई समें राजहंसनको कूजनो सुनके पीछे आपभी कूजें हैं और मोरकूं नाचते देखके सखानके हसायवे को आपभी कभूं वाईकी तरियां नाचवे लगजाय हैं ॥ ११ ॥

और कभूं मेघ सदृश गम्भीर वाणीसों दूर चरबे वारी गायनकों उनके नाम लै लैके बड़ी प्रीतिसों बुलावें हैं, जा वाणीकूं सुनके गऊनको और ग्वालबालनको मन हरयो जाय है ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चकोरादीननुकृत्य रौति कदाचित्त सत्त्वानां मध्ये व्याघ्र-सिंहयोस्ताभ्यां भीतवद्भवति सत्त्वेषु पलायमानेषु पलायत इत्यर्थः । तयोः सत्त्वानां बलोद्रेकायां भीतवद्भवतीति वा ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आर्यमग्रजम्, विश्रमयति विगतश्रमं करोति ॥ १४ ॥
मिथो नृत्यादीन् कुर्वतो गोपान् प्रशशंसतुः ॥ १५—१६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कश्चिदित्यनुवर्त्तत एव चकोरश्चन्द्रिकापायी क्रोञ्चश्चिश्चाटकन्द-भक्षी चक्राह्वचक्रवाकः भरद्वाज एव भारद्वाजः स्वार्थेऽण् व्याघ्रचा-टाख्यः पक्षी चकोरादीनां कश्चित् कंचिदनुकृत्य रौति सर्वानेव युग-पदनुकृत्य रौति सर्वशक्तिमत्त्वात् इत्यैश्वर्यं तत्रापि पूर्ववद्रोऽयं भीतवदिति क्रीडाकौतुकेन वतिप्रत्ययस्तयोर्हिंस्रत्वाभावेनापि वस्तुतस्ताभ्यां भयाभावात् श्मेति प्रसिद्धमेवेदं नात्र संशयः कार्य इत्यर्थः । अत्र तेषामुत्तरपक्षे व्याघ्रादिबलातिशयानां सम्बन्धे भीतायत इत्यर्थः । यद्वा, सत्त्वानां मध्ये यो व्याघ्र-सिंहयोः सम्बन्धे भीतः तद्वद्वानुरौति तेषामीषद्भयदर्शनकौतु-कार्थमिति भावः ॥ १३ ॥

आदिशब्दाद्बीजनादीनि ॥ १४ ॥

नृत्यत इति क्वापि प्रशशंसतुः वल्गत उत्प्लुत्योत्प्लुत्य गति-विशेषं कुर्वतः मिथो अन्योन्यमासक्त्येत्यर्थः । अन्यत्तैः । यद्वा, तौ क्वापि नृत्यतः क्वापि गायत इत्येवं क्वापीति सर्वैरपि योज्यं किञ्च क्वापि मिथो गृहीतहस्तौ क्वापि हसन्तौ भवतः । यद्वा, पदद्वयमिदं विशेषणत्वेन सर्वत्रैव योज्यं क्वापि गोपालान् हसन्तौ अहो इमे गानेन गन्धर्वगणतिरस्कारिणो नृत्येन विद्याधरगणविडम्बका युद्धेन त्रिलोकीजित्वरा इत्यादिपरि-हासं कुर्वन्तौ प्रशशंसतुरेव तत्त्वतो माहात्म्यविशेषख्याप-नात् ॥ १५ ॥

उपसंहरिष्यन् विश्रामक्रीडां वदन् गोपानां सौभाग्यभरं वर्णयति, क्वचिदिति त्रिभिः । पल्लवेत्युपलक्षणं कोमलनवदलको-रकपुष्पाणां तल्पेषु बहुत्वं पृथक् पृथक् पञ्चषैर्मिलित्वा निर्मितत्वेन बाहुल्यात् ततश्च बहुतरेष्वपि तेषु तेषां प्रीत्यै तत्तदलक्षितहस्तत्वप्रेमोद्बोधितेन निजशक्तिविशेषेण बहुरूप-तयैव शेत इति विज्ञापयति—एवम् ईशचेष्टित इति वक्ष्यमाणमे-तयैव शेत इति विज्ञापयति । नियुद्धं तैरेव सह बाहुयुद्धं तेन श्रमः श्रीगण्डादिविषयकमौक्तिकसुन्दरप्रस्वेदकणिकोदयादिकरः तेन कर्शितो दुर्बल इव अनेन सखीनामपि तादृशं बलवत्त्वं सूचितम्, तथा चागमे "गोपैः समानगुणशीलवयोविलासवेषैः" इति तदेवमपि तेषां स्वयमनुस्मरणादौ यत्प्रवृत्तिस्तत्रेदं पश्यामः सर्वस्य व्रजस्य तेनापि गुणेन श्रीकृष्णैकसुखतार्थ-लीलाशक्तिरेव तेषामुद्यमं स्तम्भयतीति गोपेति ते किञ्चिज्ज्येष्ठा ज्ञेयाः तत्रोपबर्हणरचनं च तत्सुखलाभायैव तेन तत्कृतं किं वा रचितस्यापि तेनैव तदर्थं त्यागो ज्ञेयः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपबर्हणम् उपधानम् । आर्यम् बलभद्रम् सम्वाहनं लालनम् ॥ १४—१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कश्चिच्चकोरादीननुसृत्य रौति रुराव सत्त्वानां मृगाणां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति ॥ १३ ॥

कश्चिद्गोपानामुत्सङ्गोऽङ्क एवोपबर्हणमुपधानं यस्य तं क्रीडा-परिश्रान्तमार्यमग्रजं स्वयं पादपीडनादिभिर्विश्रमयति ॥ १४ ॥

वल्गतउत्प्लुवतः नृत्यादीन् कुर्वतो गोपान् गृहीतौ हस्तौ याभ्यां तथाभूतौ प्रशशंसतुः ॥ १५ ॥

कश्चिन्नियुद्धेन बाहुयुद्धेन यः श्रमस्तेन कर्शितः ग्लानः वृक्षमूलाश्रयः पल्लवतल्पेषु गोपानां उत्सङ्गमुपधानं यस्य तथाभूतः शेते शिश्ये ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्याघ्रशार्दूलसिंहयोः सकाशात् भीतवत् स्वयमपि भीतो भवति ॥ १३ ॥

गोपस्य उत्सङ्गोऽङ्क एव उपबर्हणं शिरःपीठं यस्य स तथा तम् आर्यं ज्येष्ठं पादसम्वाहनादिभिः विश्रामयति, क्रीडा-प्राप्तक्लेशं नाशयति ॥ १४ ॥

रामकृष्णौ नर्त्तनादिकुर्वाणान् गोपालान् नृत्यादिविशेष-विषयेषु प्रशशंसतुः स्खलनादिविषये हसन्तौ वल्गतः उत्प्लवतः ॥ १५ ॥

नियुद्धं बाहुवल्लीमहयाविद्वन्द्वयुद्धम् ॥ १६—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तल्पेष्विति बहुत्वं तत्र तत्रानेकेन प्रकारेणेति द्योतकं महात्मनः महात्मानः परमभाग्यवन्तः "सुपां सुपो भवन्ति" इत्युपसङ्ख्यानेन ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पुरुषार्थचतुष्टयलीलामुपपाद्य दशरसप्रकारेण भगवतो लीलां वदन् प्रथमं षड्रसलीलामाह—चकोरेति । चकोरा हि चन्द्र-किरणभोक्तारोऽलौकिकभोगाः न ह्यन्येन चन्द्रकिरणा भूमौ स्थिता भोक्तुं शक्यन्तेऽत एव परं भोक्तारः सूर्यकिरणा इव अन्यथा ततः शैत्यादिकं न स्यात् तथैव सर्वे पुरुषाः स्त्रीभि-र्भुज्यन्ते तद्दास्यं चानुभवन्ति तथैव लोकप्रतीतिः तद्वदयं भग-वान् रसानुभवं करोतीति ज्ञापयितुं शृङ्गाररसे चकोरवद्भगवतो वाग्व्यापारो निरूप्यते क्रौञ्चो वीरे, चक्रवाकः करुणायां, स हि वियुक्तश्चक्रपदे आवर्त्तनेन मारणमभिप्रेतमिति तेन आह्वा आह्वानं यस्येति तस्याऽवश्यं करुणा युक्तैव भारद्वाजोऽद्भुते कर्मस्व-निवामकत्वात् भारद्वाज इत्याख्या यस्य स हि द्विजन्मा तथा-मसम्बन्धख्यापनमद्भुतरसेऽनुगुणं भवति बर्ही हास्ये तस्य तथात्वं पूर्वमेव निरूपितं एते पञ्चविधा नात्यन्तं विरुद्धा इत्येकीकृत्य निरूपिताः भयानकरसस्तु सर्वोपमर्द्दक इति पृथक् निरूपयति,

पादसम्वाहनं चक्रुः केचित्तस्य महात्मनः ।
अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १७ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सत्त्वानां मध्ये व्याघ्रसिंहयोर्भीतवच्चानुरौतीति एवं रसाविर्भावे प्रमायां प्रसिद्धमिति क्रमेणाह, भयं द्विविधं स्वरूपनाशात् अभिमानादिधर्मनाशाद्वा तत्र स्वरूपे व्याघ्रः अभिमानादिधर्मे सिंहः बहुप्रकारं च भयं प्रतीकारासमर्थानां सम्भावनायामप्यन्यथा अन्येषां चान्यथेति तत्र सत्त्वानि शशादीनि प्रतीकारसम्भावना-रहितानि भये परमा काष्ठा सत्त्वसम्बन्धित्ववद्या रसाभिनये चेष्टापेक्षया वचनमतिसुन्दरमिति तदेव निरूपितम् ॥ १३ ॥

बीभत्सरसलीलामाह—कश्चित्क्रीडापरिश्रान्तमिति । आर्यं बल-भद्रं स्वयं कश्चिद्विश्रमयति विगतश्रमयुक्तं करोति पाद-सम्वाहनादिभिः पादे हि चलतः श्रमो भवति मङ्गमर्दनं च सम्वाहनादिकं च शब्दादेनोच्यते हीना-नुकरणं च अत्याहरणादिकं चादिशब्देनोच्यते हीना-तमसस्य बीभत्सो भवति भक्तिमतामेव स बीभत्स-भाव उत्तमस्य बीभत्सो भवति भक्तिमतामेव स बीभत्स-इति प्रतीतेः अत्यन्तानुचितप्रतीतिरन्येषामेवेति यथा स्व(कथ)पुटगत-मपि कव्यमव्यग्रमत्तीति न पिशाचानां तादृशदर्शनेन बीभत्सरस-इति किन्त्वस्मदादीनामेव तथेदमपि भक्तानाम् एते हि सर्वे रसा भगवज्जने तत्तदधिकारनिरूपकाः सर्वरसाविष्टा अपि भगवति सायुज्यं प्राप्नुवन्तीति पादसम्वाहनादिकरणे हेतुः क्रीडापरिश्रान्तमिति क्रीडा मल्लक्रीडा भगवतैव सह बलिष्ठेन सह कृतश्रमो बलाधिक्यजनको भवति परं प्रथमं पीडां प्राप्नोति तत्प्रतीकारं नान्यो जानाति भग-वद्रूपेणैवालिमात्रे व्यापृतत्वात् तदाह—परितः श्रान्तमिति आति-विह्वलतासूचनार्थं गोपस्यैव कस्यचिदुत्सङ्गे उपबर्हणं यस्य अत एव विकलत्वात् स्वामिकृतमुपचारमपि सहते आर्यत्वादेव भगवतस्तथा करणम् ॥ १४ ॥

रौद्ररसमाह— नृत्यत इति । मल्लानामिव हि रसो रौद्रः स चान्यत्रोत्पन्नोऽपि भगवता उपनिबध्यत इति भगवता रसयुक्तलीला कायवाङ्मनोभिर्यद्युक्तमयुक्तं पीडकं च तत्— चतुर्विधा मल्ललीला स्तूयते हरिणा मुदा साधारण-त्वाद्द्वयोरुभयोर्ग्रहणं उभावुभौ मल्लयुद्धे अन्यत्र बहवः तत्र कायिकं नृत्यं गानं वाचिकं वल्गनम्मानसं स्वप्रौढिख्याप-कत्वात् मिथश्च युयुधत इति पीडारूपा क्रिया कायिक्येव कांश्चि-त्प्रशस्तौ कांश्चित्प्रशंसतुः गृहीतहस्ताविति न पक्षपातेन कस्य-चित्क्रियाभिनिवेशः केनचित्कर्तव्य इति ज्ञापनार्थः, साऽपि लीला लोकप्रसिद्धा सुखाख्यापिका हसन्ताविति प्रथमं सन्तोषः पश्चात् प्रशंसतुरिति वा ॥ १५ ॥

शान्तरसलीलामाह—कश्चित्पल्लवतल्पेष्विति । शयानो हि शान्त इव भवति नियुद्धं बाहुयुद्धं तत्र यः श्रमः स कर्षितो येन जित-श्रम इत्यर्थः । शान्तरसः प्रत्येकपर्यवसायीति निरूपयन् भगवान-नेकरूपः सर्वत्र मूलदेशेषु सर्वैरेव गोपालैरहमहमिकतयास्तृता बहव एव तल्पास्तेषां सर्वेषामेव युगपत्सौख्यसिद्ध्यर्थं सर्वेष्वेव तल्पेषु भगवान् शयानो जातः तदाह बहुवचनम् । ननु, तथापि भगवान् किमिति तत्र शयनं कृतवानित्याह—वृक्षमूला-श्रय इति । वृक्षस्य मूलमेवाश्रयत्वेन येषां ते वृक्षमूलाः परमहंसाः नानाश्रयेन अनन्यत्र तत्रातीन्द्रियत्वेन स्थितान् परमर्षीन् कृता-र्थीकर्तुं तथा करोतीत्यर्थः । लोकानामेव प्रतीतिस्तल्पे शेत इति वस्तुतस्तानि योगिनामन्तःकरणान्यतस्तेषु शेते गोपालानामु-त्सङ्ग एवोपबर्हणं यस्येति तेषु भगवतः प्राधान्यख्यापनम् ऋषि-त्वप्राधान्यख्यापनमिति ज्ञापयति, ते हि वैश्याः अतः स्वधर्म(ख्या)-ख्यापकमुत्सङ्गपदम् उपबर्हणं शिरस उपधानम् ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किन्तु सत्त्वानां प्राणिनां मध्ये व्याघ्रसिंहयोः शब्देन भीतवद् भवति सखिषु पलायमानेषु स्वयमपि पलायते वस्तु-तस्तु स्वस्य स्वाभाविकशौर्येण भयाभावो वतिप्रत्ययेनोक्तः ॥ १३ ॥

उपबर्हणं शीर्षोपधानम् ॥ १४ ॥

हसन्तौ कृष्णरामौ नृत्यादीन् कुर्वतो गोपालान् प्रशशं-सतुः ॥ १५—१८

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कश्चिच्चकोरादीन् अनुरौति तदनुकरणशब्दान् करोति कश्चि-च्च सत्त्वानां मृगादीनां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भ-वति ॥ १३ ॥

विश्रमयति विगतश्रमं करोति ॥ १४—१६ ॥

---

### भाषाटीका

चकई चकोर चकवा भडरिया और मोर इन कीसी बोली बोले हैं, कभऊ व्याघ्र सिंह ते डर के अब और जन्तु भाजे हैं तब आपहू डरप के भाजवे लगे हैं ॥ १३ ॥

काऊ समैं जब खेलत २ हार जाय हैं, तब काहू गोप की गोदमें अपनो माथो धरके बलदेवजी पौढें हैं तब स्वयं आप श्रीकृष्ण दाऊके पांय दाबिकें पङ्खा करकें श्रमदूर करें हैं ॥ १४ ॥

कभऊ ग्वाल बाल नाचे हैं गावें हैं कूदें हैं कुस्ती करैं हैं तब दोऊ भैया उनके हाथ पकरि कें हँसते २ उन-की प्रशंसा करें हैं ॥ १५ ॥

काहू समैं परस्पर ग्वालनसों भयो जो युद्ध वा कुस्ती की थकाई सो काहू वृक्ष की जड को आश्रय लेकें काहू गोपकी गोद को तकिया कर श्रीकृष्ण सोवें हैं ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यजनैः पल्लवादिनिर्मितैः ॥ १७—१९ ॥

अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ।
गायन्ति स्म महाराज ! स्नेहक्लिन्नधियः शनैः ॥ १८ ॥
एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ।
रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥ १९ ॥
श्रीदामा नाम गोपालो रामकेशवयोः सखा ।
(१)सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ २० ॥

॥ श्रीधरस्वामिकृतभावार्थदीपिका ।

ईशचेष्टित इति निगूढस्वभावत्वेऽप्यन्तरान्तरा ईशस्यैव चेष्टितानि दृश्यन्तेऽस्मिन्नसः ॥ १९ ॥

ईशचेष्टितत्वमेव दर्शयितुमाह—श्रीदामेति । स्तोककृष्णः कश्चित् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

केचिदिति, बहुत्वं क्रमेण परिवृत्त्या श्रीमत्पादाब्जयोर्बहुभिः सम्वाहनात् किं वा बहुलशय्यासु प्रत्येकं श्रिचतुरतया तत्र प्रवृत्तेरभिप्रायेण महात्मन इति छान्दसं महात्मानः परमभाग्यवन्त इत्यर्थः । यद्वा, तस्य महागुणगणाश्चर्यरूपस्य हतः ततस्तादृशतत्सेवान्तरायरूपः पाप्मा यैः इत्यात्मानमधिक्षिपति तेषां नित्यतादृशत्वेऽपि अपमात्माऽपहतपाप्मेति नत्वप्रयोगः एवमिदं पदं पूर्वेणापरेणाऽपि योज्यं सम्यक् मन्दमधुरचालनादिमुद्रया वीजयन् ॥ १७ ॥

तस्याऽवसरस्य योग्यानि तस्य श्रीभगवतोऽपि सदृशानि वा गीतानीति शेषः । विशेषमप्याह, मनोज्ञानि चित्ताकर्षणानि विचित्राद्भुतस्वरतालादिमयत्वात् शनैरिति विश्रामावसरयोग्यत्वात्सुसमगानमुद्रात्वाच्च स्नेहक्लिन्नधीत्वमपि तेषां किंगानस्वभावत्प्राकट्यविशेषाभिप्रायेण यद्वा, पदद्वयस्यास्य सर्वान्ते निर्देशात् पूर्वश्लोके वाक्यद्वयेनापि सम्बन्धो द्रष्टव्यः ॥ १८ ॥

अनुक्तामप्यन्यां गोपलीलामुद्दिशन् तादृशलीलायाश्च तदनिर्वचनं प्रतिपादयन्नुपसंहरति—एवमिति । स्वाविर्भावान्तरे रमालालितपादपल्लवोऽपि एवं वृन्दावनविहारप्रकारेण रेमे रतिं प्राप तदेवमत्र सुखे तादृशसुखस्याप्यभावात् स्वचित्तः किं कुर्वन् चरितैर्नन्दस्यात्मज इवात्र इत्यादिरूपैर्लौकिकैर्लौकिकं गोपात्मजत्वं विडम्बयन् हीनोपमारूपं कुर्वन् अलौकिकं गोपात्मजत्वमात्मनि दर्शयन्नित्यर्थः । ननु, श्रीभगवतः कथमात्मजत्वं तत्राह, स्वे ये श्रीनन्दयशोदादयः पित्रादिरूपास्तेषां मायया कृपया वात्सल्यवशतयेत्यर्थः । अत एव नितरां गूढा सर्वेषामप्यगम्या आत्मगतिर्महाप्रणयमयनिजमाधुरीविशेषो यस्य अत एव कैश्चिद्दुष्प्राप्यैर्बन्धुभिः समं कश्चिद् ग्राम्यो बन्धुरिवेति ग्राम्यजवत् सख्येऽपि तादृशोपमत्वमिति भावः । ननु, तर्हि सर्वशक्तिमानं श्रीभगवत्त्वप्रकटनं तत्र कथं तत्राह, ईशः सर्वैश्वर्ययुक्तं चेष्टितं यस्य तल्लीलाशक्तिरेव तादृशी सती श्रीभगवदनुसंहितापि सर्वं सम्पादयतीत्यर्थः ॥ १९ ॥

एवं प्रथमकिलक्रीडयाऽपवित्र्यश्रीदामादयुपलक्ष्याऽधुना कदाचिन्निजप्रियजनप्रीत्यै गोपालेन किञ्चिदैश्वर्यमपि साक्षात् प्रकटितमिति प्रसङ्गादाह—श्रीदामेत्यादिना । तत्र श्रीरामस्य सखेति निर्देशस्तद्युक्ते तस्यैव प्राधान्यात् सुबलाद्याश्च सखायः श्रीदाम्नः प्राङ्निर्देशः सखिषु मुख्यत्वेन व्रजे तस्मिन्नन्यस्य केवलकृष्णनाम्ना प्रचाराभावात् स्तोककृष्ण इति चतुरक्षरमेव नाम ज्ञेयं तत्र चैवमेव लभ्यते बालक्यात् कृष्णमनुगच्छन्नेव वर्तते तस्मान्नाम च तमनुगामित्यतत्प्रणयविशेषाय सम्पन्नमित इति विचार्य सत्यमुल्लसता तादृशनामप्रकाशितमिति प्रेम्णेति न तु तालफललोभेन न च दुष्टवधार्थं किं तु प्रियजनप्रीतिविशेषार्थं किञ्चिदैश्वर्यप्रार्थनव्याजप्रेमस्वभावेनेत्र । यद्वा, स्वव्याजेन श्रीकृष्णाय मिलित्वा तालफलभोजनसम्पादनेच्छामयेनेत्यर्थः । अत्र च सख्यमयप्रेम्णामितरेतरस्य च साजात्येनैव भवतीति मिथः प्रेमवादिप्रकारमयमेव यथोक्तं तैः "अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेदघवद्विनङ्क्ष्यति" इति वक्ष्यते चानन्तरं रामसमिति ततोऽनुमनीषया बहुप्रयोजनेनाप्यमावत् वीररसस्वाभाविकसख्यमयप्रेमैवेदमिति ज्ञेयम् ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निगूढा आत्मगतिः स्वाविर्भावज्ञानं सर्वेषाम् ॥ १९—४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा तस्य महात्मनः कृष्णस्य पादसम्वाहनं कश्चित्कुर्वन्नपरेऽपहतपाप्मानः तत्सेवाभावादिति भावः । तत्पल्लवानि मितैर्व्यजनैः सम्यगवीजयन् ॥ १७ ॥

अन्ये तु हे महाराज ! प्रेमार्द्रचित्ताः हृदयङ्गमानि तदनुरूपाणि चेष्टितानि जगुः ॥ १८ ॥

इत्थं निगूढा आत्मगतिः स्वात्मानुभूतिर्येन तथाभूतः स्वसङ्कल्पेन चरितैश्चेष्टितैः गोपात्मजत्वमनुकुर्वन् रमया लालितौ पादौ एव पल्लवौ यस्य तथाभूतोऽपि ग्राम्यैः प्राकृतैः सह तद्वद्रेमे कथम्भूतः मध्ये मध्ये ईश्वरासाधारणानि चेष्टितानि यस्य तथाभूतः ॥ १९ ॥

तदेव दर्शयति—श्रीदामेत्यादिना । श्रीदामा सुबलादयश्च इदं वक्ष्यमाणमब्रुवन् ॥ २० ॥

(१) सुबलाद्योककृष्णाद्यान् गोपान्प्रेम्णेदमब्रवीत् । इति विज० पा० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महात्मनः कृष्णस्य मनोहराणि श्लोकेन क्लिन्ना आर्द्रा धियो येषां ते तथा ॥ १८ ॥

बाललीलामुपसंहरति–एवमिति । स्वमायया स्वेच्छयैव निगूढात्मगतिः प्रच्छन्नस्वरूपानुभवः अत्याऽपेक्षयेति शेषः । प्राकृतैः मूर्खजनैः किमर्थमेवं कृतमत्राह, प्राकृतवादिति धर्म इति शेषः ॥ १९ ॥

* शुकः परीक्षितमाह—धन्येयमिति ॥ कृष्णपादस्पृष्टा, तृणवीरुध इति । तस्य कृष्णस्य पादौ स्पृशन्तीति तत्पादस्पृशः करजैर्नखैः अभिमृष्टा अभितः श्रिताः लूना इत्यर्थः । नद्यादयोदयासहितैरवलोकैरवलोकिताः खगाः श्रीमद्भुजयोरन्तरं वक्षःस्थलं स्पृहयतीति यत्स्पृहा तस्मिन् भुजयोरन्तरेण मध्यम आलिङ्गिता इति यस्मादियं पृथिवी तद्गताः पदार्थाश्च धन्या इत्यर्थः ॥ ० ॥

यदैवकार्यार्थमवतीर्णा हरिणा तच्छेषं वक्तुमुपक्रमते, श्रीदामेति । सुबलश्चार्जुनश्च कृष्णश्चाद्या येषां ते तथा तान् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्य महागुणस्यारस्येति हतः तादृशतत्सखान्तराय-रूपः पाप्मा यैरित्यात्मानमभिक्षिपति तेषां नित्यतादृशत्वेऽप्ययमात्माऽपहतपाप्मेतिवत्प्रयोगः ॥ १७ ॥

तदनुरूपाणि तदवसरार्हाणि ॥ १८—१९ ॥

एवं गोचारणलीलासामान्यप्रसङ्गं कांश्चित्क्रमप्याह—श्रीदामेति । स्तोककृष्ण इत्येव नाम न तु स्तोकेति विशेषणं तदग्रे तन्नामकरणानर्हत्वात् प्रेम्णा प्रियजनोचितप्रार्थनामयेन स्वव्याजेन तयोरेव तादृशभोजनेच्छामयेन च ॥ २०—२४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भक्तिरसमाह—पादसंवाहनं चक्रुरिति । क्वचिदिति तुर्यभावस्येति शान्तरसाभिमतकर्तुः सर्वरसास्वादकस्य वा महात्मन इति सोऽन्याधिकस्य रसान्तरमप्युत्पादयितुं समर्थस्य पादसंवाहनमत्र तात्पर्यम् अन्ये पुनः कर्ममार्गानुसारिणोऽपि भक्तिं कुर्वाणा हतपाप्मानो निष्कल्मषाः कर्मिणां पापसम्भावना वर्तत इति तन्निराकरणायेमुक्तं हतपाप्मान इति ते सामस्येपाका पूर्वं तेनैव तथा कृताः अतो वायोः साक्षात्तदभिव्यक्तिहेतुभिर्व्यजनैः सन्तपनवीजयन् एवमुभयविधा अपि भगवत्सेवालक्षणं भक्तिरसं भगवत्सान्निध्यानाद्युभन्त इति भक्तिरससहिता भगवत एवं लीला ॥ १७ ॥

एवंरूपप्रपञ्चानुसारिणा लीलानुकरणं नामप्रपञ्चानुसारेणापि

तां लीलामाह–अत्र इति । भगवतोऽनुरूपाणि योग्यानि न त्वननुरूपाणि निरोधार्थं केवलं कृतानि मनोज्ञानि मनोहराणि भगवतो भक्तानां च यद्भगवता गोप्यं तत्प्राकट्यं भगवतः अमनोहरं भवति भक्तानां तु भक्तिमार्गविरुद्धं महात्मन इति भगवति सर्वं सम्भवति अतो भगवन्माहात्म्यं ज्ञात्वा भगवान् कीर्तनीय इति ज्ञापनार्थं महात्मन इत्युक्तं गानं रागानुसारेण भगवद्गुणोपनिबन्धयुक्तानां कीर्तनं स्मेति प्रसिद्धिः प्रमाणं महाराजेति सम्बोधनं राजलीलात्वज्ञापनाय तेषामपि प्रेमोद्गमो न भगवत्सान्निध्यात्सम्यक्‌प्रादुर्भावाच्च जात इति सर्वलीलान्ते तेषां प्रेमोत्पत्ते स्नेहक्लिन्नधियः शनैरिति स्नेहेन क्लिन्ना धीर्येषाम् आर्द्रवाससा स्पृष्टं सर्वमार्द्रमिव भवतीति ज्ञापयितुं तेषां गानमपि तथा सांनिध्यमाह—शनैरिति । एतदन्तैव भगवल्लीला ॥ १८ ॥

अतः परं जीवाः सायुज्यमेव प्राप्स्यन्तीति कैः सह लीला कर्तव्या स्यादत उपसंहरति—एवमिति । एता एव द्विविधलीला यत्र कोचिद्भगवत उच्यन्ते अग्रे भगवतो राजसी सात्त्विकीश्च लीला वक्ष्यन् तामसीय गोकुले प्राकृतैः सह कृतेत्याह, ननु, ज्ञानरूपे भगवति कथमिव लीला सम्भवति ज्ञानस्य तमोविरोधित्वात् तत्राह–निगूढात्मगतिरिति । नितरां गूढा आत्मनो गतिर्ज्ञानलीला यस्य स्वमायया स्वमयत्र सम्बध्यते स्वाधीनमायया गोपात्मजत्वमपि चरितैः कृत्वा विडम्बयति अनुकरोति उपहसति वा न हि गोपा एतादृशा भवन्ति अतो महानलपदस्य नाम स्वात्मिक स्थापयन् तानुपहसत्येव चरितान्यलौकिकानि विडम्बनं चालौकिकत्वस्यैव भवतीति माया तेषु सहकारिणी क्रियते बहूनामेव चरित्राणां बहुधा प्रदर्शितानां विडम्बनं सिद्ध्यति अतः स्वरूपं गोपवत् गोपानुकरणं चोपहसन् रेमे लीलादावुक्ताया लक्ष्म्या उपसंहारे विनियोगमाह–रमालालितपादपल्लव इति । क्रीडान्ते पादसंवाहनं पतिव्रताया धर्मः अन्यथा समतया गता भक्तिर्न पुनरागच्छेत् अतः प्रत्यावर्तनार्थमन्तेऽवश्यं पादसंवाहनं कर्तव्यम् एतादृशोऽपि प्राकृतैः समं प्राकृतरसानुभवार्थं प्राकृतवदेव रेमे अन्यथा विजातीये रसो नोत्पद्यते ईशचेष्टित इति भगवतोऽत्यन्ते प्रत्यापत्तिः ईशस्यैव चेष्टितं वक्ष्यति "लोकवत्तु लीलाकैवल्यम्" ( २।१।३३ ) इति न्याय उपदर्शितः ईश्वरा अप्यखेटकादिरूपां व्याधवल्लीलां कुर्वन्ति तथैवैतदपि भगवता कृतमिति ॥ १९ ॥

एवं गोपानां संस्कारार्थं लीलां प्रदर्श्य तेषां दोषनिराकरणार्थं धेनुकवधलीलां प्रस्तावयति–श्रीदामानामेति विंशत्या । श्रीदाम अस्य लक्ष्म्याः सम्बन्धी कश्चित्सङ्घातेव सोऽपि गोपालः नन्दवंशोद्भवः रामकेशवयोः सखा साधारणः सख्यपर्यन्तमायतः स्त्रीसम्बन्धी लीलासम्बन्धी भक्तिसम्बन्धी च तादृशान्बालानपि गणयति सुबलेति स्तोको भिन्नः कृष्णो भिन्नः स्तोककृष्णश्चापरः सुबलो बलभद्रानुसारी सुबलस्तोककृष्णादयो येषां ते सर्वे सम्भूय प्रेम्णा स्वाभिलषितं किञ्चित् प्रार्थयन्ति तत्राद्यः सुबलः प्रथमं निरूपित इति ॥ २० ॥

* विजयध्वजरीत्याऽत्र मूले ॥ श्रीशुक उवाच ॥ ततः धन्येयमित्यादि पद्यम् वर्तते ॥

राम राम ! महाबाहो ! कृष्ण ! दुष्टनिबर्हण ! ।
इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम् ॥ २१ ॥
फलानि तत्र भूरीणि पतितानि पतन्ति च ।
सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥
(१)सोऽतिवीर्योऽसुरो राम ! हे कृष्ण ! खररूपधृक् ।
(२)आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥
तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ! ।
न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वयोगमायया प्रावृतात्मैश्वर्यः स्वयं गोपात्मजोऽपि चरितैर्गोपात्मजत्वं भूपालपुत्रत्वं विडम्बयन् तिरस्कुर्वन् सोऽप्येवं क्रीडां कर्तुं न जानातीति भावः । "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि" इति मेदिनी ऐश्वर्यदृष्ट्या रमालालितपादपल्लवोऽपि तदाचरणात् कैश्चिद्ग्राम्यैः बन्धुभिः सह कश्चिद्ग्राम्यो बन्धुरिव रेमे न केवलमावृतमेव तदैश्वर्यमित्याह—मधुरमारणादिप्रस्तावे ईशमैश्वर्यमयं चेष्टितं यस्य सः ॥ १९ ॥

ईशचेष्टितत्वमेव दर्शयितुमाह—श्रीदामेति । प्रेम्णेति कृष्णरामावेव स्वव्याजेन तालफलानि भोजयितुमित्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यजनैः तालवृन्तादिरूपैः ॥ १७ ॥
स्नेहेन क्लिन्ना आर्द्रीकृता धीर्येषां ते ॥ १८ ॥
कृपामात्रानिगूढा साधारणैर्जीवैर्दुर्लक्ष्या आत्मगतिर्यस्य सः कृपामात्रानिगूढात्मगतिः स्वमायया स्वसङ्कल्पेन ऐश्वर्या तु ईशस्य स्वस्यैव चेष्टितं यस्मिन् सः स्वमायया स्वसङ्कल्पेन गोपात्मजत्वं चरितैस्तदनुरूपैश्चेष्टितैर्विडम्बयन् अनुकुर्वन् रमालालितपादपल्लवोऽपि ग्राम्यैः ग्रामेषूत्पन्नैः स्वकृपापात्रभूतैर्गोपबालकादिभिः समं सह ग्राम्यवत् आसक्त इव रेमे इत्यन्वयः ॥ १९ ॥
श्रीदामा सुबलादयश्चेदं वक्ष्यमाणमब्रुवन् सुबलश्च स्तोककृष्णश्च सुबलस्तोककृष्णौ तावादी येषां ते ॥ २० ॥

---

भाषा टीका ।

तब वा समें कितने एक सखा उन महात्मा जी (श्रीकृष्ण) की चरण सेवा करवे लगे हैं । और कितने एक मनघ ग्वाल बाल पतौआन के बीजनान सौं श्रीकृष्ण की विभार करें हैं १७ ॥

हे महाराज ! और कोई चतुर गोप बालक स्नेह सौं आर्द्र बुद्धि होय के भगवान् के अनुरूप मधुर सुरीले स्वर सूं गावें हैं जो परमात्मा कूं मनोहर लगें ॥ १८ ॥

या प्रकार अपनी माया सौं अपने ईश्वरपने कूं छिपायके अपने मधुर चरितन से गोप बालकपने को अनुकरण करते श्रीलक्ष्मी जिनके कोमल श्रीचरणन को लालन करें ऐसे श्रीकृष्ण भोरे ब्रज बासीन के साथ आप उनकी भी नाईं खेलत भये परंच जब तब चेष्टा आपकी ईश्वर पनेई की रहती ॥ १९ ॥

अब वा ईश्वरपने की चेष्टा दिखायवे के नाईं कहैं हैं, कि—एक बार राम कृष्ण को प्रेमी सखा श्रीदामा नाम वारो ग्वारिया तैसेई सुबल, स्तोक, कृष्ण, सू आदिलके और हू सगरे गोप प्रेम सौं दोऊ भैयन तें यों बोलत भये ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तालालिसङ्कुलं तालपङ्क्तिभिर्व्याप्तम् ॥ २१-२२—२३-२४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे रामेति रमसे क्रीडसीति तन्नामनिरुक्तेरेतामप्येकां क्रीडां कुरु किं वा रमयसि क्रीडयसि सुखयसि चेति तथास्मान् रमयेति भावः । वीप्सा आदरे प्रोत्साहनार्थम् अत एव त्वामेवादौ सम्बोधयाम इति भावः । हे महासत्त्वेति तव किमप्यशक्यं नास्तीति भावः । हे कृष्णेति परमानन्दप्रदस्वभावत्वेन सर्वाकर्षकत्वादस्माकमपि सुखं कर्तुमर्हसीति भावः । हे दुष्टनिबर्हणेति वत्सासुरादीनां तस्मात्साक्षाद्दुष्टः अतस्तालवनरोधकधेनुकवधार्थमपि तालपातनादिकं युक्तमेवेति भावः । एवं दुष्टनिबर्हणेति श्रीकृष्णस्य सार्थकत्वं वदन्तो महासत्त्वेति बलदेवस्य विफलत्वं दर्शयन्तस्तमुत्तेजयन्ति इतः श्रीगोवर्द्धनादित्यर्थः । प्रावृतश्चैव तदा गोचारणात् तथा च श्रीहरिवंशे तत्प्रसङ्ग एव

"आजन्मतुल्यौ सहितौ गोधनैः सह गामिनौ ।
गिरिं गोवर्द्धनं रम्यं वसुदेवसुतावुभौ" ॥

इति । अविदूरे अनतिदूरे श्रीगोवर्द्धनपूर्वतः क्रोशचतुष्टयान्तरे वृत्तेः तथा च वाराहे—

---

(१) सोऽतिवीर इति (२) आत्मसाम्यबलैरिति विज० पा० ।

**विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ।**
**एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥**
**प्रयच्छ तानि नः कृष्ण ! गन्धलोभितचेतसाम् ।**
**(१)वाञ्छाऽस्ति महती राम ! गम्यतां यदि रोचते ॥ २६ ॥**
**एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ।**
**प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥**
**बलः प्रविश्य बाहुभ्यां तालान्सम्परिकम्पयन् ।**
**फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥**
**फलानां पततां शब्दं निशम्याऽसुररासभः ।**
**अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥ २९ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्य वीर्यं प्रख्यतं यदर्थं तदाह—तस्मादिति । कृतः नर एवाहारो येन स हि मनुष्यानेव विशेषतो भक्षयति मत एव तस्मात् भीतैर्नृभिः सेव्यते तद्वनं तद्योस्माभिरपि न गन्तव्यमित्याशङ्कयाहुः, अमित्रहन् ! इति । हे कृष्ण ! भवानमित्रहन्ता, सोऽप्यमित्र इति अतस्तद्धननं तव शक्यं कर्तव्यं च अयं धर्मो भगवन्निष्ठो जागरूक एतेषां हरिस्फुरतीत्युक्तदोषवतोऽपि स्थाने गमनं प्रार्थयन्ति अन्यथैवं प्रेरणस्य प्रेमविरुद्धत्वेन प्रेरणेदमब्रुवन्निति, वचनं विरुद्धं स्यात्प्रियस्यामित्रस्य न स्थापयितुमुचितम् इति च किञ्च तद्वनं सर्वेषामेवासेव्यं ये भूचरा ये चान्तरिक्षचराः अतः पशुगणैः पक्षिसङ्घैश्चाविशेषेण वर्जितम् अतो ये पशुपालकाः ये वा देवपालकाः तैः सोऽवश्यं वध्यः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इतो गोवर्धनाद्विदूरे क्रोशचतुष्टयान्तरे तारफरा इति ताल्वसीति ख्यातप्रदेशगतं वनम्—

"अस्ति तालवनं नाम धेनुकासुररक्षितम् ॥
मथुरापश्चिमे भागे अर्द्धैकयोजनम्" ॥

इति वाराहोक्तेः । पश्चिमे पश्चाद्भवे भागे इति मेकृतकोषो इति व्याख्येयं तत्रैव तद्यांतात् तालानामालिभिर्व्याप्तं श्लेषेण तालानामविवर्णत्वेनप्रतिज्ञानुजातीयत्वं ध्वनितम् । किन्तु धेनुकेन अवरुद्धानि वशीकृतानीत्यत एव हे राम ! तव महासत्त्वपरीक्षा हे कृष्ण ! तथापि दुष्टनिबर्हणस्वपरीक्षा च कर्तव्येति भावोऽयं तयोः स्वस्वभावेन बलिष्ठत्वख्यापनम् पेर्या विरुध्यते प्रत्युत वीररसोत्साहोद्दीपनत्वेन संरुच्यत एवेति ज्ञेयम् ॥ २१—२२ ॥

सोऽतिवीर्य इत्यादि तयोः पराक्रमोत्तेजनम् ॥ २३ ॥

भावयोरमे तस्य तदीयानां चातिवीर्यं बहुपुष्टत्वमपि भविष्यतीति चेत्तर्हि वचनं तत्रस्थासुराभिभयान् तान् ताकभोजितश्च वत्सयुष्मदादिभिः कुरुतामित्याहुः—तस्मादिति । ननु कथं विद्यः तद्वनं तद्भूतेत्यत आहुः—एष वै गन्धः भाद्रमासीयः प्राग्समीरणेनानीत इति भावः ॥ २४—२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तालानामालिभिः पङ्क्तिभिः सङ्कुलं व्याप्तम् ॥ २१—२४ ॥

भाषा टीका ।

हे राम ! हे भैया दाऊ ! हे बडी भुजान वारे ! हे दुष्टन के मारवे वारे, भैया कन्हैया ! या जगे सों थोरी दूर पै तालवन है ॥ २१ ॥

या जगे बहुत से तालन के फल गिर परे हैं और गिर रहे हैं, परन्तु दुरात्मा धेनुकासुर के डर से उन फलन को कोई छू भी नहीं सके हैं, ताई सों रुक रहे हैं ॥ २२ ॥

हे दाऊ ! हे भैया कन्हैया ! वो गदहा को रूपधारन करन वारो असुर बडो वीर्य वारो है, और अपने सरीके बलवारे और मोसेरे दैत्य वाके समीप में हैं ॥ २३ ॥

हे शत्रुन के मारन वारे ! या जगे मनुष्य नहीं जाय सकें हैं ताई सों यो वन पशुपक्षि समूह सों वर्जित है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विषूचीनः सर्वतः प्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सनगं सवृक्षम् ॥ २९ ॥

(१) वाञ्छाऽसीन्महतीति विज० सुबो० पा० ।

तेनाहतो महातालो वेपमानो महाशिराः ।
पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥
बलस्य लीलयोत्सृष्टखरदेहहता हताः ।
तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥
नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतं प्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥
ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ।
क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥
तांस्तानापततः कृष्णो रामश्च नृप ! लीलया ।
गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु ॥ ३७ ॥
फलप्रकरसङ्कीर्णं दैत्यदेहैर्गतासुभिः ।
रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥
तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ।
मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥
अथ तालफलान्यादन् मनुष्या गतसाध्वसाः ।
तृणञ्च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥

भाषा टीका ।

लुभाय गयो, हे राम ! हम सबन की बडी इच्छा है जो तुमैं रुचै तौ चलौ ॥ २६ ॥

ऐसे सुहृदन के वचन कूं सुनके सुहृदन की प्रिय करवे की इच्छा सूं दोऊ भैया हंसिकें गोपन कूं साथ लेकें तालवन कूं जात भये ॥ २७ ॥

पहिले वा वन में श्रीबलदेवजी घुस गये, तालके वृक्षन कों हलाय२ कें फलन कूं गिराये, जैसे कोई बडो मत-कुञ्ज पराक्रम सों गिरावतो होय ॥ २८ ॥

गिरवे वारे फलन को शब्द सुनिके वो गर्दभरूप धेनुकासुर पर्वत सहित भूतल कंपावतो दौर के सन्मुख आवत भयो ॥ २९ ॥

दाऊजी के समीप आयके नेंक पीछे कों हटकें पिछाडी के दोऊ पायन की दुलत्ती सो दाऊजी के वक्षःस्थल में मार के रेंकतो भयो वो खल पीछे को हटगयो ॥ ३० ॥

हे राजन् ! क्रोध में भरो भयो धेनुकासुर फिर आयकें मुखफेर कें ठाढो भयो क्रोध करिकें बलदेवजी कों फिर पिछले पांवन की दुलत्ती फेकत भयो ॥ ॥ ३१ ॥

श्रीबलदेवजी ने वाके दोनों पायन कों पकडके एक हाथ सों फिराय के ताल वृक्ष के ऊपर फेक्यो वाके तो फिरावतेंई में प्राण निकस गये ॥ ३२ ॥



श्रीधरस्वामिकृतभावार्थदीपिका ।

खरसृष्टेन खरदेहेन हतैराहताः चकम्पिरे अकम्पन्त ॥ ३४ ॥

यस्मिन्निदं विश्वमोतमूर्ध्वतन्तुषु पट इव ग्रथितम् प्रोतं तिर्यक्तन्तुषु पटवदेव संग्रथितम् सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ॥ ३५—३६—३७ ॥

घनैर्नभ इव भुवस्तलं रराज तत्र फलप्रकरसङ्कीर्णामिति दैत्यदेहैश्च सतालाग्रैः सङ्कीर्णामित्यरुणश्वेतनीलघनसादृश्य-सम्पादनम् ॥ ३८—३९ ॥

आदन्नभक्षयन् ॥ ४०—४१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चकारादपरोऽपि परमिलेवं बहवो बहून् कम्पयन्तो भग्ना इति शेषम् ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सन्निकृष्टा भग्नाः दूरस्थास्तु कम्पिता इत्याह—बल-यतीति ॥ ३४ ॥

इदं च "न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते" इत्येवं वक्ष्यमाणरीत्या प्रतियोद्ध्रनुरूपमात्रशक्तिप्रकाश-धारितया नरलीलयैव कृतमित्याश्चर्यत्वेन वर्ण्यते न त्वैश्वर्य-लीलयेत्याह—नैतदिति । अचित्रत्वे हेतुः भगवति शक्त्या समग्रै-श्वर्यादियुक्ते अनन्ते स्वरूपेणाप्यपरिच्छिन्ने तथोपाधिसम्बन्धेनापि जगदीश्वरे ओतं प्रोतमित्यादिलक्षणे च दृष्टान्तेऽपि तन्तूनां कार-णत्वेन कार्यात् पटादन्यत्वम् अत्र तादृशमर्मविदां श्रीकृष्ण-शेषु मुख्यत्वात् युक्तमेवेति भावः ॥ ३५ ॥

कृष्णमित्यादावुक्तिः श्रीबलदेवस्य पराक्रमदृष्ट्या भयात्पलायनेन तदभिद्रवणात् किंवा अग्रजप्रेम्णा स्वयमग्रतो गमनात् रामं चेति पश्चादनुजस्नेहेन तस्यापि तत्पार्श्वे गमनात् अभिद्रवणे तु द्वयोरपि प्राधान्याच्चकारो क्रोष्टार इति महाक्रोशान् कुर्वाणाः हतबान्धवा इति च शोकेनातिक्रोधाभिजशक्त्यतिशयं दर्शयन्त इति भावः ॥ ३६ ॥

हे नृपेति प्रहर्षोदयात् ( यद्वा, नृपस्येव लीलया राजानो हि मृगया क्रीडाकौतुकेन मृगान् घ्नन्तीति अनायास एव तात्पर्यम् ) तृणराजस्त्विति समासान्तविधेरनित्यत्वात् ॥ ३७ ॥

गतासुभिरिति देहानामस्पन्दनं बोधयति अत एव रराज श्रीकृष्णपक्षीयाणामानन्दजनकत्वात् भूः भूमिरूपं तलं तालानामधो देशः किं वा भूरित्यव्ययं भूर्लोकादिवत् । यद्वा, सुपांसुलुगित्या-दिना ङसः सुभावः । अथवा सतालाग्रैर्दैत्यदेहैरुपलक्षिता भूः फलप्रकरसङ्कीर्णा यथा स्यात्तथा रराज नभस्तलं नभःस्वरूपं "तलं स्वरूपाधरयोः" इति विश्वः ॥ ३८ ॥

गोपानामेव प्रीत्यर्थमपि तत्तत् अन्येषां जातमित्याह—तयो-स्त्विति द्वाभ्याम् । तयोस्तदिति वा पाठः सुमहदिति सपरिवा-रस्यैव तस्यावहेवथापि मारितस्य देवादिभयकरत्वं च बोधयति आदिशब्दाद्विद्याधरादयो महर्षयश्च क्रमेण तेषां तत्तत्कर्म ज्ञेयम् वाद्यैर्गीतनृत्यान्यपि ज्ञेयानि प्रायोऽन्योन्यं तेषां सङ्ग-तत्वात् ॥ ३९ ॥

गोपाला इत्यनुक्त्वा मनुष्या इत्युक्तेस्ते तु मृतगर्दभप्रसङ्गेन घृणां विधाय नादन् किं त्वन्य एव मनुष्या इत्यर्थः । हत-धेनुककाननं इति तृणवाहुल्यमपि सूचितम् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेन परिक्षिप्तेनासुरेण हतस्ताडितो महान् तालः भग्नः पत-मानो वृद्धच्छिरोऽग्रभागो यस्मात् एव पार्श्वस्थं तालं पातयन् पपातेति शेषः । स च पार्श्वस्थः पतमानस्तथैवान्यं सोऽपि तथै-वान्यम् ॥ ३३ ॥

बलस्य रामस्य लीलयोत्सृष्टेन खरदेहेन हता ये तैर्हताः सर्वे तालाश्चकम्पिरे यथा महावातेनेरिताः कम्पितास्तद्वत् ॥ ३४ ॥

जगदीश्वरेऽनन्ते एतत्र चित्रं कुतः अङ्ग हे राजन् ! तन्तुषु पट इवेदं जगद्यच्छिरस्योते प्रोतं च ॥ ३५ ॥

ततो धेनुकस्य ये ज्ञातय क्रोष्टारो गर्दभाः खरशब्दं कुर्वन्तो वा हताः बान्धवा येषां ते अत एव संरब्धाः सर्वेऽप्यद्रवन् अभिमुखं जग्मुः ॥ ३६ ॥

हे नृप ! गृहीतौ पश्चाच्चरणौ येषांस्तांस्तालेषु प्राहिणोत् प्राक्षि-पत् प्रत्येकाभिप्रायकमेकवचनम् ॥ ३७ ॥

फलसमूहैः सङ्कीर्णा भूः गतप्राणैर्दैत्यदेहैः कठिनैस्तालाग्रैश्च घनैरम्बरतलमिव रराज खरदेहैस्तालाग्रैरित्यरुणश्वेतनीलघन-साहश्यं सम्पादनम् ॥ ३८ ॥

निशाम्य दृष्ट्वा विबुधादयः पुष्पवर्षाणि मुमुचुर्ववर्षुर्वाद्यानि दुन्दुभ्यादीनि चक्रुः वादयामासुः । तुष्टुवुर्विबुधादय इत्यनुवर्त्तते ॥ ३९ ॥

अथ ततः गतभयाः मनुष्याः तालफलान्यादन् भक्षितवन्तः हतो धेनुको यस्मिंस्तस्मिन्कानने पशवश्च तृणमचरन् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन खरूपासुरशरीरेण बलेन पार्श्वस्थं तालं कम्पयन् भग्नो ऽभूत् किञ्च स च पार्श्वस्थः अन्यं तालं सोऽप्यपरं तालमित्येवं परम्परया ॥ ३३ ॥

बलस्य लीलया कर्मणा उत्सृष्टेन उत्क्षिप्तेन खरदेहेन हत-तालाहताः ॥ ३४ ॥

अन्यस्य चित्रमपि रामस्यैतत्कर्म चित्रं न भवतीति शुकः परीक्षितमाह—नैतदिति । हि शब्दो धरायामिवेयम् ननु, सर्वपयतीति प्रसिद्धिं द्योतयति ॥ ३५ ॥

क्रोष्टारः चण्तुकामाः ताच्छीलिकस्तृन्प्रत्ययः स्वजातिरवं कुर्वाणा वा ॥ ३६—३७ ॥

फलप्रकरसङ्कीर्णा तालफलसमूहेन व्याप्ता ॥ ३८ ॥

तयोः रामकृष्णयोः ॥ ३९ ॥

आदन् भक्षितवन्तः ॥ ४०—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च, इदञ्च "न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्या-नुविधस्य वर्ण्यते" इति वक्ष्यमाणरीत्या प्रतियोद्ध्रनुरूप-मात्रशक्तिप्रकाशकार्यात् धारितया नरलीलयैव कृत-मित्याश्चर्यत्वेन वर्णयन्—नैतदिति, दृष्टान्तेऽपि तन्तूनां कारण-त्वेन कार्यात् पटादन्यत्वम् ॥ ३५—३७ ॥

दैत्यदेहैरुपलक्षिता भूः फलप्रकरसङ्कीर्णा यथा स्यात्तथा रराज नभस्तलं नभःस्वरूपम् ॥ ३८ ॥ ३९ ॥

यद्वा, साधारणमनुष्या एवादन् न तु गोपाः मृतगर्दभ-प्रसङ्गे घृणां विधायेति भावः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूर्वं तु फलान्येव पतन्तीदानीन्तु वृक्षाः स्वयमपि पतिता इत्याह—तेनाहत इति । तेन बलभद्रेण रासभदेहेन वा आ समन्तात् हतः महातालोऽपि वेपमानो जातः तेनो वृक्षश्छिन्नः स्थूलाग्रिमभागः क्रमेण स्थिरीभवितुमशक्तः स्वपार्श्वस्थं वृक्षं कम्पयन्नेव मध्ये भग्नः सोऽपि पूर्ववत् वेपमानः पार्श्वस्थं कम्पयन् भग्नः सोऽप्येवमपरः एवं सा पङ्क्तिः सर्वापि पतितेत्यर्थः ॥ ३३ ॥

किञ्च न केवलमेका पङ्क्तिः पातितेति किन्तु सर्वे एव वृक्षाः वेपमाना जाता इत्याह—बलस्येति । साक्षाद्बलरूप एवायम् अतस्तेन लीलयाप्युत्सृष्टखरदेहेन हतेन वृक्षेण आ सर्वतो हतास्ताला महावातेरिता इव चकम्पिरे अस्य क्रियाशक्तिरनेकपरम्परायामपि न शान्ता सर्वात्मकत्वादस्य यत्रैवास्य क्रियाशक्तिर्व्याप्नोति तत्सम्बन्धात्तत्र स्थितास्पि क्रियाशक्तिरुद्गच्छति तथा चान्यस्पर्शे पुनरन्यत्र स्थितास्युद्गच्छति यथा काष्ठेषु वह्निराधारमपि न स्थापयतीति वह्निसमानधर्मा वायुरत्र दृष्टान्तीकृतः महावातेन स्पृष्टो गुप्तोऽपि वायुरुद्गतो महानेव भूत्वान्यमप्येवमुद्बोधयतीत्यन्ते महानेव भवति ॥ ३४ ॥

इदं बलभद्रचरित्रमाश्चर्यमिव मत्वा समाधत्ते नैतच्चित्रमिति—नेदं कर्म बलस्य किन्त्वाविष्टस्य भगवतस्तत्राह—भगवति नैतच्चित्रमिति । किञ्च, अनन्तोऽयं सर्वसंहर्त्ता सङ्कर्षणः तस्य तालवृक्षमात्रकम्पनं किमाश्चर्यं यं काले स्मृत्वा जगदेव कम्पते किञ्च, जगदीश्वरोऽयं जगतो नियन्ता ईश्वरस्याज्ञयैव सर्वे कम्पन्ते "यद्भयाद्वाति वातोऽयम्" इत्यादिवाक्यात् प्रथमप्रहारपर्यन्तं बलभद्रः ततो व्यथाप्रतीकारार्थमुपायान्वेषणे भगवदुपदेशे स्मृते सहसैवाविष्टो भगवान् तथा कृतवान् अन्यथा बाहुभ्यां कम्पेन एव वृक्षभङ्गो भवेत् किञ्च यस्मिन् सङ्कर्षणे अहममाभिमानाधिष्ठातरि सर्वमेव जगदोतं प्रोतञ्च समवायरूपत्वान्निमित्तरूपत्वाच्च तन्तुभिः पटः ओतः प्रोतश्च दीर्घतन्तव ओताः तिर्यक्तन्तवः प्रोताः तथा सर्वमेव जगत् भगवति समवेतत्वेन ग्रथितत्वेन च स्थितम् अतो हस्तचालनेन सर्वजगत्कम्प उचितः किमाश्चर्यं वृक्षाणां महाव्यापारे ॥ ३५ ॥

एवं धेनुकवधं भगवत्सामर्थ्यं चोक्त्वा प्रसङ्गात्तत्सम्बन्धिनां सर्वेषां वधमाह—तत इति । ते तु बहवो मूर्खाः कृष्णं रामं च धेनुकस्य ज्ञातयो ये धेनुकलभेन क्लिष्टा हतबान्धवाः क्रोधसंरब्धाः सन्तः क्रोष्टारो गर्दभाः आक्रोशयुक्ताः अभ्यद्रवन् चकारद्वयेन गोपानप्यभ्यद्रवन् तदा प्रतिगोपं रामः कृष्णः आपि स्थितौ भवतः अतो बहुधा कृष्णं बहुधा राममिति ज्ञापयति ॥ ३६ ॥

तदनुभक्तरक्षार्थं सर्वानेव मारितवन्तावित्याह—तांस्तानिति । ये एवाग्रे आगतास्त एवाग्रे मारिताः कृष्णो रामश्चेति यस्यै यस्यै आग्रे पतन्ति नृपेति सम्बोधनं पूर्ववत् तेषां वधे न कोऽपि प्रयास इत्याह, लीलयेति । गृहीतौ पश्चाच्चरणौ येषां सर्वेषामेवान्तरिक्षमरणार्थं दुष्टाशोषिततालवनदूरीकरणार्थं च तृणराजस्येव प्राहिणोत् रामः कृष्णश्च एवेत्येकवचनम् ॥ ३७ ॥

ततो यज्जातं तदाह—फलप्रकारैः फलसमूहैः सङ्कीर्णैर्दैत्यदेहैस्तालैश्च भग्नैश्च संकीर्णं व्यस्तं भग्नं मे तालाग्रमस्तकविराजि तैरपि सङ्कीर्णं तलं भूतलं रराज शोभामेव प्राप्तवत् न तु भूशोभा काचिन्नष्टा तत्र दृष्टान्तः घनैर्नभ इवेति निर्मलं नभः सूर्यसहितं चन्द्रनक्षत्रसहितं यथा शोभते तथा घनैरपि सम्बद्धं शोभते घनानां सर्वजनापेक्षाविषयत्वात् त्रीयच्यतानि नीलवान्तरजातियुक्तानि प्रतिनीलानि फलानि रासभास्तु धूसराः तालाश्च श्यामाः मेघा अपि त्रय एव ॥ ३८ ॥

तत्कर्म तयोः सर्वजगत्प्रसिद्धं जातमिति ज्ञापकमाह—तयोरिति । सुमहत्कर्म धेनुकवधलक्षणं विबुधादयो गन्धर्वादयः पुष्पवर्षाणि मुमुचुर्वाद्यानि चक्रुस्तुष्टुवुश्च त्रिविधानां त्रयं हर्षनिधानम् अनेन देवानां हितार्थं वध उक्तः ॥ ३९ ॥

एवं सपरिकरो धेनुकवधो निरूपितः भगवता तु तालफलानि न हतानि परं स्वेच्छयैव सर्वैर्भक्षितमित्याह—अथेति । भिन्नप्रक्रमेण तालफलान्यादन् सर्वे एव मनुष्याः गतसाध्वसाश्च जाताः तृणं च पशवश्चेरुः हतो धेनुको यत्र तादृशे कानने तत्र छायया तृणं न शुष्कं भवतीति चकारात्तु पश्चियोऽपि सुखिनो जाताः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उत्सृष्टेन खरदेहेन हतैस्तालैराहताः प्राप्ताघाताः ॥ ३४ ॥

विश्वमोतं अमीतन्तुषु पट इव ग्रथितं प्रोतं तिर्यक्तन्तुषु पटवदेव ग्रथितं सर्वतोऽनुस्यूतं वर्त्तत इत्यर्थः ॥ ३५ ॥ ३६ ॥

हे नृप ॥ ३७ ॥

फलप्रकरसङ्कीर्णं यथा स्यात् तथा भू रराज कैः दैत्यदेहैः निर्भिन्नतालाग्रसहितैः तेषां स्वतः श्यामत्वात् रुधिरोक्षितत्वाच्च घनैः श्यामरक्तैर्नभस्तलमिव "तलं स्वरूपाधारयोः" इति विश्वः ॥ ३८ ॥ ३९ ॥

मनुष्यास्तत्रत्याः पुलिन्दादय एव न तु गोपालाः आदन् गर्दभरक्षितत्वेन फलेषु घृणोत्पत्तेः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लीलयोत्सृष्टेन खरदेहेन हतैस्तालैराहताः चकम्पिरे प्रकम्पत ॥ ३४ ॥

नैतदिति श्लोकः वासुदेवस्य सङ्कर्षणाख्या द्वितीया मूर्त्तिर्बलो न तु जीवसंकर्षणावतार इति ज्ञापयति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

आदन् अभक्षयन् ॥ ४० ॥

---

भाषा टीका ।

धेनुकासुर कूं मारिके वा वृक्ष पै फेंक्यो तासुं बडो भारी ताल वृक्ष दुसरे ताल पै गिरयो तासों दूसरो समीप में ताल वृक्ष हो सो गिरयो ताकी ठोकर सों और वाकी सों और या प्रकार अनेक ताल वृक्ष गिरत भये ॥ ३३ ॥

श्रीबलदेवजी ने लीलाई सों फेंक्यो जो गधा के देह सों जो ताडित भयो परंपरा सों वाते जो ताडित भये सबै वे

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः ।
स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥
तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥ ४२ ॥
पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥ ४३ ॥
तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ।
यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥ ४४ ॥
गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ।
नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ।
संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥
एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् ।
ययौ राममृते राजन् ! कालिन्दीं सखिभिर्वृतः ॥ ४७ ॥
अथ गावश्च गोपाश्च निदाघातपपीडिताः ।
दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥

भाषा टीका

सगरे ताल वृक्ष ऐसें कंपित भये जैसे बडी आंधी में हले चले हैं ॥ ३४ ॥

जगदीश्वर भगवान् श्रीअनन्त जो बलदेवजी हैं उनमें जे बात कछु विचित्र नहीं हैं, जिनमें ये सब जगत् तंतुन में पटके नाईं ओत प्रोत है अर्थात् पोहि रह्यो है (या जगे लंबे तंतु ओत और आडे तंतू प्रोत हैं ऐसे जाननो चाहिये) ॥ ३५ ॥

ताके पीछे धेनुक के ज्ञात के और जो गधा हे, ते सब राम कृष्ण के ऊपर बडे संरंभ से दौरे क्यों कि ? उनको बंधु मारो गयो ता शोक सों ॥ ३६ ॥

हे नृप ? तबतो कृष्ण और बलदेव दोनो भैया जो जो गधा आवत गये तिन २ के पांय पकरि २ के ताल वृक्षन के ऊपर फेंकत गये ॥ ३७ ॥

फलन के विखरवे तें और मरे दैत्यन के देहन तें और ताल वृक्षन के अग्र भागन तें पृथिवी ऐसे शोभित होत भई कि-जैसे चित्र विचित्र मेघन ते आकाश शोभित होवे ॥ ३८ ॥

दोऊ भैयान के या बडेभारी कर्म कों देख के देवतादिक पुष्पन की वर्षा करत भये बाजे बजावत भये और स्तुति करत भये ॥ ३९ ॥

या प्रकार जब धेनुकासुर मारो गयो तब कछु दिन पीछे या तालवन में मनुष्य फल खायवे लगे, और पशु तृण चरवे लगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गोरजोभिश्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च दिदृक्षितदृशो दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः ॥ ४२ ॥

मुकुन्दस्य मुखपद्मगतं सारघं मधु अह्नि यो विरहस्तस्माज्जातं तापं स च तासां सत्कृतिं पूजां, कां सत्कृतिं? कथं वा कृतां? तामाह, सव्रीडेति । सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यदेतत्, किं तत्? अपाङ्गमोक्षकटाक्षदर्शनं तथा तां सत्कृतिं प्राप्येति ॥ ४३-४४-४५-४६-४७-४८-४९-५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं प्रसङ्गेन दिनान्तरस्य धेनुकवधलीलामपि समाहृत्य प्रथमगोचारणदिनसन्ध्यालीलापि यथायुक्तमित्थं ज्ञेयेति तद्दिनसन्ध्यालीलामाह षड्भिः-तत्र सामान्यव्रजजनस्वयमानत्वेन वर्णयति-कृष्ण इति । कृष्ण इत्यभिप्रेतं सर्वचित्ता कर्षत्वं, तद्रूपनु[illegible]ष्टि-कमलेत्यादिना । कमलपत्राक्ष इति सौन्दर्यं[illegible]

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तीरादूदृष्ट्वा पशुतया तद्दोषाज्ञानादेव द्रुतगत्या प्रविश्य पपुः गोपाश्च तत्पीडिता एव किं तु प्रसिद्धं तद्दोषं जानन् तासां मूर्ति दृष्ट्वा शरीरजिहासया पपुरिति ज्ञेयम् अत एव गोपाश्चेति तद-नन्तरमुक्तं ताश्च ते चाग्रगामिनः कतिचिदेव ज्ञेयाः श्रीकृष्णस्य-काङ्क्षित्वेन पश्चात् त्यक्तुं तैरशक्यत्वात् सङ्ख्यातीतगोचार-णाय समन्तात् भागश एव गन्तुं तेषां योग्यत्वात् पश्चादुगा-मिना श्रीकृष्णेन दृश्यमानानां गवामपि तत्पानासम्भवात् दुष्ट-त्व कारणमाह—विषदूषितामिति ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सारघं मधु ॥ ४३—५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोतॄणां कीर्त्तयतां च पुण्यावहं यच्छ्रवणं कीर्त्तनं च तद्यस्य सः कृष्णः साग्रजो व्रजमाविवेश ॥ ४१ ॥

तं व्रजमाविशन्तं दिदृक्षिताः दृशः यासान्ताः गोप्यः समेताः समुदिताः अभ्यागमम् अभिमुखमाजग्मुः कथम्भूतम् ? गोरजोभि-र्व्याप्तेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुः हासश्च यस्य वेणुम् अनुगैः उप-गीता कीर्तिर्यस्य तं मुकुन्दस्य मुखसारसं मुखपद्मं पीत्वा तद्गतं मधु पीत्वेत्यर्थः । अहि यो विरहस्तज्जं तापं जहुः तासां व्रजयोषितां सत्कृतिं बहुमानं समधिगम्य, सत्कृतिस्वरूप-मेवाह, सव्रीडं सहासं सविनयं च यथा तथा अपाङ्गयोर्नेत्रान्तयोर्मोक्षः प्रसरणं यस्मिंस्तत् एव तद्रूपां तासां सत्कृतिं प्राप्य गोष्ठं विवेश ॥ ४२ ॥ ४३ ॥

यथाकाममिच्छानुगुणं कालानुगुणं च यथा तथा परमा आशिषः कामान् व्यधत्तामकुर्वताम् ॥ ४४ ॥

तदेव वर्णयन्नाह—तत्र गृहेऽङ्गमर्दनादिभिर्गताध्वसम्बन्धि-श्रमौ यथोक्तौ रुचिरं नवं वस्त्रं धारयित्वा दिव्याभ्यां स्रग-न्धाभ्यामलङ्कृतौ जनन्योपहृतं पात्रे दत्तं स्वादु मृष्टमन्नं प्राश्य उपलालितौ सुखं यथा तथा सुप्तवन्तौ ॥ ४५—४६ ॥

कदाचिद्रामं विनेतरैः सखिभिर्वृतः हे राजन् ! कालिन्दीं यमुनां ययौ ॥ ४७ ॥

निदाघे ग्रीष्मर्तौ य आतपः तेन पीडिता अत एव तृषार्ताः तस्याः कालिन्द्याः कालियविषेण दूषितमत एव दुष्टं जलं पपुः पीतवन्तः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

गोरजसा छुरितकेशपाशैः बद्धानि बर्हवन्यप्रसूनानि पिच्छ-वनप्रसूनानि यस्य स तथा । गोरजश्छुरितकुन्तलबद्धबर्ह-वन्यप्रसूनश्च रुचिरे ईक्षणे चारुहासश्च यस्य स तथा तम् ॥ ४२ ॥

मुकुन्दस्य मुखमेव सारघं मधु सरघायोग्यं सारघं "सरघा मधुमक्षिका प्रोक्ता" इति हलायुधः । आहि विरहजं तापं यासां मपाङ्गमोक्षः कटाक्षनिरीक्षणं व्रीडया सहितः सव्रीडश्चासौ हासश्च सव्रीडहासः तस्य विभ्रमो रामित्यं विशेषेण प्राप्तिर्वा यस्य स तथा तासां सत्कृतिं सत्कारं समधिगम्य प्राप्य ॥ ४३—४४ ॥

मज्जनं स्नानम् उन्मर्दनं शरीरमर्दनं तैर्गतश्रमौ वस्त्रं वासित्वा आच्छाद्य ॥ ४५ ॥

प्राश्य पीत्वा सम्विश्य शयित्वा ॥ ४६ ॥

इदानीं कथान्तरं वक्तुमुपक्रमते, एकदेति ॥ ४७ ॥

निदाघातपः ग्रीष्मर्तुभवरविकिरणभव उष्णविशेषः तेन पीडिताः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सामान्यव्रजजनदृश्यमानत्वेन वर्णयति—कृष्ण इति । एकेन अथ परमतेजस्वित्वेन झटिति तद्वदुल्लङ्घितव्रजावेशैः श्रीगोपकुमारीविशेषैरपि दृश्यमानत्वेन वर्णयंस्तेषामनुरागाति-पत्तिं स्पष्टयति—तदिति द्वाभ्याम् ॥ ४१—४२ ॥

मत्तावयेव भृङ्गास्तत्पाने स्वतः प्रवृत्तत्वात् तैः सारभृतैः स्वयमपि पीत्वा सत्कृतिमाह—सव्रीडो हासो यत्र तादृशो विनयरहस्यप्रियजनोचितव्यवहारो यत्र एतादृशं यथा स्यात्तथा यत् स्यात् तद्रूपामित्यर्थः । यद्वि एतत् प्रोक्तां तां किं रूपां अपाङ्गमोक्षां कटाक्षदर्शनरूपामित्यर्थः ॥ ४३ ॥

परमाशिषः उत्कृष्टोपभोगान् तत्र गोष्ठमध्ये निजावरोध-प्रासादे गतः आध्वनः अध्वसम्बन्धि श्रमो ययोः टेरलोप आर्षः सविसर्गपाठे गताध्वश्रमावित्यर्थः । षष्ठ्यलुक् छान्दसः सम्प्रति स्रग्विभ्रमवलायां विगतश्रमावित्यर्थः । एवं गोपावजभूक्ता-धनुकरणोक्तप्रकारेण ॥ ४४—४७ ॥

दुष्टत्वकारणमाह—विषदूषितामिति ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वनलीलामुक्त्वा पुनर्व्रजे भगवतः समागममाह—कृष्णः कमलपत्राक्ष इति । कृष्णः व्रजमाविशदिति व्रजस्थानां महानानन्द-हेतुरुक्तः तदेतावत्कालं विरहतप्तानां कथं तापं दूरीकरिष्यती-त्याशङ्क्याह, कमलपत्राक्ष इति । कमलपत्रवत् आक्षते विद्यावे परतापापनोदके अक्षिणी यस्य अनेन दृष्ट्यैव तापहारित्व-मुक्तम् । ननु, कारणभूते आध्यात्मिके पापे विद्यमाने कथं ताप-निवृत्तिस्तत्राह, पुण्यश्रवणकीर्त्तन इति । पुण्ये श्रवणकीर्त्तने यस्य अनेन पापं जलपूरेणेव नाश्यत इति निरूपितं श्रवणे प्रविशति कथापूरो हृदयं ततः सर्वमेव दोषमालोक्य मुखतो निःसरति एवं कियत्कालपर्यावृत्त्या सर्वथैव शुद्धो भवति, नन्वे-वमपि सति भगवत्कीर्त्तिः कथं प्राप्यते ? तत्राह—स्तूयमानोऽनुगै-रिति । अनुगा भक्ता गोपाश्च तेन भगवच्चरित्रं सर्वथैव सुखमनुकम् अलौकिकेनापि प्रकारेण साग्रज इति अनुकथयतस्तेन कृत इति तं पुरस्कृत्य सहैवागतौ भगवान् नतु पृथक् पृथक् यथायथम् ॥ ४१ ॥

विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः ।
निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह ॥ ४९ ॥
वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः ।
ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ॥ ५० ॥
ते संप्रतीतस्मृतयः समुत्थाय जलान्तिकात् ।
आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥ ५१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभ्यङ्गशाल्तिकस्नानार्थं मातृभ्यां तस्य तद्दिने गृह एवोपवेशितत्वात् ॥ ४७ ॥

गाव इति पश्चात् शनैरागच्छन्तं कृष्णमनपेक्ष्य तृषार्त्तत्वात् द्रुतगामिन्यः तदनुद्रुताः केचन गोपाश्च ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुण्ये श्रवणकीर्त्तने यस्य सः ॥ ४१ ॥

तं श्रीकृष्णं व्रजमाविशन्तं दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः गोप्यः अभ्यगमन् अभिमुखमाजग्मुः कथम्भूतम् ? गोरजोभिश्छुरितेषु कुन्तलेषु बद्धानि बर्हवन्यप्रसूनानि यस्य रुचिरमीक्षणं चारु हासश्च यस्य तं च तं च ॥ ४२ ॥

व्रजयोषितः मुकुन्दमुखस्य मुकुन्दमुखपङ्कजस्य सारघं मधु अक्षिभृङ्गैः पीत्वा अह्नि यो विरहस्ततो जातं तापं जहुः मुकुन्दोऽपि तत्सत्कृतिं तासां पूजां समधिगम्य गोष्ठं विवेश सत्कृतिमेवाह-सव्रीडेन हासेन विनयो यथा भवति तथा यदेतदपाङ्गमोचं कटाक्षदर्शनम् ॥ ४३ ॥

परमाशिषः प्रियान् कामान् ॥ ४४ ॥

रुचिरां नीर्वी सुखदं वस्त्रं वासित्वा सुखं सुषुपतुः ॥ ४५-५० ॥

भाषा टीका ।

पुण्य रूप है जिनकी कथा को श्रवण और कीर्तन ऐसे कमलदललोचन श्रीकृष्ण अपने अनुचर गोपन सहित और बडे भैया बलभद्रजी सहित ब्रज में प्रवेश करत भये ॥ ४१ ॥

गायन के खुर की रज अलकन पै पलकन पै कपोलनकी अलकन पै पर रही है, और पिच्छ के मुकट को धारण करें हैं, बन के फूलन के गुच्छा माला लटकायें सुन्दर चितवन मनोहर जाकी हसन सखा जिनको जस गाय रहे ऐसे श्रीकृष्णचन्द्र वेणु को बजावत ब्रज बनतें आवत भये, दर्शन की इच्छा जिनकी ऐसी आंखन वारी सब गोपी जुरमिलके आवत भईं ॥ ४२ ॥

वे सगरी ब्रजकी वनिता अपने नेत्र रूपी भौरान तें सांवरे के मुख कमलतें सुन्दरता रूपी अमृत कूं पीके दिन भर ताईं प्यारे के विरह सो भयो जो ताप ताकों छोडत भईं । श्रीकृष्णचन्द्र भी उन गोपीन की नम्रता और लाज भरी मुस्क्यांन कटाक्ष भरी चितवन रूप भेंट कूं लेके अपने ब्रज में प्रवेश करत भये ॥ ४३ ॥

अपने पुत्रन पै प्यार करनवारी मैया यशोदा और रोहिणीजी दोनांई दोऊ भयान की जैसी इच्छा और, जैसो समय ताई के अनुगुण उनके मनोरथन कों पूर्ण करत भईं और आशीर्वाद देत भईं ॥ ४४ ॥

घर में आयके स्नान उबटनो इत्यादिक उपचारन सों मार्ग को परिश्रम दूरि भयो जिनको ऐसे कृष्ण बलदेव दोऊ भैया सुन्दर पीताम्बर नीलाम्बर को पहिर के माला गंध चन्दन सों भूषित होय के शोभा को प्राप्त होत भये ॥ ४५ ॥

इतनेई में मैया थार परोस के जो लाई सो बडो स्वादु वो अन्न दोऊ भैया जैंमत भये, ता पीछें मैया ने उपलालन करकें शय्या पै दोऊ भैयान कूं पौढाय दिये, और कहानी कहवे लगी, इतनेई में नींद जो आई सो ब्रज में सुख पूर्वक खूब सोवत भये ॥ ४६ ॥

हे राजन् ! या प्रकार श्रीवृन्दावन विहारी श्रीकृष्ण भगवान् कभऊ एकले बलदेवजी विना आपही ग्वाल बालन कूं साथ लेकें यमुनाजी के तीर पै जात भये ॥ ४७ ॥

ता पीछे गरमी की धूपसों व्याकुल होयवेतें गऊ और ग्वाल बाल सब तृषा सों आर्त्त होय गये और काली के विष सों दूषित जो यमुना जल हो ताकूं पीवत भये ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सम्प्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते सम्प्रतीतस्मृतयः यद्वा, सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथेति ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

अन्वमंसत तद्राजन् ! गोविन्दानुग्रहेक्षितम् ।
पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे वृन्दावनक्रीडायां धेनुकवधो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतच्च सर्वं श्रीभगवतो भाविलीलाविशेषाधिष्ठातृशक्ति-वैभवमेवेत्याह—देवो भगवान् तस्येदं दैवं लीलाशक्तिवैभवं तेन उपहतं ज्ञानं येषां त इति तदुक्तं दैवचेष्टितं इति वक्ष्यते च श्रीकृष्णेनाद्भुतकर्माणीति उपस्पृश्य किञ्चिदाचम्य विषाम्भ इति पुनरुक्तिस्तद्विशेषविवक्षया व्यसव इवात्र च तादृशदैवमेव कारणम् ॥ ४९ ॥

वै एव इत्यवैलक्षण्यं बोधयति, यतः स्वनाथान् अनन्य-गतीन् अत एवामृतवर्षिण्या प्राकृतानां प्राकृतममृतमिव तेषां तद्विधानामेकं जीवनहेतुं कारुण्यं वर्षितुं शीलं यस्याः । यद्वा, अमृतं तादृशं कारुण्याश्रुजलं तद्वर्षिण्या यथोक्तं द्वितीये "यद्वै व्रजे व्रजपशून् विषतोयपीतान् पालानजीवयदनुग्रहदृष्टि-वृष्ट्या" इति सम्यक् ग्लानिशोकादिनिरासेन युगपदेवाजीवयत् स्वस्थानकरोत् तादृशी च शक्तिर्न कृत्रिमा किन्तु स्वाभाविक्ये-वेत्याह—योगेश्वरेश्वर इति । यदुपासनाविशेषेणैव योगेश्वरा-णामपि तत्तच्छक्तिरित्यर्थः ॥ ५० ॥

सुविस्मिताः सुप्तोत्थितेरिव सर्वेषामेकदैव सद्यः समुत्थानात् परस्परं वीक्षमाणा इत्यत्यन्तविस्मयस्वभावात् ॥ ५१ ॥

गोविन्दस्य गोकुलेन्द्रस्यानुग्रहेक्षितमन्वमंसत अनुमित-वन्तः यद्वा विषं पीत्वा परेतस्यात्मनः पुनरुत्थानम् इति एते-व्यघासुरादात्मनां मोचनमनुस्मृत्येति ज्ञेयम् । हे राजन्निति भवा-दृशामेतद्युक्तमेवेति भावः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्विषोदकमुपस्पृश्य दैवोपहतचेतसः मूर्च्छिता व्यसवः प्राण-व्यापाररहिताः हे कुरूद्वह ! निपेतुः तथाभूतान् मूर्च्छितान् पतितांश्च तान् दृष्ट्वाऽमृतसञ्जीवनादियोगाभिज्ञोऽहमिति कृष्णः स आत्मैव नाथो रक्षको येषां तानमृतवर्षिण्या ईक्षया दृष्ट्या समु-ज्जीवयत्सचेतनान् करोति स्म ॥ ४९ ॥ ५० ॥

ताश्च ते च ते "पुमान्स्त्रिया" [१।२।६७] इत्येकशेषः गावो गोपाश्च संप्रतीताः सम्यक्प्राप्ताः स्मृतयो यैस्तथाभूता जलान्तिका-दुत्थाय परस्परं वीक्षमाणाः सुविस्मिताश्चाऽऽसन् ॥ ५१ ॥

विषं पीत्वा सम्परेतस्य मृतस्यात्मनो यत्पुनरुत्थानं तद्-गोविन्दस्यानुग्रहेक्षणकृतमन्वमन्यन्त ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपस्पृश्य आचम्य पीत्वा च ॥ ४९ ॥ ५० ॥

तथाभूतान् मृतप्रायान् ईक्षया दृष्ट्या सम्प्रति स्मृतयः सम्यक् प्राप्तप्रत्यभिज्ञानाः ॥ ५१ ॥

विषं विषमिश्रजलं पीत्वा परेतस्य मृतस्यात्मनः पुनरुत्थानं गोविन्दस्यानुग्रहयुक्तनिरीक्षणकृतमन्वमंसत व्यरूपयन् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ ५२ ॥
(विजयध्वजरीत्या त्रयोदशः)

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वानुपपत्तिसमाधानार्थमाह—दैवेति । देवो भगवान् तस्येदं भाविलीलाशक्तिः वैभवं दैवं व्यसव इव अत्र च तादृशदैव-मेव कारणं ज्ञेयम् ॥ ४९ ॥ ५० ॥ ५१ ॥

पुनरुत्थानं गोविन्दानुग्रहेक्षितं तद्धेतुकमन्वमंसत ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पानफलमाह—विषाम्भस इति । उपस्पर्शनं पानस्नानादिकं स्पर्शमात्रं वा तावतैव सर्वे व्यसवः सलिलान्त एव निपेतुः । ननु, तेषां जीवनादृष्टस्य विद्यमानत्वात् कथं व्यसवो जाताः ? तत्राह—दैवोपहतचेतस इति । तेषां हि तावदेव जीवनादृष्टमतो दैवेनो-पहतचेतसः सलिलसमीपे अर्द्धजल एव निपेतुः यद्यपि दोषो दूरीकृतो धेनुकवधेन पूर्वसञ्चितोऽपि दूरीकर्तव्यः कृष्णेन हि

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

दोषाणां नाशो भवत्यलौकिकसुकृतेन च दिव्यभावोत्पत्तिः विश्वासार्थं सम्बोधनम् ॥ ४६ ॥

ततो भगवत्कृत्यमाह—वीक्ष्येति । स्वभावतोऽपि जानाति तथापि क्रीडायां साधनं वक्तव्यमिति योगेश्वरेश्वर इत्युक्तं योगस्यापि नियन्ता योगेन हि सर्वेषां ज्ञानं भवति तत्राप्ययं नियामकः किम्पुनः स्वज्ञाने वक्तव्य इत्यर्थः । योगेश्वराणामपीश्वर इत्युपदेष्टृणामप्ययं नियामक उक्तः तत्र हेतुः कृष्ण इति सदानन्दः तान् निरोधार्थमानीतान् वै निश्चयेन तथाभूतान् न तु मूर्च्छितान् स्वयमागत्य वीक्षणेन नूतनदेहान् निर्मायामृतवर्षिण्येक्षया समजीवयत् सर्वेऽपि प्राणा अमृता आधिदैविकाः तान् दृष्ट्यैवानीय तेषु तेषु देहेषु वर्षति स्म नन्वेतावत्करणे को हेतुः ? तत्राह, स्वनाथानिति । सम्पगजीवयदिति पुनर्विषसम्बन्धेपि न तेषां काचित् क्षतिः ॥ ५० ॥

तेषां पूर्वस्मात् वैलक्षण्यं तद्रूपताञ्च प्रतिपादयति—त इति । त एवैते जीवाः सम्यक् प्रतीता स्मृतिर्येषाम् अनुसन्धानं प्राप्तमेव भवति परं सर्ववृत्तान्तपुरस्सरं न भवतीति आधिदैविकमावमापन्नाः सर्वस्मृतियुक्ता जाताः अतः समुत्थाय जलसमीपं परित्यज्य प्रदेशान्तरं गताः सुविस्मिता जाताः एतावान् भावो भगवता विशेषतः कारितः अतो विस्मयः भगवद्भावस्य निवृत्तत्वात् ततः सर्व एव परस्परं वीक्षमाणाः प्रत्येकमुद्बोधका इव जाताः ॥ ५१ ॥

अत एवोद्बुद्धज्ञानाः पूर्वसिद्धं सर्वमेव ज्ञातवन्त इत्याह, अन्वमंसतेति । स्वयमेवानुमानं कृतवन्तः प्रायेणैवं भविष्यतीत्युत्प्रेक्षितवन्तः भगवद्भावस्याप्रत्यक्षत्वात् राजन्निति स्नेहसम्बोधनं तदग्रे वक्ष्यमाणं गोविन्दस्यानुग्रहेक्षणं यत्रेति तज्ज्ञातवन्तस्तदाह—विषं पीत्वा परेतस्यात्मनः स्वस्य पुनरुत्थानमिति भगवत्कृपावीक्षणेनैव जातमिति ज्ञातवन्तः एवं ज्ञानपूर्णा देहस्तैः प्राप्त इति प्रथमो निरोधो निरूपितः ॥ ५२ ॥

इति श्रीमद्भागवते सुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे (१)
द्वादशाऽध्यायविवरणम् ॥१२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवो भगवांस्तस्येदं दैवं लीलाशक्तिवैभवं तेनोपहृतबुद्धयः व्यसव इति लीलासौष्ठवार्थे योगमाययैव नित्यानामपि तेषामसूनाच्छाद्य तथा दर्शनात् ॥ ४९ ॥ ५० ॥

ते जलान्तिकात्समुत्थाय सुविस्मिता इति मृता एव वयं केन जीविताः केनाप्यौषधेन विषहरमन्त्रेण वा परस्परमिति सखे ! किन्त्वमेतद्रहस्यं जानासीति प्रत्येकं प्रश्नात् एवं महासन्देहे प्रवर्तमाने भो वयस्या मां मयैवैतत्कारणम् "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति गर्गाचार्यवचनस्मरणात् सम्यगवगतमिति केनाप्युक्ते सति सर्व एव सम्यक् प्रकारेण प्रतीता प्रतीतिविषयीकृता स्मृतिस्तदीया यैस्तथाभूता आसन्नित्यन्वयः ॥ ५१ ॥

अनु अनन्तरमेकमत्येन अजेष्टदेवश्रीनारायणमाविष्टस्य गोविन्दस्य अनुग्रहेक्षितमेव कारणममंसत यस्मात् पीत्वा विषमित्यादि ॥ ५२ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
दशमेऽस्मिन् पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ताः गावश्च ते गोपाश्च तथा ते "पुमान् स्त्रिया" (१।२।६२) इत्येकशेषः सम्यक् प्राप्ताः स्मृतयो यैस्ते तथा ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥१५॥

---

भाषा टीका ।

हे कुरूद्वह ! राजन् ! दैव सों हर्यो गयो चित्त जिनको ऐसे गऊ ग्वालन ने अब वो जल पियो ताके पीछें सबन के प्राण निकस गये जलके किनारे पै सगरे गिरत भये ॥४९॥

योगेश्वरन केऊ ईश्वर श्रीकृष्ण उनकी ऐसी दशा देखिकें, आपही जिनके नाथ ऐसे उन गाय और ग्वालन कों अपनी अमृत वर्षिणी दृष्टि सों देखिके जिवावत भये ॥ ५० ॥

वे सगरे तत्काल स्मृति को प्राप्त होयकें जलके किनारे ते उठिकें बड़े विस्मय को प्राप्त होयकें आपुस में देखन लगे ॥ ५१ ॥

हे राजन् ! ता पीछे सगरे ग्वाल बाल "विसहरे जल पीवने ते हम सबन के प्राण निकस गये, फिर जो अब हम जी उठे या में गोविन्द को अनुग्रह पूर्वक देखनोंई कारण है" ऐसे मानत भये ॥ ५२ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें पन्द्रहवें अध्यायकी, श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १५ ॥

---

(१) अध्यायिकस्य क्षेपकत्वात्तु द्वादशोऽप्ययं ज्ञेयः

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

त्वं ह्यस्य जन्मस्थितिसंयमान् प्रभो ! गुणैरनीहोऽकृतकालशक्तिधृक् ।
तत्तत्स्वभावान् प्रतिबोधयन् सतः समीक्षया मोघविहार ईहसे ॥ ४९ ॥
तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ।
शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥ ५० ॥
अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः ।
क्षन्तुमर्हसि शान्तात्मन् ! मूढस्य त्वामजानतः ॥ ५१ ॥
अनुगृह्णीष्व भगवन् ! प्राणांस्त्यजति पन्नगः ।
स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥ ५२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतो गुणद्रष्ट्रे स्वभक्तस्य गुणामेव पश्यति दोषगन्धमपि यस्तस्मै अत एव स्वेषु भक्तेष्वेव संविदनुभवो यस्य तस्मै ॥ ४६ ॥

लीलापुरुषोत्तमस्य तव लीलामाधुर्याधिक्यमित्याहुः—अव्याकृतः अनिर्वाच्यत्वादव्युत्पादितो प्राकृतो वा विहारो यस्य तस्मै । यद्वा, न व्याकृतो विवाहादिव्यापाररहित एव विहारो यस्य सः सर्वेषां भक्तविशेषाणामेव व्याकृतानां तत्सेवोचितविशिष्टाकृतीनां सिद्धिर्यस्मात्तस्मै अत एव हृषीकेश भक्तसर्वेन्द्रियाकर्षक भक्तहीनेषु मुनये आत्मारामाय अत एव तेषु स्वामीप्सितप्रार्थकेषु, सत्सु मौनशीलिने न किमपि ब्रुवते तेभ्यः सुखं दुःखाभावं च न ददते ॥ ४७ ॥

यतः परेषामुत्कृष्टानां भक्तानाम् अवरेषां निकृष्टानामभक्तानां च गतिं प्राप्यं जानते सर्वाध्यक्षाय सर्वफलाध्यक्षत्वात् तत्तत्समुचितफलस्य दात्रे इत्यर्थः । कर्मफलदातृत्वेऽपि न तव कर्मसम्बन्धः यतोऽविश्वाय प्रपञ्चातीताय तदपि मायाशक्त्या विश्वाय समये विश्वं स्रष्टुं तस्य विश्वस्य द्रष्ट्रे तथैवास्य विश्वस्य हेतुं प्रधानं च चेतयितुं विकारयितुं वा तस्य द्रष्ट्रे "क्रियार्थोपपदस्य" इत्यादिना चतुर्थी ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेदरूपत्वेन नत्वा वेदवेद्यचतुर्मूर्तित्वेन नमन्ति—नम इति । सात्वतामुपासकानां पतये परवासुदेवाय वसुदेवसुताय वसुदेवापत्यतयापि वासुदेव इति प्रसिद्धाय एवम्भूताय कृष्णाय व्यूहाङ्गिने नमः अङ्गमूर्तीर्नमस्यन्ति रामाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय च नम इति ॥ ४५ ॥

अथ मुमुक्ष्वन्तःकरणशुद्ध्यादिहेतुत्वेन बुभुक्षुमन्तःकरणं प्रदीपयति—तथा तस्मै अत एव गुणवृत्तिभिः उपलक्ष्याय ध्यानेन लक्ष्याय अत एव स्वकीयानां ध्यातॄणां मुमुक्षूणां स्वविद् वेदस्वरूपगुणादिविषयकं ज्ञानं यस्मात्तस्मै अत एव गुणाद्रष्ट्रे स्वकीयानां स्वविषयकान्तःकरणसाक्षिणे किञ्च, गुणैर्गुणात्मानं जीवात्मानं बुभुक्षुर्जीवमाच्छादयति स्वज्ञानपराङ्मुखं करोतीति तथा तस्मै च इत्यन्वयः ॥ ४६ ॥

नित्यलोकविहारित्वेन नमन्ति—अव्याकृतविहाराय नित्यलोकविहाराय नमः अनित्यलोकहेतुत्वेन नमन्ति—सर्वव्याकृतिसिद्धये नमः सर्वेन्द्रियप्रेरकत्वेन नमन्ति—हृषीकेश नमस्तेऽस्त्विति । लोकशिक्षायै मुनये मननकर्त्रे मौनशीलिने असत्यवचनवर्जिताय च नमः ॥ ४७ ॥

परावरगतिज्ञाय मुमुक्षुबुभुक्षुमार्गविदे सर्वाध्यक्षाय सर्वाधिष्ठात्रे कार्यस्य कारणं विना स्वरूपनिर्वाहस्याभावात् विश्वाय विश्वाभिन्नाय कारणस्य कार्यत्वावच्छिन्नत्वाभावात् अविश्वाय विश्वभिन्नाय च नमः । नन्वेवंविधं विश्वहेतुत्वं प्रधानादेर्वाऽस्तु इत्यत्राचेतनस्य विश्वहेतुत्वासम्भवात् "तदैक्षत बहुस्याम्" इत्यादिश्रुतिप्रसिद्धो विश्वद्रष्टा भवानेव विश्वहेतुरित्याहुः—तद्द्रष्ट्रेऽस्य च हेतवे इति । "ईक्षतेर्नाशब्दम्" [ १ । १ । ५ ] इति सूत्रमात्राऽनुसन्धेयम् ॥ ४८ ॥

---

भाषा टीका ।

रामरूप कृष्णरूप वसुदेव और प्रद्युम्न स्वरूप अनिरुद्धरूप तथा यादवनके अथवा पञ्चरात्रनिष्ठ भागवतन के पति जो आप तिनकूं नमस्कार हो ॥ ४५ ॥

गुणनके प्रकाश करन वारे, गुणनसो आपे को छिपावन वारे, गुणनकी वृत्तिसे जानवे योग्य, गुणन के देखनवारे, और स्वयं प्रकाश ज्ञानवारे ऐसे आपकूं नमः ॥ ४६ ॥

नहीं विचारमें आवे विहार जिनको और जगत के नामरूपविभाग करवेकी सिद्धि जिनके आधीन, इन्द्रियनके नियंता मुनिव्रत धारण करन वारे सदा मौनको स्वभाव जिनको ऐसे आपको नमः ॥ ४७ ॥

पर अवर गतिके जानिवे वारे सब के अध्यक्ष, विश्व से भिन्न और स्वयं विश्वरूप विश्वके द्रष्टा और उपादान कारण ऐसे आपको नमस्कार हो ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तावद्यथानुमोदनेन नमस्कारैश्च भगवन्तं प्रसाद्येदानीं त्वदधीनानां प्राणिनां कोऽपराध इत्याशयवत्यः प्रार्थयन्ते

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वं हीति अस्य लोकस्य जन्मादि त्वमेव अकृताऽकरोः ततश्च तांस्तान् संस्काररूपेण सतः स्वभावान् घोरत्वादीन् प्रतिबोधयन्नीहसे क्रीडसि । यद्वा, अस्य जन्मादींस्त्वमीहस इत्यन्वयः । कथम्भूतः ? अकृतानादिर्या कालशक्तिस्तां धारयतीति तथा अन्यत् समानम् ॥ ४९ ॥

अतस्तस्य तवैवामूस्तनवस्तन्यन्त इति तनवः क्रीडोपस्काराः तथापि तवाधुना शान्ताः प्रियाः कुतः सतां धर्मपरिपालनेच्छया इहतः प्रवर्त्तमानस्यातस्तानवितुं स्थातुः स्थितस्य ॥ ५० ॥

एवं तवाप्रियाचरणाद्यपराधस्तर्हि सोढव्य इति ॥ ५१—५२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वस्य को दोषः सर्पत्वदातुर्ममैवेश्वरस्येत्याशङ्क्याहुः, त्वमिति पञ्चभिः । हि एव हे विभो, सर्वेश्वर ! अनीहः तत्तदभि-लाषशून्य एव त्वमीहसे करोषि नन्वेतद्विरुद्धं तत्राहुः—सत इति । तत्र जन्मानि सतः प्रकृतिलीनप्राचीनकल्पगतसाधकभक्तजनस्य समीक्षया तदुद्बोधनाय तं द्रष्टुमेव कृतेन प्रकृतीक्षणेनेत्यर्थः । स्थितौ जन्ममध्येऽवतीर्य तमेव सम्यक् कृपापूर्वकं साक्षादवलोकितुमित्यर्थः । संयमे तमेवालिङ्ग्यापि समीक्षितुमित्यर्थः । "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः" इति वाक्यात् तत प्रासुषङ्गिकतयाऽन्येषामपि तत्स्यादिति भावः । ननु, यदर्था समीक्षाऽत एवोद्बुध्यन्तां तत्राहुः—अमोघविहारः यथा कथञ्चिदपि तत्सम्बन्धस्याव्यर्थत्वादित्यर्थः । तेषामप्युद्बोधने युक्तिः अकृतकालशक्तिधृक् कालस्वरूपया स्वाभाविकशक्त्येत्यर्थः । तथा गुणैरुपलक्षितान् स्वभावान् प्राचीनकर्मसंस्कारान् प्रति बोधयन्निति तस्मात् तथा कृतकर्मणोऽस्यैव दोषः न तु तव ईश्वरस्तु पर्जन्यवत् द्रष्टव्य इति न्यायादिति भावः ॥ ४९ ॥

यस्मादेवं साम्यं तस्मात्तस्यैव त इत्यादि त्रिलोक्यां वर्त्तमानाः सर्वा एवेत्यर्थः. अशान्ता घोराः उत अपि मूढयोनयोऽपि हि निश्चये विशेषतस्त्वधुना शान्ता इत्यादि एवमपीदृशदुष्टानुग्राहकस्य तव परमकारुण्यमेव तादृशेऽपि स्वस्यापराधिनोऽस्य परमपामरत्वमेवेति भावः । ते इत्यस्य वाक्यभेदान्न पुनरुक्तिदोषः मध्यमं तु ते पदं शान्ता इत्यस्य विशेषणम् ॥ ५० ॥

अतस्त्वया क्षन्तुं युज्यत एवेत्याहुः—अपेति । भर्त्रा पोष्टृत्वात् पितृतुल्येन स्वप्रजाकृतोपराधः सकृदपि सोढव्यः सोढुं योग्यः तस्मात् क्षन्तुमित्यादि त्वन्तु शान्तात्मत्वात् सर्वथा क्षन्तुमर्हसीत्यर्थः । किञ्च, मूढस्य तामसजातिस्वभावेन ज्ञानहीनस्य अत एव त्वामजानतः त्वदद्भुतलीलादिदर्शनेनापि त्वां ज्ञातुमशक्नुवतः यद्वा सकृदपि यो मत्तो तेनापि त्वं तु स्रष्टृत्वादिना नित्येश्वरः किमुतेति ॥ ५१ ॥

किं वक्तव्यं क्षमा कार्येति अनुग्रह एव कर्त्तुं योग्य इत्याहुः—अन्विति । कुतः ? भगवन्, हे परमकृपालो ! यद्वा, हे सर्वेशेति ! निजकारुण्यमहिमानं स्वमायावैभवं च तत एव जीवानामस्माकं दैन्यं च त्वं जानास्येवेत्यर्थः । एतच्चाखिलस्वेनेत्याहुः—प्राणानिति । यद्वा, "अन्नं हि प्राणिनां प्राणाः" "आर्त्तानां शरणं त्वहम्" इत्यादिनिजप्रतिज्ञां स्मरस्वेवेत्यर्थः । आर्त्तत्वं दर्शयन्ति—प्राणानिति । अहो बत न क्रियतां वास्मिन्ननुग्रहः अस्मास्ववश्यं कर्त्तुमुपयुज्यत इत्याहुः—स्त्रीणामिति । साधुभिः शोच्यानां जात्यैव स्वातन्त्र्याद्यभावात् इति परमदैन्यं दर्शितम् यद्वा, साधु यथा स्यात् पुनरनपराधत्वादिसम्पादनेनेत्यर्थः । पतिरेव प्राणाः जीवनं प्रकर्षेण शरीराक्षतत्वादिना च दीयताम् ॥ ५२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनीहः सङ्कल्पातिरिक्तव्यापारशून्यः अकृतकालशक्तिधृक् अनादिकालाख्यशक्तिधृक् ॥ ४९ ॥

अमरा देवादयः शान्ताः सत्त्वप्रचुराः अशान्ताः रजःप्रचुराः ॥ ५०—५१ ॥

पतिरेव प्राणाः ॥ ५२ ॥ ५३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं शरणत्वोपयुक्तगुणविशिष्टं स्तुत्वाऽथ "अविज्ञाताः कुमारकाः" इति श्रुत्युक्तरीत्या त्वत्कुमारप्रायस्य त्वच्छरीरभूतस्यास्मद्भर्तुः कदाचिदननुकूलस्य स्वशरीरस्येव स्वपुत्रस्येव चापराधः करणकलेबरादिप्रदानेनाखिलजीवोज्जिजीवयिषया सर्वजगदुदयविभवलयलीलेन सर्वशरीरेण विपुलापराधवत्त्वेऽपि किञ्चिदानुकूल्ययुक्तजीवोज्जिजीवयिषया कृतावतारेण त्वया सोढुमुचित इति क्षमापयन्त्यस्तावद्भर्तृप्राणरक्षां कैङ्कर्यञ्च प्रार्थयन्ते—त्वमिति पञ्चभिः । हे विभो ! त्वं ह्यनादिकालाख्यशक्तियुक्तः अनीहः सङ्कल्पेतरव्यापारशून्यः अनेन "अकलितश्रम एव सृजत्यसौ" इति वचनार्थोऽभिप्रेतः गुणैः रजस्सत्त्वतमोभिरस्य जगतो जन्मस्थितिलयान् कुर्वन्निति शेषः । तत्तत्स्वभावान् रजस्तमस्तदुभयस्वभावानपि सतो जीवान् समीक्षयानुग्रहगर्भया दृष्ट्या दृष्ट्वा प्रतिबोधयंस्तावत्-दण्डनेन प्रबुद्धान् कुर्वन् अप्रतिहतजगद्व्यापाररूपविहारश्चेष्टसे यद्वा, समीक्षया त्वं "बहु स्यां प्रजायेयेति" इत्युक्तया सङ्कल्पात्मिकया दृष्ट्या अनीहस्तद्व्यतिरिक्तव्यापारशून्यः प्रलयदशायां तत्तत् स्वभावान् तत्तत्कर्मवासनात्मकस्वभावसमाश्रयुक्तान् सङ्कुचितज्ञानान् असत्प्रायान् सतो जीवान् प्रतिबोधयन् स्वाराधनोपयुक्तकरणकलेबरादिप्रदानेन विकासितज्ञानान् कुर्वन् एवंविधं महोपकारं कर्तुमिति भावः । अप्रतिहतजगद्व्यापारात्मकविहारोऽस्य जगतो जन्मादीन् ईहसे चेष्टसे करोषीति यावत् तत्तत्स्वभावान् प्रतिबोधयन्नित्यनेन सर्वजीवसाधारण्येन तद्विषयकमहोपकारैकशीलत्वं सूचितम् एवमपराधानवेक्षणेन केवलमुपकारैकशीलस्य तव कियानयमपराध इति भावः ॥ ४९ ॥

जन्मादीनि ईहस इत्यनेन सर्वजीवान् प्रति तस्य पितृस्थानीयत्वं सूचितं किञ्च तस्यैव प्रतिबोधयतोऽस्य जन्मादीनि ईहमानस्य ते तव त्रिलोक्याममूः सर्वाः शान्ताः सात्त्विक्यः अशान्ताः राजस्यः मूढयोनयस्तामस्यश्च प्रजास्तनवः देहाः आधेयाविधेयाः शेषाश्चेत्यर्थः । सर्वा अप्यनुग्राह्या एवेति भावः । ननु, सर्वासामनुग्राह्यत्वे जगद्व्यापारोच्छेदप्रसङ्ग इत्यत्राहुः, यद्यप्येवं तथापि स्यात्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्थितिकर्तुरत एव सतां धर्मपरिपालनेच्छया ईहतः प्रवर्त्तमानस्य कृतावतारस्येति यावत् ते तव शान्तास्तनवः भवितुं रक्षितुं प्रिया इष्टा हि सदा सकलजन्मसु सापराधा अप्यधुनाऽपराधविरिरसवः प्रियाः अतोऽस्यानुग्राह्यत्वेऽपि न जगाद्व्यपारोच्छेदप्रसङ्ग इति भावः ॥ ५० ॥

अतोऽयं यावच्छान्ति दण्डितोऽप्यधुनोपशान्तः पुत्रवत् सोढव्य एवेत्याहुः—अपराध इति । भर्तुरस्मद्भर्तुरपराधः सकृत् सोढव्यः इतः परं पुनरपराधः कृतश्चेन्न सोढव्यः इत्याभिप्रायेण सकृदित्युक्तिः स्वप्रजाकृतः स्वपुत्रकृतत्वाच्च सोढव्य इत्यर्थः । अनेन भगवतः पितृस्थानीयत्वं सर्वजीवानां पुत्रस्थानीयत्वञ्चाभिप्रेतं किञ्चाज्ञानकृतोऽपराधः क्षमावशेन सह्य एव सर्वत्रेति लोकपरिपाटीमभिप्रेत्याहुः—क्षन्तुमर्हसीति । अधुना त्वयि शान्त्या भवितव्यम् इत्यभिप्रायेण शान्तात्मन्निति संबोधनं, यद्वा, कृतापराधेष्वप्यधुना शान्तेषु त्वदानुकूल्योपयुक्तशान्तिप्रवणात्मा अनुग्रहप्रवणं मनो यस्य तथाभूतेति संबोधनं मूढस्यात एव त्वामजानतः क्षन्तुमर्हसि अपराधमिति विभक्तिविपरिणामेनानुषङ्गः प्रकृतत्वाच्छेषो वा ॥ ५१ ॥

हे भगवन् ! अयं पन्नगः सर्पः प्राणांस्त्यक्ष्यत्यतोऽनुगृहाण साधुशोच्यानां साधुभिर्दयनीयानां स्त्रीणामस्माकं पतिरेव प्राणाः स प्रदीयताम् ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रातिस्विकजीवाभीष्टदातृत्वात्तदूद्रष्टृ इति । प्रपञ्चस्य मूलकारणं हरिरित्युक्तं तत्स्पष्टयितुमाह—त्वं हीति"सत्यधर्मा सत्यकर्मा" इति श्रुतेः । अमोघविहारस्त्वम् अत एवानीहोऽक्लिष्टकर्मा त्वं सत्त्वादिगुणैरस्य जगतो जन्मादीनीहसे हि यस्मात् "देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहा"इति श्रुतेः । तस्मात्तव सत्यप्रपञ्चस्रष्टृत्वस्वभावात् समीक्षया सम्यग्ज्ञाने न नोऽस्माकप्रतिबोधयश्चेत्यन्वयः । यथा तव जगत्स्रष्टृत्वं स्वभावस्तथास्मत्प्रतिबोधनमपि स्वभावोऽस्तित्याशयः । लोकेस्वरूपशक्त्यभावाद्वराद्विना मायया वाऽन्यसहायेन वा अमेण कर्तृत्वं न तथा तवेत्याशयेनाह—अकृतेति । कालः कारणं ज्ञानं वा अकृतावरादिना नान्यनिमित्तं स्वरूपमिति यावत् एवंविधां शक्तिं धारयसीति स्वरूपभूतज्ञानक्रियाशक्तिधर इत्यर्थः तदुक्तं "हरेः स्वरूपशक्तिर्या कालशक्तिरुदीर्यते । सदा सर्वगुणात्मत्वात्"इति यथा स्वाधीनत्वात्सत्त्वादिगुणैः सृष्टिं करोषि तथा स्वनियतदुर्गावायुभ्यां संहारस्थिती करोषीत्याशयेनोक्तम् अकृतेति तयोरपि कालाधीनत्वेन कालशब्दवाच्यत्वादित्यर्थः "दुर्गावाय्ववरा ततः"—

> "सर्वसंहारकारित्वाद्वायुः सर्वस्य जीवनात् ।
> कालाभिमानिनावेतौ दुर्गावायुश्च कीर्तितौ ।

इति च ॥ ४९ ॥

विश्वायेत्यादिना हरेर्जगदात्मकत्वमुक्तमिति अन्यथाशङ्कानिरासाय स्थावरजङ्गमस्य पृथक्कृत्य वैविध्यकथनेन मिथोऽपि भेदस्तात्त्विक इति दर्शनार्थं तस्य भगवत्प्रतिमात्वेन तत्त्वतः स्तत्त्वेन हरेरतिप्रियता : प्रीतिर्भवतीति भावेनाहुः—तस्यैवेति । यस्त्वं "नमस्तुभ्यं भगवते" इत्यादिना प्रसक्तस्तस्य ते तवैवामूस्तनवः प्रतिमास्थानीयाः शान्ता अशान्ता मूढयोनय इतीति यास्त्रिधा भिन्ना अमूरित्यर्थः । त्रिलोक्यां जङ्गमसंज्ञा इति शेषः अत्रापि तारतम्यमस्तीत्याहुः शान्ता इति सुखान्तं सुखस्वभावमेवाप्नुवन्तीति यत् तस्मात् शान्ता देवाः सतामप्यवितुः ते तव प्रियाः "परा पूर्वेषां सख्यावृणक्ति वितर्तुराणो अपरेभिरेति"इति श्रुतिः । प्रियस्यापि तारतम्यविशेषद्योतको हिशब्दः प्रियं द्विविधम् अन्तर्बहिश्चेति तत्रान्तः प्रियाः सन्तः बहिः प्रिया असन्तः अत्रापि कश्चन विशेषः संहारहेतुत्वादसन्त इवदन्तः प्रिया इव स्थितिहेतुत्वात्सन्तो विशेषान्तः प्रिया इत्यतोऽधुनेति विशेषणं तदुक्तं "अन्तः प्रियं बहिश्चेति द्विधा प्रियमुदाहृतम्" इत्यादि देवादीनां शान्तत्वादिकं "सुखान्तं प्राप्नुयुर्यस्माद्देवाः शान्ता उदीरिता" इत्यादिस्मृतिसिद्धम् अशान्ताः मानुषाः प्रोक्ता मूढयोनयोऽसुरा इत्यर्थः । भवनादिकर्म प्रवर्तनं च प्राणमुखेनेत्याहुः, स्थातुरिति । कर्मप्रवर्तनार्थं सर्वशरीरेषु स्थातुरीहतः "ईह चेष्टायाम्" इतिधातुः चेष्टकत्वमीहशब्दस्य प्रवृत्तिनिमित्तं प्रवनशब्दस्यापि तदेवात ईहतः प्राणस्य सकाशात् कर्मपरीप्सया कर्मपालनेच्छया पालनं प्रवर्त्तनं तदिच्छया प्राणस्य सकाशात् कर्मप्रवर्तनमिच्छति भगवानित्यतः स महाविभुरित्यर्थः तदुक्तं "वायोः सकाशाज्जगतः प्रवृत्तिं कामयत्यजः" इत्यादि "प्राणस्य प्राणम्" इति श्रुतिश्च शब्दगृहीता ॥ ५० ॥

सोढव्यः क्षन्तुमर्हसीति द्विर्वचनमादरार्थं स्वचापल्यप्रकटनार्थं च शान्तानां देवानामात्मन् स्वामिन् मूढस्येत्यस्य विवरणं त्वामजानत इति ॥ ५२—५३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वस्य को दोषः? सर्पत्वदातुर्ममैवेश्वरस्येति व्याहरन्त आहुस्त्वमिति पञ्चभिः । हि एव हे विभो ! सर्वेश्वर अनीहस्तत्तदभिलाषशून्य एव त्वमीहसे करोषि नत्वेतद्विरुद्धं तत्राहुः सतः प्रकृतिलीनप्राचीनकल्पगतः साधकभक्तवृन्दस्य समीक्षया तदुद्बोधनाय तद्दृष्टमेव कृतेन प्रतीक्षयेनेत्यर्थः । "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः" इति पाद्मात् तत आनुषङ्गिकतयाऽन्येषामपि तत् स्यादिति भावः । तस्मात्तथा कृतकर्मणस्यैव दोषो नतु भवेदिति भावः ॥ ४९—५६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वरूपेण नत्वा विज्ञापनार्थं प्रथमतोऽस्यापराधस्तथा नास्तीति वक्तुं त्वमेव सर्वस्वभावानां बोधक इत्युपपादितमाहुः—त्वं ह्यस्येति । त्वमेव हि अस्य जगतः जन्मस्थितिसंयमान् गुणैरकृत कृतवान् स्वयमनीह एव चेष्टामकुर्वन्नेव तादृशस्य करणे हेतुमाह, कालशक्तिधृगिति । कालशक्तिं बिभर्तीति यदैव भगवता कालशक्तिराधिष्ठिता तदैव गुणक्षोभं करोति सिंहासनस्थितपुत्रिकावायुमिव ततः सर्वाण्येव कार्याणि भवन्ति गुणा उपादानं कालो निमित्तं स्वभावो नियामकस्तमाह—तत्त्वस्वभावान् प्रतिबोधयसीति । तस्य तस्य वस्तुनः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वभावाः तत्तत्कार्यनियामकाः तेषां प्रतिबोधश्च कालेनैव क्रियते स्वभावान्तःस्थितस्वरूपेण वा एवं कुर्वन् सतः समीक्षया ईहसे लीलां करोषि तव कार्यद्वयम् अनवतीर्णेन भवति समारूढे कालशक्तिगुणाः स्वभावश्चोद्भूता भवन्ति ततः सर्वमेव जगद्भवति परमनेकविधं तस्मिन्नपि च जगति सतः सर्वस्यैव सन्मार्गस्य सतां च समीक्षया परिपालनपूर्वकसरूपतावेक्षया लीलां च करोषि तेन च तेषां सर्व एव पुरुषार्थाः सिद्धा भवन्ति, जगच्च रक्षितं भवति न च पुनः पुनः कर्तव्यं पतति तत्र हेतुमाहुः—अमोघविहार इति । न मोघो व्यर्थो विहारो यस्य अनेनोभयत्रापि हेतुरुक्तः ॥ ४९ ॥

अस्य दुष्टस्वभावत्वे भगवतश्च शिक्षकत्वे हेतुमुक्त्वा कार्यमाहुः—तस्यैव ते ऽमूरिति । यदा भगवान् स्वार्थमेव सर्वं करोति तदा सर्वाण्येव शरीराणि भगवल्लीलौपयिकत्वात् भगवत्तनवो भवन्ति ते च त्रिविधा शान्ताः सात्त्विका अशान्ताः राजसा विक्षिप्ताः मूढयोनयोऽपि तामसास्त्वेव तनवः द्वितीयसर्गप्रकारोऽत्रोपयुज्यते दैत्यांशानां तत्रैवोपकार इति मूढयोनिषु तथात्वमनुचितमित्याशङ्क्य उतेत्युक्तं तथा सति कथं भगवदवतारलीला तत्राह—शान्ताः प्रियास्त इति । अधुना ऽवितुः पालकस्य धर्मपरीप्सया धर्मरक्षेच्छया ख्यातुः ख्यानेच्छोः शान्ता एव सात्त्विका एव प्रियाः नत्वतिरिक्ता उभयविधाः ते हि नाशकाश्च उत्पादका अप्यनभिमता अधिकभारजनकत्वात् नाशकास्तु विरोधिन एव अनेनोभयमपि कार्यमुक्तम् ॥ ५० ॥

तथाप्यस्यापराधः सोढव्यः इत्याहुः—अपराध इति । यद्यपि साम्प्रतमन्याभिनिवेशः तथाप्यस्मदादीनामपि भवानेव पतिः अतः अनवसरे कार्यकरणादपराधः सोऽपि सोढव्यः स्वस्यैव प्रजाभिः पालनीयाभिः कृत इति अन्यथा पालकत्वं न स्यात् कार्यनिर्वाहार्थं च सकृदेव सोढव्यः ज्ञापनार्थः स्वस्य प्रजाभिः कृतः पुनरपराधे ज्ञात्वा करणान्मारणमेवोचितं विरोधित्वात् अत एव क्षन्तुमर्हसि क्षमायामुपायान्तरमप्याह, शान्तात्मन्निति । शान्त आत्मा यस्य सत्त्वनिधानत्वात् क्षोभाभावात् दण्डेन कार्यस्य सिद्धत्वाक्रमे प्रतिबन्धकत्वाभावाच्च सोढव्यः तत्त्वज्ञानात् कृतमिति कथमवगन्तव्यं ? ज्ञातकरणपक्षे तु सकृदपि न सोढव्य इत्याशङ्क्याहुः मूढस्येति स्वभावत एवायं सर्पयोनिस्तामसः अतो मौढ्यात् न त्वां जानाति अज्ञानात् कृतमकृतप्रायम् ॥ ५१ ॥

क्षमायां यत्कर्तव्यं तदाहुः—अनुगृह्णीष्वेति । अनुग्रहः कर्तव्यः नन्वनुग्रहे को हेतुस्तत्राह, भगवन्निति । तवैव गुणो हेतुभूतो न त्वस्य तर्हि सर्वस्यैव प्रसादो भवेदित्याशङ्क्य निमित्तमाहुः, प्राणांस्त्यजतीति कृपावसरोऽयं यथा कृपायां भक्त्यादिर्हेतुः एवं समयोऽपि अत एव ग्रहणादिकाले सेवारहितायापि यथा दीयते तथा कृपा विधेयेत्यर्थः । पन्नग इति जीवमात्रमित्यल्पता दयायां हेतुः नन्वल्पत्वादेव किमनेन जीवितेनेत्याशङ्क्याहुः—स्त्रीणामिति । स्त्रीणामस्माकं पतिरूपोऽयं प्राणाः प्रकर्षेण दयितां स्त्रीणां प्राणरक्षा सर्वथा कर्तव्येति । ननु, स्त्रियोऽपि दुष्टाः "शालावृकाणां हृदयान्येता,, इति श्रुतेः । इत्याशङ्क्याहुः—साधुशोच्यानामिति । सत्यं दुष्टाः स्त्रियः परं स योनिदोष एव न तु जीवदोषः अतः साधवस्तं जीवं शोचन्ति कथमयं स्त्रीशरीरे पतित इति यत्र सर्वदा भयं पराधीनता मुख्यभावश्च भवांश्च साधूनां परिपालकाः अतस्तेषां शोकाभावायास्मत्प्राणा रक्षणीया इति भावः ॥ ५२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वसृष्ट्या प्रधानं चेतनयुक्तं विकृतं च कृत्वा मम किं फलमिति चेत्तत्राहुः—त्वमिति । सतः प्रधानस्य समीक्षया अस्य विश्वस्य पूर्वकल्पान्ते तत्रैव लीनस्य तत्तत्स्वभावान् तांस्तान् संस्काररूपेण सतः स्वभावान् घोरत्वादीन् प्रतिबोधयन् जन्मादीन् गुणैरज आदिभिः ईहसे करोषि गुणानां कर्तृत्वस्य त्वय्युपचाराद्वस्तुतस्तु त्वमनीहः अकृता क्षणादिर्या कालशक्तिस्तां धारयतीति सः एवञ्च प्रधानगत ईक्षणरूपस्तव विहारोऽमोघः ॥ ४९ ॥

केनाभिप्रायेणैवं स्तुध्वे इति चेत् तत्राहुः—तस्यैव पूर्वोक्तलक्षणस्य तव विश्वहेतुत्वाद्विश्वरूपस्य अमूः शान्ताद्यास्तनवः शान्तादिस्वभावान् त्वमेव प्रतिबोधयसि चेत्तत्र घोरस्वभावोऽयं कालियःस्वस्वभावं क्रौर्यं कथं त्यक्तुं शक्नोत्विति भावः तथापि तवाधुना शान्ताः प्रियाः कुतः ? सतां धर्मपालनेच्छया ईहतः प्रवर्तमानस्य अतस्तानवितु स्थातुः स्थितस्य ॥ ५० ॥

अतः शान्तलोकविप्रियकारित्वलक्षणोऽस्यापराधोऽभूदेव स च सकृत् सोढव्य इति अधुना दण्डयित्वा शिक्षितोऽप्ययं त्वदीयशान्तजनेषु यदि पुनरप्यपराध्यति तदा न सोढव्य इति भावः । क्षन्तुमर्हसीत्यर्थपौनरुक्त्यमतिवैव्यग्र्यव्यञ्जकं क्षन्तुमित्यपराधमिति शेषः । शान्तात्मन्निति क्षन्तृत्वे हेतुः मूढस्याजानत इति क्षन्तव्यत्वे हेतुः ॥ ५१ ॥

ननु, चिकित्साव्य साध्वेव कृता रोगो गत एव किन्तु रोगशेषदूरीकरणार्थं सप्ताष्टाः पार्ष्णिप्रहारा अवशिष्यन्ते तेषु क्षमातिर्दीयतामित्यत आहुः—अनुगृह्णीष्वेति । सदोषशेषोऽनुग्रहामृतप्रदानेनैव नाशनीयो न तु दण्डनीत्यौषधपानेन यतोऽसौ सम्प्रति प्राणांस्त्यजति । ननु, त्यजतु प्राणान् किमनेन विषोल्बणेन सर्पशरीरेण अतः परं दिव्यदेहो मद्भक्त एव भविष्यति तत्राहुः—स्त्रीणामिति । सुन्दरीणामस्माकं वैधव्ये सति कश्चिदन्यः पापिष्ठः सर्पो बलात् कामयिता भविष्यतीत्यतः शोच्यानामस्माकमयमेव सम्प्रत्युत्पन्नवैशारद्यताकत्वात् प्राणाः स्नेहास्पदीभवन् प्राणतुल्यः ॥ ५२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेवोपपादयति—त्वमिति । हे विभो सर्वगत ! अकृतकालशक्तिमनादिकालाख्यशक्तिं धारयतीति तथा अनीहः अपूर्णत्वरागित्वव्यापारित्वादिदोषावहचेष्टाशून्यस्त्वं तेषां तेषां सृष्ट्यानां सतः सूक्ष्मरूपेण सत्यानेव स्वभावान् समीक्षया प्रतिबोधयन् स्वशक्तिगुणैः अस्य विश्वस्य जन्मादीन् समीहसे इत्यन्वयः ॥ ४९ ॥

ननु, विश्वरूपः सर्वगतः सर्वहेतुश्चाहमेव चेत्तर्हि निग्रहानुग्रहौ निर्विषयौ भवतः नेत्याहुः यद्यपि तवैव विश्वरूपस्य सर्वहेतोः सर्वगतस्य ते शान्ताः सात्त्विकाः अशान्ताः राजसाः

विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया ।
यच्छ्रद्धयाऽनुतिष्ठन् वै मुच्यते सर्वतो भयात् ॥ ५३ ॥
श्रीशुक उवाच ।
इत्थं स नागपत्नीभिर्भगवान् समभिष्टुतः ।
मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः ॥ ५४ ॥
प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम् ।
कृच्छ्रात्समुच्छ्वसन् दीनः कृष्णं प्राह कृताञ्जलिः ॥५५॥
वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः ।
स्वभावो दुस्त्यजो नाथ ! लोकानां यदसद्ग्रहः ॥ ५६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मूढयोनयस्तामसाः अमूः प्रजाः तनवो देहाः तथापि ते तव ये सन्तस्तेषां सतां धर्मपरीप्सया धर्मपालनेच्छया अधुना ईहतस्तांश्चाविर्तुं स्थातुः स्थितस्य ते शान्ताः प्रियाः अनुग्रहविषयाः तामसा राजसास्तु दण्ड्या एवेति भावः ॥ ५० ॥

एवं चेदसौ तमोजनिर्दण्ड्य एवेति प्राप्ते प्रार्थयन्ते अपराध इति त्रिभिः ॥ ५१ ॥ ५२ ॥

---

### भाषा टीका ।

हे प्रभो ! आप कछु चेष्टा न करके या जगत के उत्पत्ति स्थिति संहार कों अपने गुणन सों करो हौ, कालशक्ति कों धारण करके केवल अपनी सङ्कल्परूप इच्छा सें तीन२ वस्तुन के स्वभावन को प्रबोध करत अमोघ विहार वारे आप क्रीडा करौ हौ ॥ ४९ ॥

ब्रह्मा रुद्र आदि जो तीन मूर्त्ति हैं सो आपही की ये शान्त घोर और मूढ तीन प्रकार की तनु हैं । परन्तु धर्म की रक्षा के निमित्त चेष्टा करनवारे या समें सज्जनन की रक्षा के निमित्त पालक रूप धारण करन वारे ऐसे शान्त मूर्त्तिजो आपहौ तिन कूं शान्त पुरुषही प्रिय लगें हैं ॥ ५० ॥

हे भगवन् ! आप अनुग्रह करो अब यह पन्नग (सर्प) प्राणन कूं छोडे है, सज्जननको शोचिवें योग्य जो हम स्त्रीजन हैं तिन सबन कूं आप पति रूप प्राण देवे कूं योग्य हौ ॥ ५१ ॥

जो प्रजा को पालक स्वामी है, वाकूं अपनी प्रजा को एक बार को कियो अपराध अवश्य सहनो योग्य है, तासों हे शान्त स्वरूप ! आप कूं नहीं जानन वारे या मूढ के अपराध कूं आप क्षमा करवे योग्य हैं ॥ ५२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

युष्मदनुग्रहेऽप्येषां मृत्युरेवेति चेत्तत्राहुः-विधेहीति । त्वदाज्ञया प्राणिनो मायामेति भावः ॥ ५३—५५ ॥

यदसद्ग्रह इति यतः स्वभावोऽसद्ग्रहरूपः । यद्वा, यतः स्वभावादसति देहादौ ग्रहः स दुस्त्यज इति ॥ ५६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तवाज्ञया यदनुष्ठेयं विधेयं तत् किङ्करीः प्रति समादिश यद्वा, तवाज्ञयैव तव किङ्करीणां सतीनामस्माकमनुष्ठेयं तवाज्ञयेत्यस्य परेणान्वयः । यद्यस्मात् तवाज्ञया अनुतिष्ठन् कर्म कुर्वन् यदनुष्ठेयमिति वा वै प्रसिद्धौ सर्वतः सर्वस्मादपि सर्वत्रापि वा । यद्वा, सर्वतो भयात् मुच्यते इति भगवल्लोकप्राप्तिरेवाभिप्रेता ॥ ५३ ॥

स स्तुतिमात्रप्रीतः श्रीवृन्दावनस्वच्छन्दक्रीडारसिको वा यद्वा, परदुःखकातरो भगवान् श्रीकृष्णः अङ्घ्रिभ्यां कुट्टनैः प्रहारैर्भग्नशिरसम् अत एव मूर्च्छितं तत्याज ॥ ५४ ॥

निजदुर्मदादिदोषं हरतीति हरिं यतः कृष्णं साक्षात् भगवन्तं दीनश्चासौ गताभिमानो वा आर्त्तत्वादेवाशक्त्या पत्नीवन्न दण्डवत् प्रणनामेति ज्ञेयं प्रकृष्टं दीनजनानां वक्तुमुचितं प्राहेति अतो भगवति निजदोषारोपणमिव त्वत्कारित्वते तदपि दैन्येनैव स्वस्य तदधीनतायामेव तात्पर्य्यात् ॥ ५५ ॥

तथैवाह-वयमिति चतुर्भिः । सहोत्पत्त्या सहजजातिस्वभावेनैवेत्यर्थः । नाथ, हे ईश्वरेति तमपि त्वं त्याजयितुं समर्थोऽसीति भावः ॥ ५६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अङ्घ्रिकुट्टनैः मूर्च्छितमित्यन्वयः ॥ ५४-५५ ॥
असद्ग्रहः दुष्टपिशाचतुल्यः ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

युष्मदनुग्रहोऽन्येषां मृत्युरेवेति चेत्तत्राहुः—विधेहि त्वदाज्ञया यत्तव किङ्करीणामस्माकमनुष्ठेयं तद्विधेहि अनुष्ठेयं विशिषन्ति, स पुमान् कालियो यदनुष्ठेयं श्रद्धयाऽनुतिष्ठन् भवात्प्रकृतान्मृत्युभयात् मुच्यते यथाऽस्मत्तो लोका न भीताः स्युर्यथा चायं मृत्युभयान्मुच्येत तादृशमनुष्ठेयं कर्म आज्ञापयेत्यर्थः ॥ ५३ ॥

एवं स भगवान् कृष्णो नागपत्नीभिरभिष्टुतः याचितश्चाङ्घ्रिसङ्घट्टनैर्भग्नशिरसं मूर्च्छितं च कालियं विससर्ज ॥ ५४ ॥

ततः शनकैः प्रतिलब्धानीन्द्रियाणि प्राणाश्च येन तथाभूतः कालियः कृच्छ्रादत्यायासात् श्वासं मुञ्चन् कृताञ्जलिः हरिं प्राह ॥ ५५ ॥

उक्तिमेवाह—वयमिति त्रिभिः । वयमुत्पत्त्या सह उत्पत्तिप्रभृति खलाः दुष्टास्तामसा दीर्घो मन्युर्येषां तथाभूताश्च वयमिति तिर्यगभिप्रायेण निर्देशः । अत एव "वयं च तत्र भगवन्"इत्यनेनापौनरुक्त्यम्, हे नाथ ! भूतानां स्वभाव औत्पत्तिको गुणः दुस्त्यजः यतः स्वभावः असद्ग्रहः दुष्टपिशाचतुल्यः अतो दुस्त्यजः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अङ्घ्रिकुट्टनैः अङ्घ्रिमर्दनैः ॥ ५४ ॥ ५५ ॥

यदसद्ग्रहो यो दुराग्रहः ॥ ५६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, मुक्तिः सर्वेषामपेक्षिता, अतः प्राणरक्षापेक्षया मुक्तिरेव कथं न प्रार्थ्यते ? इत्याशङ्क्याहुः—विधेहि ते किङ्करीणामिति । वयं ह्यात्मनिवेदनेन तव दास्यो जाताः तासां च स्वधर्मस्तवाज्ञापरिपालने यतस्ते किङ्करीभिस्त्वाज्ञैवानुष्ठेयं ततः किमत आह—यत् तवोक्तं श्रद्धयाऽनुतिष्ठन् सर्वत एव भयान्मुच्यते मुक्तिस्तु तवाज्ञाकरणेनापि भविष्यति एवमेवं मुक्तौ दास्यमात्मनिवेदनं च व्यर्थं स्यात् भक्तिरसश्चाननुभूतः स्यात् अतोऽयं देय इति प्रार्थना ॥ ५३ ॥

ततो यत्कृतवांस्तदाह—इत्थमिति । एवंप्रकारेण सम्यगभिष्टुतः मूर्च्छितम् अन्तःखिन्नं भग्नशिरसं बहिःखिन्नं अङ्घ्रिकुट्टनैरेव विससर्ज स्वयं जले जलक्रीडामेव कुर्वन् पादप्रहारेणैव तं क्षीणां स्थाने प्रक्षिप्तवानित्यर्थः ॥ ५४ ॥

ततो यज्जातं तदाह—प्रतिलब्धेति प्रतिलब्धानीन्द्रियाणि प्राणाश्च येन प्राणग्रहणं बलार्थं मूर्च्छितस्यार्द्धसम्पत्त्या इन्द्रियाणां प्राणानां च पुनरागमनम् अतः प्रतिलम्भः कालीय इति प्रसिद्धिः सद्बुद्धिहेतुः शनकैरिति धीरता सूचिता हरिमिति निर्भयत्वं स्वस्य जीवनाशा च अतो वाक्यानिःसारणार्थं कृच्छ्रात् कष्टेन सम्यगुच्छ्वसन् यथाशास्त्रं देवरूपं गृहीत्वा कृताञ्जलिः सन्नाह ॥ ५५ ॥

स्वापराधं निवेदयति—कृपार्थं वयं स्वभावत एव खलाः परोपद्रवकारिणो दुष्टस्वभावाः तदुत्पत्तिसिद्धोऽयं दोषः न स्वागन्तुकः अतः शिक्षा व्यर्था अनिवर्त्यदोषत्वात् सर्वथा मारणपक्षे उत्पादनमेव व्यर्थं स्यात् तथापि शिक्षया कश्चन गुणो भविष्यतीत्याशङ्क्याह—तामसा इति । तामसास्तु ज्ञानरहिताः अनुसन्धाने विद्यमाने हि शिक्षणमुपकाराय भवति तामसानां तु नानुसन्धानम् । किञ्च, प्रत्युतापकार एव भवति यतो वयं दीर्घमन्यवः ॥ ५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भवत्वयं युष्मत्पतिर्दण्ड्य एव किन्तु यन्मया आदिश्यते तत्कर्तव्यमिति तत्र भयश्चममवश्यमेवेत्याहुः—विधेहीति । तत्रेतः स्थानादन्यत्र शीघ्रं यातेत्यग्रे व्यक्तीभविष्यति ॥ ५३ ॥

अङ्घ्रिभ्यां कुट्टनैः प्रहारैर्भग्नशिरसं कालियं तत्याज तच्छीर्षेभ्यः सहसैवावप्लुत्य तदग्रे तस्थावित्यर्थः ॥ ५४ ॥

कृच्छ्रादतिकष्टादेव कथञ्चित् कृताञ्जलिः सर्वाङ्गव्यथावत्त्वात् नतु भूमौ दण्डवन्निपत्य प्रणामसमर्थ इति भावः ॥ ५५ ॥

यत् यतो असतो विरुद्धत्वेन ज्ञातस्यापि रागद्वेषादेर्ग्रहो ग्रहणं विदुषामपि किम्पुनर्मूढानामस्माकमिति भावः ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुग्रहे कृते युष्मद्भ्यो जनानां भयं भविष्यत्यत आहुः—यथा जनानाम् अस्मद्भ्यो भयं न भवेदस्माकं च कुशलं स्यात्तथा अनुष्ठेयं विधेहि ॥ ५३ ॥ ५४ ॥

कृताञ्जलिरित्यनेन शरीरविशेषं प्रकटीकरोतीति गम्यते त्वन्मायामोहिताः वयं खलाः स्वभावतन्त्राः त्वं तु सर्वेश्वरः सर्वकर्ताऽतो निग्रहमनुग्रहं वा यथेच्छसि तथा कुर्वित्याह—वयमिति चतुर्भिः । यद्यतः असद्ग्रहः देहगेहादौ दुष्टः आग्रहः स स्वभावो दुस्त्यजः ॥ ५५-५६ ॥

---

भाषा टीका ।

हम आप की दासी हैं आप हमारे करवे लायक आज्ञा देव सो करें । आप की आज्ञा के अनुरूप श्रद्धा सों करतो भयो प्राणी सब भय ते छूटजाय है ॥ ५३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-ऐसें नागपत्नीनने जब भगवान की स्तुति करी, तब श्रीकृष्ण ने मूर्च्छा जाको प्राप्त भई चरणनकी ठोकर सूं माथो जाको फूटि गयो ऐसे या काली कों छोड दियो ॥ ५४ ॥

धीरे सों काली भी फिर प्राण और इन्द्रियन को प्राप्त होय के बडे कष्टसों श्वास लेतो भयो हाथ जोरि के दीन होय के श्रीहरि जो कृष्णचन्द्र तिनसों बोलत भयो ॥ ५५ ॥

काली नाग बोलो, कि-हे नाथ ! जब ते हम उत्पन्न भये तबही तें खल और तमो गुणी बडे क्रोधवारे हैं, हे प्रभो ! ये

त्वया सृष्टमिदं विश्वं[1] धातर्गुणविसर्जनम् ।
नाना स्वभाववीर्यौजोयोनिबीजाशयाकृति ॥ ५७ ॥
वयं च तत्र भगवन् ! सर्पा जात्युरुमन्यवः ।
कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः[2] स्वयम् ॥ ५८ ॥
भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः ।
अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥ ५९ ॥

श्रीशुक उवाच ।

इत्याकर्ण्य वचः प्राह भगवान् कार्यमानुषः ।
नाऽत्र स्थेयं त्वया सर्प ! समुद्रं याहि मा चिरम् ।
[3]स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां[4] नदी ॥ ६० ॥

भाषा टीका ।

सर्पपने को स्वभाव हमकों बडो दुस्त्यज है, जातें यो अनित्यदेह मे जोगन को ऐसो आग्रह होजाय है ॥ ५९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणैर्विविधतया सृज्यत इति गुणविसर्जनम् तत्रापि नाना स्वभावादयो यस्य तत् ॥ ५७ ॥

जात्या जन्मनैवोरुमन्युर्येषां ते वयं स्वयं कथं त्यजामः ? ॥५८ ॥

हि यस्मात्तत्र त्वन्मायात्यागे भवानेव कारणमित्यनुग्रहं विधेहि ममाज्ञया स्वादस्तीति ईश्वरत्वान्निग्रहं वा विधेहीति ॥ ५९ ॥

यतो गोभिर्नृभिश्च नदी भुज्यताम् इति ॥ ६० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवाभिव्यञ्जयति-त्वयेति सार्द्धेन । ननु, ब्रह्मणा सृज्यते न तु मयेत्याशङ्क्याह, हे धातरिति त्वमेव तद्रूपेण सृजसीति भावः । स्वभावः शान्तत्वादिः वीर्यौजसोर्देहेन्द्रियशक्तिभेदेन भेदः योनिबीजयोर्मातापितृभेदेन आशयो वासना आकृतिः रूपम् ॥ ५७ ॥

भगवन् ! सर्वेश्वरेति स्वकर्मणा एव सर्पा इति पक्षो निरस्तः कर्मणामपीश्वरत्वात् तत्स्वभावत्यागेऽस्माकं नैवायमपराधो जात इति भावः । अतः कथमिति अन्यैरपि दुस्त्यजाम् ॥ ५८ ॥

स्वयं त्यागाशक्तौ हेतुः भवानिति त्वया हेतुना एव सा त्याज्या स्यादित्यर्थः मन्यसे त्वमिच्छसि तमेव विधेहीत्यर्थः तत्र सर्वं निजमायाविभवादिकमस्माकं च दैन्यादिकं जानासीति सर्वज्ञः इत्यनुग्रहे हेतुः जगदीश्वरः परमस्वतन्त्र इति च निग्रहे तथा च विष्णुपुराणे "यथाहं भवता सृष्टः" इत्यादि अन्यत्रैः । यद्वा, सर्वज्ञ इत्यनुग्रहनिग्रहयोः कारणं वेत्सि जगदीश्वर इति तयोरेकं विधेहीति वाक्यार्थः तत्र च जगदीश्वर इति सत्यपि निग्रहकारणे अनुग्रहमपि कर्त्तुं शक्नोषीति भावः ॥ ५९ ॥

इत्याकर्ण्येत्यर्द्धकम् । मया यदादिश्यते तदनेनावश्यं कार्यमिति तदुक्त्यभिप्रायं ज्ञात्वेत्यर्थः । कार्यं जगत्पालनं तदर्थं स्वेन मानुषस्वरूपेण प्रकटो यो भगवान् । यद्वा, कार्यं क्रीडामनुष्यलीलयैव मानुषः । ननु, तद्भौतिकदेहविशेषत्वेनेत्यर्थः । यद्वा, कार्याः निजप्रेमभक्तिविस्तारणादिना सम्पाद्या मानुषा येन मानुषावतारेण तेषामेव प्राधान्यात् अतस्तस्य मूलस्थाने श्रीवृन्दावने सर्पाणां स्थितिर्नुचितेति भावः । यद्वा, कात् ब्रह्मणोऽपि आर्याः पूज्यतमा मानुषाः श्रीनन्दादयो यस्य सः एवं तेषां सुखार्थमिति भावः । हे सर्पेति तत्र स्थित्ययोग्यतां याने च शक्तिं दर्शयति अत एव स्वस्य ज्ञात्यादिभिर्युक्त इति स्वशब्देन तेषां तादृशदुर्विषमयत्वं तदधीनत्वं च सूचितम् ॥ ६० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वीर्यं बलम् ओजः प्रवृत्तिसामर्थ्यं योनिरुत्पत्तिक्षेत्रम् ॥५७-६७॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वयेति । हे धातः ! गुणैर्विविधतया सृज्यत इति गुणविसर्जनमिदं तिरश्चां जातं त्वया सृष्टं, कथम्भूतम् ? नाना स्वभावादयो यस्य तथाभूतं तत्र वीर्यं बलमोजः प्रवृत्तिसामर्थ्यं योनिरुत्पत्तिक्षेत्रं बीजं कारणमाकृतिः संस्थानम् ॥ ५७ ॥

ततः किमत आह-वयञ्चेति । हे भगवन् ! तत्रापि तिरश्चां मध्येऽपि वयं सर्पाः जात्या जन्मनैवोरुमन्युर्येषां तथाभूताः दुस्त्यजां त्वदनुग्रहमन्तरेण दुःखेनापि त्यक्तुमशक्यां त्वन्मायामोहिताः वयं कथं त्वन्मायां मायागुणरजःकार्यं क्रोधं कथं त्यजामः ? ॥५८॥

हि यस्मात्तत्र त्वन्मायात्यागे भवानेव कारणं त्वन्तु सर्वज्ञः

(१) धातुः (२) प्रभो ! (३) च इति विज० पा० (४) भुज्यते इति विज० विश्व० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निग्रहानुग्रहोचितज्ञानवान् जगदीश्वरः तदुचितसामर्थ्ययुक्तः अतस्त्वमनुग्रहं निग्रहं वा यन्मन्यसे त्वमेव कुर्विति नियन्तुं चाहं न प्रभुरिति भावः तत्वदभिमतं नोऽस्माकं विधेहीत्याशयः ॥ ५९ ॥

कार्यमानुषः दुष्कृद्दमनसाधुपरित्राणात्मककार्यार्थं मानुषः स्वेच्छोपात्तमनुष्याकृतिरित्थं कालियस्य वच आकर्ण्य प्राह, उक्तमेवाह—नेति चतुर्भिः । हे सर्प ! अत्र ह्रदे त्वया न स्थेयं किन्तु स्वज्ञात्यादिभिः सह माचिरमचिरात् समुद्रं याहि, नदी यमुना गोनृभिश्च भुज्यतां पीयताम् ॥ ६० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धातुर्हिरण्यगर्भस्य सकाशात् गुणभूते सर्जने सृष्टिरेयं जगतः प्राधान्येन विष्णोरेवा सृष्टिः "विष्णुः प्रधानतः स्रष्टा गुणस्रष्टा चतुर्मुखः" इति वचनात् नानास्वभावाः अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमित्यादिनानाविधाः स्वभावाः वीर्याणि पराक्रमादीनि ओजोऽवष्टम्भः बीजं शुक्रादि आशयोऽभिप्रायः एषामाकृतिः स्वरूपं यस्य तत् ॥ ५७ ॥ ५८ ॥ ५९ ॥

देवकार्यार्थं मानुषविडम्बः ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कार्ये क्रीडा मनुष्यलीला तयैव मानुषो नतु तदलौकिकदेहविशेषत्वेनापीत्यर्थः ॥ ६०—६७ ॥

---

श्रीमच्छुकदेवाचार्यकृतसुबोधिनी ।

अनेनैव ज्ञापितं मन्मारणेऽपि मद्वीर्योऽपकरिष्यति त्वत्सेवकेभ्यः पश्चाद्वा तस्मादप्रतीकार्यदुष्टा वयमिति अस्माकमेवं रूपत्वे भवानेव हेतुरित्याह—त्वया सृष्टमिति । समुदायजननात् न दोषः ब्रह्मणा सृष्टमित्याशङ्क्याह—धातुरिति । त्वमेव विधाता ननु, भगवत्कार्ये कथमेतादृशं तत्राह—गुणानां विशेषेण सर्जनं यत्र तत्रैविध्यं सर्वत्रैव सम्बध्यत इति भेदान् गणयति—नानाविधाः स्वभावादयो यस्मिन्निति स्वभावः प्रकृतिधर्मो जीवगतः वीर्यमिन्द्रियधर्मः ओजः प्राणधर्मः योनिर्मातृधर्मः बीजं पितृधर्मः आशयोऽन्तःकरणस्य एते सर्वे एव नानाविधाः प्रत्येकं समुदायाश्चानेकविधा भवन्ति अत एव नानात्वं वैचित्र्यञ्च ॥ ५७ ॥

अस्माकं तु सर्वमेव तामसमित्याह—वयमिति । वस्तुतः भौतिकाग्न्यादीनामपि सङ्ग्रहार्थं च तत्र सृष्टौ भगवदिति सम्बोधनं ज्ञानार्थं सर्पा जात्यैव उरुमन्यवः जातिस्वभावौ दुष्टौ निरूपितौ गुणातीतावस्थया सात्विकावस्थया वा मायापरित्यागो भवति सर्पाणां क्रोधवतां च न तत् सम्भवति अतः कथं त्वन्मायां त्यजामः ? ननु, दोषपरिज्ञाने कथं न त्यागस्तत्राह, दुस्त्यजामिति । त्वदीया मायाऽस्मत्कृतैरुपायैः सर्वथा दुस्त्यजा तर्हि त्यागार्थं यागिवानेव कथं न प्रार्थ्यते ? तत्राह—मोहिताः स्वयमिति । स्वयमेव मोहिताः आत्मैव विमोहितः अतः स्वहितापरिज्ञानात् त्यागार्थमपि न प्रवर्तने इत्यर्थः ॥ ५८ ॥

सर्वथैव अस्मद्दोषोत्पत्तिसम्भवात् मारणीया एव भवन्त इति चेत्तत्राह—भवान् हि कारणमिति । अस्माकमेवंभावे भवानेव कारणं "बुद्धिर्ज्ञानमसम्मोहः" इत्यादिवाक्यान्यत्र प्रमाणमिति हिशब्दः सार्थः एवं सति तत्रानुग्रहं निग्रहं वा यदुचितं तन्नोऽस्मभ्यं विधेहि अपराधः कृतः इति निग्रहः कर्तव्यः त्वया कारित इत्यनुग्रहः कर्तव्यः । ननु,विरोधे शास्त्रार्थः को वा, भवेत् यद्यन्येन दण्डः कृतः स्यात् त्वया ऽनुग्रहः कर्तव्यः इति तु उचितम् । अथ भगवानेव सर्वरूपः तदा निग्रहस्य कृतत्वादनुग्रहः कर्तव्यः । अथ निग्रहोऽनुग्रहश्च कृतौ आहो स्विन्न कृतौ एतदुभयं सर्वज्ञत्वाद्भवानेव जानाति अतो यन्मन्यसे तद्विधेहि शक्यभावस्तु तव नास्तीत्याह—जगदीश्वर इति ॥ ५९ ॥

एवं श्रुत्वा यत्कृतं भगवता तदाह—इत्याकर्ण्येति । वच एव श्रुतमर्थस्तु पूर्वमेव परिज्ञातः यद्यपि प्रसादः कर्तव्यः स्वकृतत्वात् पूर्वमावश्य स्तुतत्वाच्च तथापि समर्यादरीत्येन प्रसादोऽन्यथा कर्तव्य इति ज्ञापनार्थमाह—कार्यमानुष इति । यत्र कार्यार्थमयुक्तं मानुषभावमपि प्रदर्शयति तत्रास्य मर्कस्याऽपि प्रसादान्यथाकरणं किं वक्तव्यं न च बाधकशङ्कान्यथा करोतीति शङ्कनीयं यतो भवानाज्ञापयति हे सर्प ! गमनसमर्थ, अत्र त्वया न स्थेयं समुद्रं गच्छ चिरं मा आज्ञाश्रयम् गमने प्रकारमाह, स्वज्ञात्यपत्यदाराढ्य इति । ज्ञातयो ज्ञातीया अपत्यानि दाराश्च तैराढ्य इति यत्र कोऽपि तव स्थितो न कोऽपि प्रवास इति सूचितम् इतो गमने हेतुमाह—गोनृभिर्भुज्यतां नदीति । अनेन त्वया नदी दूषितेति तस्याधिको दोषो निरूपितः ॥ ६० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतो गुणैर्विविधं सर्जनं सृष्टिर्यत्र तत् विविधत्वमाह—नाना स्वभावादयो यस्य तत् ॥ ५७ ॥

जात्या जन्मनैव बहुकोपाः ॥ ५८ ॥

तत्र मायात्यागे ॥ ५९ ॥

कार्येषु ब्रह्मरुद्रादिदुष्करेष्वपि कालियनिग्रहादिकमेषु मानुषः एव न तु तत्कालसमुचितचक्रपाण्यादिरूप इत्यर्थः । यद्वा, कार्ये क्रीडा लीला तेनैव मानुषः लीलामयमानुषरूप इत्यर्थः । यद्वा, कस्य ब्रह्मणोऽप्यार्यश्चासौ मानुषश्चेति सः । यद्वा, कार्यं मानुषस्येव यस्य सः, यतो गोभिर्नृभिश्च नदी भुज्यते तट्प्रवाहगतघासपत्रफलजलानां भोगौचित्यात् ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे धातः ! इदं विश्वं त्वयैव सृष्टम् कथम्भूतं सत्त्वादिभिः स्वशक्तिगुणैः विविधतया सृज्यते इति । गुणविसर्जनं तत्रापि नाना स्वभावादयो यस्य तत् ॥ ५७ ॥ ५८ ॥

य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ।
कीर्त्तयन्नुभयोः सन्ध्योर्न युष्मद्भयमाप्नुयात् ॥ ६१ ॥
योऽस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ।
उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥ ६२ ॥
द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ।
यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥ ६३ ॥
श्रीशुक उवाच ।
एवमुक्तो भगवता कृष्णेनाऽद्भुतकर्मणा ।
तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ६४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यन्मन्यसे तन्नोऽस्मभ्यं विधेहि ॥ ५९ ॥

कार्यार्थं मनुष्यलोको यस्य सः भूभारहरणाद्यर्थं मनुष्यलोकेऽवतीर्ण इत्यर्थः ॥ ६०—६६ ॥

भाषा टीका ।

हे सबके रचनहार ? गुण न की जामें सृष्टि ऐसो विश्व आपने रच्यो है, ? जा विश्व में सबन के नानाप्रकार के स्वभाव पराक्रम तेज योनि बीज आशय और आकृति भिन्नाभिन्न हैं ॥ ५७ ॥

हे भगवन् ! तामें हमलोग तौ सर्प हैं जाति से ही बडे क्रोधवारे, ऐसे हम सब आपकी माया कूं छोडिवे कों कैसे समर्थ होयसकें हैं । क्योंकि ? आपकी माया बडी दुस्त्यज है और हम सब आपही मोहित होय रहे हैं ॥ ५८ ॥

तामें सर्वज्ञ जगदीश्वर आपही कारण हौ अब आप हमारे ऊपर कृपा करो, चाहो दंड देउ जो आप विचारो सोई करौ ॥ ५९ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—कार्य कूं मनुष्य होयवेवारे भगवान् इतनी प्रार्थना कूं सुनके काली सों यों बोले, कि—हे सर्प ! अब तू या जगे मत रहै, समुद्र कूं जा, देर मत कर, और अपने जाति के सर्पन कूं अपने पुत्र और स्त्रीन कों सबन कों साथ लेजा । अब या यमुना ( नदी ) को जल गायन कूं और मनुष्यन पीवने दे ॥ ६० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न युष्मत्तो भयमाप्नुयात् तस्य युष्माभिर्भयं नोत्पादनीयमित्याज्ञा ॥ ६१ ॥

इतोऽपि त्वया निर्गन्तव्यमित्याह—योऽस्मिन्निति । त्वयि स्थिते तन्न सम्भवतीति भावः ॥ ६२ ॥

न च तव गरुडभयं भवेदित्याह—द्वीपमिति ॥ ६३—६७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वां प्रति म आनुशासनं नाऽत्र स्थेयमित्यादिलक्षणमपि अस्तु तावदत्र क्रीडादिकं सन्ध्योः सन्ध्ययोः कीर्त्तयन् यः स्मरेत् तदेवं नात्रेत्यादिपद्यद्वयं सर्पोच्चाटने मन्त्र एव श्रेयः तथा च ऋग्वेदस्थमन्त्रान्तरं "यमुनाह्रदे हि सो जातो यो नारायणवाहनः । यदि कालिकदूतस्य यदि काः कालिकाद्भयं । जन्मभूमिपरिक्रान्तो निर्विषो याति कालिकः" इति ॥ ६१ ॥

जलैस्तर्पयेदिति विषापगमः सूचितः उपोष्य तीर्थोपवासं कृत्वा मां चिन्तयन् अर्चयेत् स सर्वैस्त्रिविधैः पापैः प्रकर्षेण वासनाराहित्येन मुच्यते ॥ ६२ ॥

रमयतीति रमणं संज्ञायां कन् इति सुखकारित्वं एतच्च तत्प्रोत्साहनार्थम् एतं किञ्चिदधिकयोजनमात्रं तद्द्वीपात् प्रमाणेन स्वल्पतरमित्यर्थः । उपाश्रित इति नित्यावासत्वं निरस्तं नाद्यात् नात्तुं शक्नुयात् यतः मत्पादेति तच्च पूर्वमेव नृत्यगतिविलासेन किम्वा ऽधुनैव प्रसादीकृतम् ॥ ६३ ॥

मुक्त इति विससर्जेत्यस्यानुवादमात्रं एवमुक्तो भगवतेति वा पाठः अद्भुतकर्मणेति निजपूर्वसुखवसतिस्थानं प्राप यद्भयात् तत्स्थानं तत्याज तस्मात्तदपगतं विशेषतश्च श्रीवैष्णवाग्रस्य तस्य सख्यं सम्मान्यत्वं च श्रीभगवत्पादाब्जचिह्नतो जातं ब्रह्मादिसेव्यलक्ष्मीप्रार्थ्यतत्पादाब्जरेणुभिस्तादृशनृत्यलीलया च पर्यांचिताः सर्वे मूर्द्धानः सफला बभूवुः श्रीब्रह्माद्यपेक्ष्यं श्रीभगवदनुशासनं लब्धं तेन च साक्षात्तन्मधुरवचनामृतं पीतं पश्चात् परमभक्तवत्पूजादिकं च कृतमितीत्थं वादिदृष्ट्या निग्रहस्याप्यनुग्रहविशेषत्वे क्रोधस्यापि परमप्रसादत्व एव पर्यवसानात् अपि च तादृशापराधिनोऽपि तत्र दमिलस्यैव सतो हृदा शरणागतिमात्रेण तादृशानुग्रहात् "चलसि यद्व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम्" इत्याद्विगीयमानपरमसौकुमार्यश्रीपादाब्जस्पर्शेन रत्ननिकराचितसन्मूर्द्धवर्गचूर्णनात् तादृशैश्वर्यप्रकटनसमये मुनिसिद्धादि श्रीगोपादिसाक्षादेव महानृत्यकौतुकात् तत्रापि परिभ्रमाहिलोकफणागणेषु गतिकलारक्षणाच्चेति दिक् । एतच्च तस्य भगवत्ताविशेषप्रकटनमित्याह—भगवतेति । इदं चार्थं सर्वज्ञत्वात् श्रीशुकः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवोऽवदादिति श्रीऋषिः सर्वदर्शी उवाचेति सूतोक्तिः राजन् हे बुद्ध्यादिना प्रकाशमानेति एतदद्भुतकर्मत्वं सहेतुकं त्वया अवबुध्यत एवेति भावः । नागः कालियः मुदेति श्रीभगवत्तत्-वनुग्रहानुसन्धानात् सादरं सप्रेम अतस्तासां हस्तैरेव गन्धा-नुलेपनादिकं ज्ञेयम् ॥ ६४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तुभ्यं मत्कर्तृकदण्डनात्मकम् एतच्चरित्रं यः पुमानुभयो-स्सन्ध्ययोः संस्मरन् कीर्त्तयंश्च स्यात् स युष्मत्तो भयं सर्पेभ्यो भयं मृत्युभयं नाप्नुयादित्यन्वयान्तरम् ॥ ६१ ॥

मद्विहारस्थानेऽस्मिन् ह्रदे यः पुमान् स्नात्वा जलैर्देवानादि-शब्दात् पितॄनृषींश्च तर्पयेदुपोष्य मां स्मरन्नर्चयेच्च स सर्वैः पापैर्मुच्यते इत्यन्वयान्तरम् ॥ ६२ ॥

ननु, गरुडभयाद्रमणकाख्यं सामुद्रद्वीपं हित्वाऽस्मिन् ह्रदे प्रविष्टः पुनरितस्तत्र गतं मां गरुडोऽद्यात् तत्राह—द्वीपमिति । यस्य सुपर्णस्य भयादेनं ह्रदं त्वमाश्रितः स सुपर्णस्त्वां नाद्यात् तत्र हेतुः मत्पादलाञ्छनामिति ॥ ६३ ॥

हे राजन् ! इत्थमुक्तो नागस्तं कृष्णं पूजयामास तथा नागस्य पत्न्यश्च सादरम् ॥ ६४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सन्ध्योः सन्ध्ययोः ॥ ६१ ॥

ममाक्रीडे क्रीडास्थाने ॥ ६२ ॥

त्वं पूर्वं यस्य सुपर्णस्य भयात् नाम्ना रमणकं द्वीपं हित्वा एतत् ह्रदमुपाश्रितः । अथ सुपर्णो मत्पादलक्षणं मत्पादस्थाञ्छनमिव लाञ्छनं यस्य स तथा तञ्च त्वां नाद्यात् न भक्षयेत् ॥ ६३ ॥ ६४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्पा जात्युरुमन्यव इति वाक्यात् वैष्णवान् कदा-चित् पीडयिष्यतीति भगवदाज्ञान्तरमाह—य एतत्संस्मरेदिति । वैष्णवः सर्पैर्न भक्षणीयः एवं यः पुनरेतावन्मात्रमपि स्मरेत् सोऽपि युष्मत्तो न भयमाप्नुयात् एतत्तव निग्रहलक्षणं चरित्रमित्याह—तुभ्यं मदनुशासनामिति । तुभ्यं त्वदर्थं मदीयं यदनुशासनमाज्ञा एतन्मात्रं वा सम्यक् स्मरणं ध्यानपूर्वकम् अथवा कीर्त्तयन्नुभयोः सन्ध्योः सायं प्रातर्वा एतच्चरित्रं पठनीयम् उभयं वा कर्त्तव्यम् ॥ ६१ ॥

न प्राप्नुयादिति विध्यर्थोऽयम् ननु, सर्पभक्षणनिमित्तपापे विद्यमाने कथं न सर्पो भक्षयेत्तत्राह—अस्मिन् स्नात्वेति । योऽस्मि-न्निति वा अस्मिन् कालीयह्रदे स्नानान्तरापेक्षया विशेषमाह,

मदाक्रीड इति । मम आक्रीडा यत्र स्नानमात्रेणैव देहसम्बन्धि-पापं गच्छति उपोष्य मां स्मरन्नर्चयेदित्यत्रोपवासे प्राणसम्बन्धि-पापं गच्छति मत्स्मरणेनान्तःकरणपापमर्चनेनेन्द्रियपापं पाप-करणदशायां यद्देवानां चतुष्यागो जातं तत्र देवा बहुविधाः देशकालकर्मसाक्षिणोऽभिमानिनश्च पितरश्च वंश्याः क्रुद्धा भवन्ति ऋषयश्च वेदोल्लङ्घनात् अतो देवादीन् जलैस्तर्पयेत् मत्क्री-डया चरित्रामृतपूर्णं जलं पीत्वा तृप्ताः सन्तः प्रत्युताशिषमेव प्रयच्छन्ति न तु क्रोधं करिष्यन्तीति भावः । अनेन पूर्वदिवसेऽपि स्नानतर्पणे विहिते द्वितीयदिवसेऽपि काम्यं वा एतत्स्नानं भिन्न-मेव ॥ ६२ ॥

नन्वन्यत्र गते गरुडो भक्षयिष्यतीति चेत्तत्राह—द्वीपमिति, रमणके द्वीपे स पूर्वं स्थितः ततो गरुडभयादत्रागतः यद्भ-यात्त्वमेतद्ध्रदमुपाश्रितः स सुपर्णस्त्वां नाद्यादित्याज्ञा यद्यप्या-ज्ञयैव निस्तारो भवति तथापि तस्य विश्वासार्थं हेत्वन्तर-माह—मत्पादलाञ्छितामिति ॥ ६३ ॥

एवमुक्तो भगवता स भयान्मुक्तो जातः भगवानद्भुतकर्मा निग्रहं कुर्वन्ननुग्रहं कृतवान् अन्यथाऽस्य सञ्चार एव क्वापि नास्ति कदाचिद्वा गरुडो भक्षयेत् अनेन यथाकथञ्चित् भग-वत्सम्बन्धः सर्वथा मोचक इत्युक्तम् । राजन्निति सम्बोधनं सर्प-भयाभावार्थं ततो भगवन्तं पूजयामास दिव्यानि पुष्पाणि वस्त्रचन्दनादीनि न जलेन क्लिष्टानि भवन्ति गरुडभये निव-र्त्तितमिति महान्प्रमोदः नागपत्न्यश्च सादरं पूजयामासुः रमणके तु न प्रेषितः पुनः पूर्वदोषसम्भवात् ॥ ६४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तव मत्पादस्पर्शो मम च त्वद्दण्ड इत्यावयोः कीर्त्तिरा-चन्द्रार्कं स्थास्यतीत्याह—य इति । न युष्मत्तो भयमाप्नुयादिति तेन पद्यद्वयमिदं सर्पोच्चाटने मन्त्र एव ज्ञेयः । तथा च ऋग्वेदस्य मन्त्रान्तरं "यमुनाह्रदे हि सो यातो यो नारा-यणवाहनः । यदि कालिकदन्तस्य यदि काकालिकाद्भयम् । जन्मभूमिपरित्रातो निर्विषो याति कालिकः" इति ॥ ६१ ॥

इतोऽपि हेतोस्त्वया निर्गन्तव्यमेवेत्याह—योऽस्मिन्निति । त्वयि स्थिते तन्न सम्भवतीति भावः ॥ ६२ ॥

न च ते गरुडाद्भयं भावीत्याह—द्वीपमिति ॥ ६३ ॥

अद्भुतकर्मणेति कालियाद्व्रजस्थजीवस्य त्राणं कालियस्यापि गरुडात्त्राणमिति हिंस्यहिंसकयोरुभयोरपि कल्याणमित्यद्भुतं कर्म कुर्वाणेनेति स्वभक्तगरुडापराधस्य स्वप्रियव्रजस्थजीवापराधस्य च कर्षणं परमभक्तकालियपत्नीप्रीत्यनुरोधात् कृतमिति भावः ॥ ६४ ॥

---

भाषा टीका ।

तुमने ये जो ताकूं आज्ञा दीनी है, याकूं जो मनुष्य स्मरण करेगो, और दोऊ संध्यान में जो कीर्त्तन करेगो वाकूं तुमन ( सर्पन ) से भय नहीं प्राप्त होवेगो ॥ ६१ ॥

दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ।
दिव्यगन्धाऽनुलेपैश्च महत्योत्पलमालया ॥ ६५ ॥
पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ।
ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् ॥ ६६ ॥
सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ।
तदैव साऽमृतजला यमुना निर्विषाऽभवत् ।
अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे कालियनिर्यापणं नाम
षोडशोऽध्यायः ॥ १६ ॥

भाषा टीका ।

और हम जामें खेलै हे या कालीदह में जो स्नान करिके देव पितृ आदिकन को जलसों तर्पण करेगो, और उपवास करकें स्मरण करत मेरो जो अर्चन [ पूजन ] करेगो सो पुरुष समस्त पापन तें छूटि जावेगो ॥ ६२ ॥

और जा गरुड की भयसों रमणक द्वीप कूं छोडि के तुम या कालीदह में आय रहे हो, सो गरुड अब तुम्हारे मस्तक पे मेरे चरणन के चिन्हन कूं देखि कें तुम कूं भक्षण नहीं करेगो ॥ ६३ ॥

ऋषिरुवाच ।

श्रीशुकदेवजी बोले, कि—अद्भुतकर्मा भगवान् श्रीकृष्ण ने जब ऐसी आज्ञा दीनी तब उन श्रीकृष्णचन्द्र कूं काली सर्प और सगरी नागपत्नी सादर पूजन करत भई ॥ ६४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दिव्येति सार्द्धद्वयम् । दिव्येत्यादिविशेषणैर्मर्त्यलोकिकतो वैशिष्ट्यम् अत एव माल्यादीनां विषदोषाद्यपशान्तिकं च ज्ञेयं प्रायशस्तेषां सङ्कल्पसिद्धत्वं च जगतां नाथं पूजयित्वेति तत्पूजयैवेह लोके परत्र च जगति सर्वत्रैव स्वतो मङ्गलं वृत्तमिति गरुडध्वजं प्रसाद्येति श्रीगरुडादपि भयं निवृत्तमिति भावः । प्रीतः सन्तुष्टमनाः यद्वा तस्मिन् प्रीतः जातप्रीतः यद्यपि तस्य गमनेन कलत्रादिसहितस्यैव तस्य गमनं स्वत एवायाति तथापि सकलत्रेति कलत्रपत्यदाराद्य इति श्रीभगवन्निदेशानुवर्त्तित्वं ज्ञापितं ह स्फुटमेव सा सर्वोपघातकदुर्विषमयजलापि तत्र ह्रदविशिष्टे प्रदेशे निर्विषतापत्त्यैव तस्या निर्विषत्वमुक्तं न केवलं निर्विषा अमृतजला परममिष्टतोया च श्रीभगवच्चरणसंसर्गेण परमानन्दप्रदजलापि वाऽभवत् तादृशं च सामर्थ्यं तस्य न किञ्चिदपीत्याह, भगवत इति । तत्र प्रयोजनं क्रीडेति क्रीडायुक्तश्चासौ प्रसिद्धमानुषस्येव यद्रूपमाकारस्तद्विद्यते यस्य सच तस्य तथा च सा स्वमानुष्यलीलौपयिकी स्यादिति भावेनेत्यर्थः ॥ ६५–६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे,
श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिण्याम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिव्याम्बरादिभिः पूजयामासुः परार्ध्यैरनर्घैः ततस्तं परिक्रम्य प्रदक्षिणीकृत्याभिवाद्य च ॥ ६५ ॥ ६६ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कलत्रादिभिः सहितः अब्धेः द्वीपं रमणकाख्यं जगाम क्रीडनार्थं न तु कर्मफलभोगार्थं मानुषं रूपमस्यास्तीति तथा तस्य भगवतोऽनुग्रहात्तदैव सा यमुना निर्विषा अमृतजला चाभवत् ॥६७॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पराध्यरनर्घत्वेनोत्तमैः ॥ ६५ ॥ ६६ ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥
( विजयध्वजरीत्या चतुर्दशः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

पूजासाधनान्याह–दिव्येति । दिव्यान्यम्बराणि स्रजो माला मणयश्च सर्पशिरोरत्नानि पराद्ध्यान्यमूल्यानि मुकुटकटककेयूरादीनि दिव्यो गन्धो येषाम् एतादृशा अनुलेपाः चतुःसमाद्यः महती चोत्पलानां माला एवमलङ्कारचतुष्टयमपि कृतवान् ॥ ६५ ॥

ततः पूजयित्वा प्रसाद्य अब्धेर्द्वीपं जगामेति सम्बन्धः ननु, पीडितः कथं पूजां कृतवांस्तत्राह—जगन्नाथमिति । स हि सर्वस्वामी तत्रापि रक्षकः स एवेति युक्तमेव तत्पूजाकरणं ततः प्रार्थितवान् प्रसन्नो भवेति तत्र हेतुमप्याह–गरुडध्वजमिति । गरुडो ध्वजे यस्य कोऽप्यंशेनापि भगवान्नप्रसन्न इति गरुडो यदि जानीयात्तदा भक्षयदेव अतः प्रसादः कारणीय एव ततो भगवत्प्रसादानन्तरं प्रीतः सन्तुष्टः भगवता चाभ्यनुज्ञातः प्रथमतस्तु क्रोधनाशनेन बुद्ध्वा ततोऽप्यनुज्ञातः परिक्रम्य प्रदक्षिणीकृत्य अभिवन्द्य च सम्भूतिं कृत्वा सर्वसहायः अब्धेर्द्वीपं सर्वेषामप्यगम्यं जगामेति इत्याश्चर्यं तस्मिन्निर्गत एव तदैव भगवत्कृपया सा यमुना मिष्टोदका ऽभवत् निर्विषा च न केवलममृतत्वं मिष्टतामात्रपरं किन्तु मरणनिवर्त्तकमपि सहजोऽपि यमुनाया यो दोषो विषादिः स्थितः सोऽपि गतः तत्र हेतुः अनुग्रहाद्भगवत इति, न केवलं कालीयगमनेन निर्विषा जाता किन्त्वनुग्रहाद्भगवतः क्रीडायाः करिष्यमाणत्वात्तस्यामनुग्रहः ज्ञानादिकं तु सूचयति भगवत इति ननु किमिति क्रीडा तस्यां कर्त्तव्या, तदाह क्रीडामानुषरूपिण इति । क्रीडार्थमेव मानुषरूपवान् अतोऽवश्यं यमुनायां क्रीडा विधातव्या ततः प्रसाद इति अनेन यमुनायाः सर्वदोषनिवृत्तिः सूचिता ॥६६—६७॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षित-विरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
त्रयोदशाऽध्यायविवरणम् ॥१३॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सादरमिति पूर्वश्लोकोक्तेर्हे प्रभो ! दुष्टताया: परमावधिरूपे मयि कृपायाः परमावधिरर्पितः त्वया यदहो प्राकृताप्राकृतलोकेषु मदन्यः कोऽपि ध्वजवज्राङ्कुशादिचिह्नानि स्वमूर्द्धि न धत्ते तदहं साम्प्रतं श्रीमदङ्गानि मद्दन्तदंशोत्पन्नविषदाहतप्तानि सुगन्धसुशीतलचन्दनरसेन सस्त्रीक एव पाणिभिः स्पृशन्ननुलिम्पानि शृङ्गारजानि चेत्यतः स्वगणैरेव दिव्यासने उपविशेत्युपवेश्य स्ववाञ्छितं पूरयित्वा लब्धभगवत्प्रसादस्ततो निर्जगामेत्याह–दिव्येति सार्द्धद्वयेन । मणिभिरिति कृष्णप्रादुर्भावकाले तद्वक्षःस्थल एवासीत् यः कौस्तुभः स एव तस्य नरलीलत्वशोभाव्याघाताभावार्थं तदैवालक्षितं कालियकोषागारमध्ये प्रविष्टोऽभूत् अत एव बहुरत्नालङ्कारप्रदानसमये कालियपत्नीभिरपरिचित एव स्वीयरत्नविशेषज्ञानेन कौस्तुभो दत्तः यदुक्तम् ।

> "कौस्तुभाख्यो मणिर्येन प्रविश्य ह्रदमौरगम् ।
> कालियप्रेयसीवृन्दहस्तै रात्मोपहारितः" ॥

इति गणोद्देशदीपिकायां प्रसाद्येति भगवानपि कालियमूर्द्धस्वभयहस्ततलनिधानेन तदीयसर्वाङ्गव्यथामुपशमयामासेति भावः । गरुडध्वजं प्रसाद्येति भो गरुडवाहन ! प्रभो ! सम्प्रत्यहं गरुडस्य ज्येष्ठभ्रातुर्दासोऽभूवम् अतः कदाचिद्दूरदेशस्य गन्तव्यत्वे सत्यहमपि स्ववाहनत्वेन स्मर्तव्यो निमेषमात्रेणैव शतकोटियोजनगामी दासानुदास इति तदुक्तिर्गम्यते अतः कालियारूढ एव कंसनिर्दिष्टः कृष्णो मथुरां जगामेति पौराणिकी कथा काचित् श्रूयते इति क्रीडामानुषरूपिण इति नित्ययोगे इनिः ॥ ६५—६७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमे षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्रीडार्थं मानुषेषु यदाविष्कृतमप्राकृतरूपं तदस्यास्तीति । क्रीडामानुषरूपी तस्य ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषा टीका।

दिव्य अम्बर ( वस्त्र ) माला मणि और बहु मोल भूषण तथा दिव्य चन्दन के लेप बडो कमलन की माला, इत्यादिक सामग्री सों ॥ ६५ ॥

जगत् के नाथ श्रीकृष्ण को पूजन करके और गरुड-ध्वज को प्रसन्न करके । ता पीछें बडो प्रसन्न होयके श्रीकृष्ण की आज्ञा पाय के भगवान् की परिक्रमा देकें उनको प्रणाम करिकें ॥ ६६ ॥

स्त्री सुहृद और पुत्रन कों साथ लेकें रमणक द्वीप क मध्य में काली जातो भयो ॥ श्रीयमुना जी वाई समें निर्विष होय के अमृत के तुल्य जल वारी होत भई, सो केवल क्रीडा के ताईं मनुष्य रूप धारण करन वारे भगवान् श्रीकृष्ण के अनुग्रह सों होती भई ॥ ६७ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें सोरहवें अध्यायकी, श्रीवृन्दावनस्थ पं० भागवताचार्यकृत भाषाटीका समाप्ता ॥ १६ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

———○:*:○———

## ॥ सप्तदशोऽध्यायः ॥

—:*:—

राजोवाच ।

नागालयं रमणकं कस्मात्तत्याज कालियः ।
कृतं किम्वा सुपर्णस्य तेनैकेनासमञ्जसम् ॥ १ ॥

श्रीशुक उवाच ।

उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः ।
वानस्पत्यो महाबाहो ! नागानां प्राङ्निरूपितः ॥ २ ॥
स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि ।
गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥
विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ।
कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नागं सप्तदशे नागालयं तं निरयापयत् ।
बन्धून् स्वदुःखतः भ्रान्तान् सुप्तांस्तत्र दवादपात् ॥

असमञ्जसमप्रियम् ॥ १ ॥

उपहार्यैर्भक्ष्यैः सर्पजनैः सर्पाख्यैस्तैर्जनैः वानस्पत्यो वनस्पतेर्मूले देयो नागानां तद्बाधापरिहाराय यो बलिर्निरूपित उपकल्पितः ॥ २ ॥

ते च नागाः स्वं स्वं भागं जनैर्दत्तं सुपर्णाय प्रयच्छन्ति ततो भीताः गोपीथाय रक्षणाय ॥ ३ ॥

विषवीर्यो यो मदस्तेनाविष्टः काद्रवेयः कद्रूपुत्रः गरुडं कदर्थीकृत्याविगणय्य । यद्वा, उपहार्यैः सुपर्णभक्ष्यैः सर्पा एव जनास्तैर्नागानां सम्बन्धी यस्मिन्नेकैको नागो दीयते तथाभूतो यो बलिः सुपर्णाय निरूपितः तत्र स्वं स्वं भागं सर्वे नागाः प्रयच्छन्ति कालियस्तु न प्रयच्छति किन्त्वन्यैर्दत्तमपि तं बलिं स्वयमेव बुभुजे ॥ ४ ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अभीष्टलीलासिद्ध्या श्रीभगवतस्तदभ्युदयदर्शनेन आत्मजस्य च स्वस्थतामाकर्ण्य स्वयः प्रीतमनाः सन् कथामध्य एव कथासौष्ठवाय तत्पूर्ववृत्तं पृच्छति–नागेति । नागानामालयं स्वभावतः सर्पवर्गस्य वसति स्थानं नतु गरुडस्येत्यर्थः । अतो बहवो नागास्तत्रान्ये निवसन्त्येवेति भावः । ननु, गरुडभयादिति तत्सूचितमेव तत्राह कृतं किमिति बाधान्तः कटाक्षे ॥ १ ॥

उपेति त्रिकम् । हे महाबाहो ! इति यथा भवतो महाराजस्य पराक्रमेण वैरिणोऽपि राजानो बलिमुपहरन्तीति भावः ॥ २ ॥

पर्वणि पर्वणि प्रति पक्षदशमन्तं महात्मने अपरिच्छिन्नशक्तय इत्यर्थः । अयं भागप्रदाने हेतुः ॥ ३ ॥

पश्चात् विषवीर्याभ्यां मदाविष्टः सन् काद्रवेय इति भ्रातृत्वं च मदे हेत्वन्तरं ज्ञेयं कदर्थीकृत्य तद्‌नादरेण तच्छृण्वेति वक्ष्यमाणात् तदीयेभ्यो बलादुग्रहणेनैव वा कदर्थीकृत्य स्वयं तु स्वयमेव ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

उपहार्यैः निवेद्यभूतैः सर्पजनैर्यो बलिः सर्परूपबलिरित्यर्थः । यो बलिस्तस्य स्थाने निरूपित इत्यर्थः । वानस्पत्यः वनस्पतिरपुष्पफलवृक्षः वृक्षविशेषमूले कल्पितः यद्वा, वनस्पतिगते चन्द्रे अमावास्यायां प्रवर्तमान इत्यर्थः ॥ २ ॥

गोपीथाय रक्षणाय ॥ ३—६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं "द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः । यद्भयात्" इति, तत्र कालियस्य द्वीपत्यागनिमित्तस्य सुपर्णभयस्य निमित्तं बुभुत्सुः पृच्छति राजा–नागालयमिति । नागालयमित्यनेन तद्द्वीपस्थानां नागानां सुपर्णभयमस्तीति सूचितम् । अत एव पृच्छति कृतमिति-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न च गुरुकुलवासः नापि तप आश्रयः आत्ममीमांसा देहविलक्षणप्रत्यगात्मविचारः क्रियाः सन्ध्योपासनादिरूपाः ॥ ४२ ॥

अथाप्येषामभावेपि कृष्णे दृढा भक्तिर्विद्यते द्विजातिसंस्कारादिमतामप्यस्माकं सा न विद्यते ॥ ४३ ॥

अस्माकं विवेकोदयार्थमेव भगवतो याञ्चाऽन्यथा सा अवाप्तसमस्तकामस्यासङ्गतेत्याहुः—स इत्यादिभिस्त्रिभिः । गृहेहया गृहव्यापारेण प्रमत्तानामत एव स्वहितेपि विमूढानामप्यस्माकमहो सतां गतिर्हेतुगर्भमिदं सतां गतित्वाद्गोपवाक्यैः स्मारयामास साधुपरित्राणार्थमवतीर्णो निरतिशयपुरुषार्थस्वरूपमात्मानं याञ्चाव्याजेन स्मारयामासेत्यर्थः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुरन्तभावम् अव्यवहितभक्तिं गृहाभिधानान्मृत्युपाशान् छिन्द्यात् छिनत्ति ॥ ४१ ॥

आसां स्त्रीणां द्विजातिसंस्कारः उपनयनलक्षणः गुरौ गुरुकुलनिवासो विद्याध्ययनार्थमिति शेषः । आत्ममीमांसा ब्रह्मविचारः शौचं बाह्याभ्यन्तरशुद्धिः शुभाः क्रियाः यागादिलक्षणाः ॥ ४२ ॥ ४३ ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेवं यज्ञस्य मुख्यफलाभावेप्युत्तरमीमांसान्याये चित्तशुद्धिपरत्वे भवतु अतोधिकारोऽनुचित इति चेत्तत्राहुः—नासामिति—संस्काराणामहेतुत्वमन्वयव्यतिरेकव्यभिचारात् संस्काररहितासु स्त्रीषु भक्तिसम्भवात् संस्कारवत्स्वस्मासु तदभावात् तदाहुः आसां स्त्रीणां द्विजातिसंस्कारः उपनयनं नास्ति नापि गुरौ निवासो वेदाध्ययनं तपः स्वधर्मः श्रौतस्मार्तकर्माणि इन्द्रियनिग्रहो वा स्नानादिना क्लेशसहनं वा नाप्यात्ममीमांसा आत्मविचारः नापि शौचं नापि शुभाः क्रियाः अग्निहोत्रादयः ॥ ४२ ॥

एवं भक्त्यधिकरणे साधनाभावं निरूप्य भक्तिमाहुः—अथापीति । नन्वस्या भक्तेः संस्कारा न साधनभूताः यथा जार इति इमामाशङ्कां व्यावर्तयन्ति—उत्तमश्लोक इति । उत्तमैरपि व्यासवाल्मीकिपराशरादिभिः श्लोकैः कीर्त्यते इत्यनेन प्रमाणोत्कर्ष उक्तः । प्रमेयोत्कर्षमाह—कृष्ण इति । फलोत्कर्षोप्युक्तः साधनोत्कर्षमाह—योगेश्वरेश्वर इति । योगेश्वराणामपीश्वरे निरन्तरं साऽपि भक्तिर्दृढा पत्यादिभिः प्रतिबद्धापि नविहतेति तैलधारावदनवच्छिन्ना सर्वतोऽधिका । अन्वयव्यभिचारमाह—नचास्माकमिति । ब्रह्मचर्यादिभिः संस्कारवतामपि । ननु, तासां जन्मान्तरे संस्काराः सिद्धाः चर्वियश एताः अन्यथा अनुपरित्यागो न स्यात् अतः पुरुषा एवैते पूर्वजन्मनि गोपिका इव भवतां च—

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।

नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" ॥

इति ॥ ४३ ॥

अतो भवतां बहुजन्मसंस्कारा न जाता इत्याशङ्क्याप्रपन्नां तस्य समाधानमाहुः—नन्विति । कोमलसम्बोधनेन तु सत्यमेवमेव स्वार्थे विमूढानां गृहेहया प्रमत्तानां नो ऽस्माकं गोपवाक्यैः पूर्वस्थितिं स्मारयामास वयमपि भगवदीया एव पूर्वस्थिता ततो दैत्यावेशात् दैत्यप्रभुदेशे स्थित्वा तैः पाल्यमानाः तदन्नभोजिनो विस्मृतस्वरूपा जाताः तच्च भगवान् गोपवाक्यमिषेण स्मारयामास अन्यथा अन्नार्थं किं भगवान् याचते अस्मांश्च पुनः स्वकीयान् जानाति अहो आश्चर्यमेतत् कथं वाक्यमात्रेण प्रबोध इति अलौकिकसामर्थ्यं हि भगवतः अहो इति तस्यानुकरणम् अनेन पूर्वोक्तपक्षो निराकृताः स्त्रियोऽप्येताः स्वस्यैव भगवतो दास्यः वयं च दासाः नात्र सन्देहः अन्यथा प्रातकूलतर्कं वक्ष्यन्ति स्वार्थे भगवत्सेवायां विमूढा गृहेहया इतिकृत्यचिन्ता गृहधर्माश्च तत्रापि प्रमत्ताः तच्चिन्तया भगवत्सेवायां वा प्रमत्ताः अतः स्वसेवकान् स्मारितवान् साक्षादुपदेशेऽनधिकारिणो मत्वा गोपवाक्यैः तथा करणे हेतुः सतां गतिरिति, सतामयमेव गतिरिति यद्येवं भगवानुपेक्षेत तदा सन्तो नष्टा एव भवेयुः ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यासां पतिश्वशुरादिरूपेण वयं गुरवस्ता इमाः कृतार्था अभूवन् वयम् अन्धकूपे पतिता एवेत्याहुः—अहो इति । दुर्गमोऽस्माभिरनुभवितुमशक्योऽत इयत्ता यस्य तथाभूतं भावं हा प्राणेश्वर ! कृष्णेत्यादिगद्गदस्वरवचनकम्पाश्रुपुलकवैवर्ण्याद्यनुभावज्ञापितं कृष्णे प्रेमाणं पश्यत । ननु, स्त्रीणां पत्युरितरस्मिन् भावोऽनुचितस्तत्राह, जगद्गुरौ यदारोपादेव पत्यौ स्त्रीणां गुरुत्वं विहितं साक्षाद्भूते तस्मिन् खलु को विचार इति भावः यो भावः मृत्युपाशान् अविध्यत् सद्यश्चिच्छेद गृहाभिधानिति गृहपत्यपत्यादिष्व सामासक्तिगन्धोपि सम्प्रति न दृश्यत इत्यद्यारभ्य एता एवास्माकं गुरव इति पतिभिरप्यद्यारभ्य कृष्णानुरागिण्य इमा आदरणीया एव न तु मनसा भार्या एव मन्तव्या इति भावः ॥ ४१ ॥

नत्वासां कृष्णानुरागे हेतुरस्मद्वस्य इत्याहुः—नासामिति । योगेश्वरे इति स एव स्वभक्तेर्हेतुं जानात्युपपादयति च नाश्व इति भावः । तेन कृष्णरूपगुणश्रवणापि व्रजस्थमालिकादिवनिताजनसत्सङ्गरूपो मूलहेतुस्तैरज्ञातत्वान्नोक्त इति शुकदेवाभिप्रायः ॥ ४२—४३ ॥

क्व भगवतः कारुण्यं क्व चाऽस्माकं दौरात्म्यमित्याहुः नन्विति ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योऽविध्यत अच्छिनत तं दुरन्तमपारं भावं भक्तिं पश्यत ॥ ४१ ॥ क्रिया सन्ध्योपासनाद्यः ॥ ४२—४५ ॥

---

भाषा टीका

अहो ! बडो आश्चर्य है, स्त्रियन की जू जगत् के गुरु श्रीकृष्ण में कैसी भक्ति भई है, कि—जो भक्ति ने घर रूप मृत्यु की फासीन कूं काटि देय है ॥ ४१ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

श्रुतावतारगुणामप्यस्माकं तावद्विमोहिन्येवाभूत् किमुताश्रुतावतारगुणानामित्यभिप्रायेणाहुः—देवा इति द्वाभ्याम्। देवादयो यन्मया स एव भगवान् साक्षाद्यदुषु जातोऽवतीर्ण इति मात्रस्यापि तावन्न विद्महे न ज्ञातवन्तःस्मः॥ ४७॥ ४८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अन्यथा स्मारयितृत्वेनाऽपि तर्हि स्त्रीणां किमर्थं कृतमिति तत्राह—ईशस्येति॥ ४५॥

आत्मदोषापवर्गेण अन्यत्र सञ्चलत्वादिरूपकीयदोषपरित्यागेन स्थैर्यस्वभावेनेत्यर्थः॥ ४९—५१॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतत्सर्वं याचनान्यथानुपपत्त्या कल्पते तत्रान्यथोपपत्तिं कल्पयित्वा परिहरन्ति—अन्यथेति। भगवतस्तु नापेक्षितं किञ्चित् नापि दुःखनिवृत्तिः तत्साधनं वा नापि सुखं तत्साधनं वा पूर्णकामत्वात् तस्य हि कामाः पूर्णा उत्पन्ना विषयैर्न पूर्यन्ते लौकिकवत् किन्तु पूर्णा एवाविर्भवन्ति अतो नित्यविषयास्ते तथा सति याऽऽत्मकामना भगवत्याविर्भूता सा अन्नसहितैवेति सिद्धार्थं याचनमनुपपन्नं परमुद्दिश्यान्तरं चेत् तदा सिद्धमपि दूरीकृत्वा साधनान्तरं करोति असाधनं वा बोधयति तस्मादस्मत्प्रबोध एव याचनफलम्। किञ्च, कैवल्याद्याशिषां पतिर्भगवान् कैवल्यं केवलता सङ्घातनिवृत्त्या केवलस्थितिः प्रपञ्चापत्तिरूपं तत्प्रथमं फलं ततः पूर्वं दुःखमेव अतः कैवल्ये प्राप्ते ततः स्वरूपेण भजनं तत आनन्दाविर्भावः ततो भगवति प्रवेशः भक्तिर्वा तदनन्तरं धर्मा भगवदीया भगवदाज्ञापनरूपाः अर्थाश्च तदीयाः कामाश्च एवं कैवल्याद्या या आशिषः तासां पतिरयं दाता नियामकः तथासति गोपानां क्षुधेव न स्यात् नापि तैः प्रार्थ्येत लोकानामपि कैवल्यादिदाता नहि तान् सञ्जाते स्थापयति येन क्षुद्भवेत् अतः क्षुधमप्युत्पाद्य विद्यमानेऽप्यन्ने तददत्त्वा बोधनार्थमेवात्र प्रेषितवान्। किञ्च, ईशितव्यैरस्माभिः किं स्यात् वयमीशितव्याः दासाः नहि दासान्नं भुज्यते हि तेभ्यो दीयते एव न हि महाराजस्य दिनमात्रव्यवस्थामपि कश्चिद्दासः सम्पादयितुं शक्तः नाप्यस्माभिस्तस्याग्रे कृत्यम् अत ईशस्य एतदनुकरणमात्रं न तु याचनम् अनुकरणं तु रसोत्पत्त्यर्थमिति निश्चयः नहि नटस्य योगिभावदर्शने किञ्चित् कृत्यमस्ति विना रसोत्पादनं तथा भगवद्याच्ञानुकरणमपि बोधनार्थमेव॥ ४५॥

ननु, पूर्णोऽप्यवतारं कृत्वा लीलया नट इव लौकिकं सम्पादयति अतो याच्ञा युक्तेति चेत् ? तत्राहुः—हित्वान्यानिति। यदि याचनीयं लक्ष्मीरेव वक्तव्या किं भिक्षुकैः नच मन्तव्यं लक्ष्मीः कार्यान्तरव्यापृतेति या अन्यान् सर्वानेव हित्वा भजते कृतार्थे तत्रापि पादस्पर्शं आशामात्रं वा चेदाशां प्राप्नुयात् कृतार्था भवेत् तां विहायान्यया चनमन्यार्थमेव। ननु, लक्ष्म्याः चाञ्चल्यमस्त्यतस्तदा न स्थितेति चेत्? तत्राहुः-आत्मदोषापवर्गेणेति। आत्मनो दोषश्चाञ्चल्यं तस्यापवर्गः निवृत्तिः पुनरुत्पत्तिरहिता एवमेव हि भगवत्सेवकानां धर्मः। ननु, लोकाः पूर्वमप्याहुः बलिर्याचितो भगवतेति तथेदानीमपि भविष्यतीति चेत् तत्राहुः तद्याञ्चा जनमोहिनीति। जनानेव व्यामोहयतीति अन्यथा स्वस्मिन्नेव शरीरे त्रैलोक्यप्रदर्शितं व्यर्थं स्यात् स्वस्यैव सिद्धत्वात् न याचनमिति स ज्ञापितः लोकास्तु व्यामोहिताः॥ ४६॥

किञ्च देशादयः सर्वे तदात्मका एव तथा सति तत्र दानबुद्धिः मोहनव्यतिरेकेण न सम्भवेत् अत इदमपि याचनं मोहनार्थमेव "पुरुष एवेदं सर्वम्" इति श्रुत्यनुसारेण सर्वे पदार्था भगवदात्मिका इति ज्ञायन्ते तथापि यो मोहः स याच्ञैव॥ ४७॥

ननु, स पुरुषः यदात्मकं जगत् तस्मिन्नप्येतस्मिन्नज्ञानात् अदानमुचितमेवेत्याशङ्क्याहुः-स एवेति। स पुरुष एवायं भगवान् ततोऽप्यधिकः पुरुषोत्तमः। किञ्च, साक्षादयं यज्ञ आधिदैविको विष्णुः ब्राह्मणभोजनसङ्कल्पेऽपि योगेश्वराणामयमीश्वरः स्वामी एतादृशो यदुषु जात इति अस्माभिः श्रुतवन्तो वयं तथापि पूर्वसंस्कारलोपात् विशेषमौढ्यात् भगवन्तं न विद्महे॥ ४८॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अन्यथा निरुपाधिकारुण्यं विना पूर्णकामस्य अस्माभिः किं प्रयोजनं न किमपीत्यर्थः। ईशस्य एतत् अन्नप्रार्थनं खलु विडम्बनं लाघवमेव यस्मादित्यर्थः। यद्वा, तस्मादेतत् ईशस्य ईशकर्तृकम् अस्मत्कर्मकं विडम्बनं तिरस्कारः॥ ४५॥

ननु, क्षुधार्तत्वादेवेदमन्नप्रार्थनं नतु कारुण्यं नापि पूर्णकामत्वादिकं गोचारणाद्यनुपपत्तेस्तत्राहुः-हित्वेति। असकृत् मुहुः श्रीः सम्पल्लक्ष्मीः स्वात्मनो दोषस्य चाञ्चल्यस्य अपवर्गेण त्यागेन विशिष्य चाञ्चल्यं परित्यज्येत्यर्थः। तस्यापि याच्ञाविकं जनान् अस्मद्विधान् मोहयति नायमीश्वर इति प्रत्याययति॥ ४६॥

मोहमेव विवृण्वन्ति, देश इति॥ ४७—४९॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीः महालक्ष्मीः अन्यान् ब्रह्मादीन् हित्वा यं श्रीकृष्णं सकृदपि पादस्पर्शाशया स्वात्मदोषापवर्गेण शोभनस्य सर्वगुणसम्पन्नस्यात्मनो मनसो ये दोषाः दूषकाः भजनवैमुख्यकराः भावस्तेषामपवर्गेण त्यागेन भजते तस्य याच्ञा जनमोहिनीत्यर्थः॥ ४६॥ ४७॥

इत्येवम् आश्चर्यम् सर्वत्र श्रुतवन्तो वयं हि तथाहि न विद्महे न ज्ञातवन्तः॥ ४८—५१॥

---

### भाषा टीका।

नहीं तो कैवल्य सूं आदि लेकें सकल पुरुषार्थन के पति पूर्णकाम ईश्वर कूं हम सरीखे निगमन सोंतऊ तुच्छन सौं

अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ।
भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥ ४९ ॥
नमस्तुभ्यं भगवते कृष्णायाऽकुण्ठमेधसे ।
यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥ ५० ॥
स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ।
अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥ ५१ ॥
इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ।
दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाचलन् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे यज्ञपत्न्युद्धरणं नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

### भाषा टीका ।

कौनसो प्रयोजन रह्यो ? यह भात मांगिवो तो केवल हम पै कृपा करिवे को छल मात्र कीनो हो ॥ ४५ ॥

जिनके चरण कमल के स्पर्श की चाहना सों ब्रह्मादिकन कूं त्यागि के अपनो चंचलतारूप दोष दूर करवे कूं लक्ष्मी जिनकों भजै है, तिन श्रीकृष्ण को मांगिवो जनन के मोह करन वारो है ॥ ४६ ॥

देश, काल, न्यारे २ द्रव्य, मन्त्र, तंत्र, ऋत्विज, अग्नि, देवता यजमान, यज्ञ और धर्म ये सब जिन मय हैं ॥ ४७ ॥

ये वोही साक्षात् योगेश्वरन केऊ ईश्वर विष्णु भगवान् हैं। और हमन ने सुनी है कि—वोई विष्णु यदुन में उत्पन्न भये हैं, तौ भी ऐसे हम मूढ हैं कि—कृष्ण कूं नहीं जानत भये ॥ ४८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न चाचलन् तयोर्दर्शनाय न जग्मुः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मूढत्वमेव दर्शयन्तस्तत्कारणमायामाभावेन विस्मिताः सन्तः तच्छरणमाय भक्त्या सर्वेषां तदीश्वरमेव प्रणमन्ति—नम इति । अ[illegible] । अचिन्त्यानन्तैश्वर्याय अकुण्ठमेधसे अलुप्तज्ञानाय, स्वेषां त[illegible]त्यमाहुः—यन्मायेति । भ्रमामः पुनः पुनस्तत्रैवाभिनिवेशं प्राप्नुम जलावर्त्तादिवत् कदाचिदपि ततो निर्गन्तुं न शक्नुम इत्यर्थः ॥ ५० ॥

एवं परमदैन्यं गताः श्रीभगवन्तं क्षमापयन्ति—स इति । स कृष्णो नोऽस्माकम् अतिक्रममपराधं क्षन्तुमर्हति योग्यो भवति तत्र हेतुः स्वस्य तस्यैव मायया मोहितचित्तानाम् अत एव न विज्ञातोऽनुभावः तन्माहात्म्यं यैस्तेषां यदि चास्माकमपराधः तथापि स आद्यः पुरुषः सहस्रशीर्षादिरूपः तन्मुखादेवोत्पन्नानां विप्राणां पितृवदपराधक्षमायुक्तेति भावः । यद्वा, आद्यः सर्वश्रेष्ठः अतो निकृष्टानामस्माकमपराधं क्षन्तुमर्हत्येव । किञ्च, पुरि शयानात् पुरुषोऽन्तर्यामी अतस्तेन यथा नियुक्ताः स्मः तथैव कृतवन्तो वयमिति । यद्वा, आद्यः पुरुषः पुरुषोत्तम इत्यर्थः । दीनवात्सल्यब्रह्मण्यदेवत्वादिनिजस्वाभाविकमाहात्म्यात् क्षन्तुमर्हत्येवेति भावः ॥ ५१ ॥

स्वम् असाधारणम् अवममपराधं तदेव दर्शयति—कृतं हेलनं मनुष्यदृष्ट्याऽवज्ञा यैस्ते अत एव दिदृक्षवोऽपि स्वाघक्षमापनाय मिलितुमिच्छवोऽपि व्रजं प्रति न चाऽचलन् सकृदपि पादविक्षेपं न कृतवन्त इत्यर्थः । तत्र हेतुः अथ कात्स्न्र्येन कंसात् भीताः श्रीभगवति दृढविश्वासानुत्पत्त्या निजानिष्टशङ्कयेत्यर्थः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अविज्ञातानुभावानाम् अविज्ञात भगवदनुभावानाम् ॥ ५१।५२ ॥

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमनुतप्ताः प्रणाममन्तरेण स्वापराधक्षमानिमित्तमनुपलभमाना नमस्कुर्वाणाः क्षमापयन्ति—नम इति द्वाभ्याम् । अज्ञानकृतमपराधं जानात्येवेत्यभिप्रायेण विशिंषन्ति अकुण्ठमेधस इति । प्रतिहता मेधा धिषणा यस्य तस्मै "नित्यमसिच् प्रजामेधयोः" (५।४।१२२)इति असिच् स्वयं त्वकुण्ठमेधाः वयं तन्मायामोहितधियः अतः क्षन्तुमर्हस्येवेत्यभिप्रायेणाहुः—यन्मायेति । कर्मवर्त्मसु तद्भक्तिविधुरेषु केवलं यज्ञादिकर्ममार्गेषु भ्रमामः पुरुषार्थसाधनबुद्धिं कुर्मः यद्वा "ते तं भुक्त्वा स्वर्गलोकं विशालम्" इत्याद्युक्तविधगमनागमनमार्गेषु पुण्यपापात्मककर्मोचितस्वर्गनरकादिमार्गेषु वा भ्रमामः ॥ ५० ॥

अतः स्वमायया मोहितचित्तानामत एवाविज्ञातोऽनुभावो महिमा यैस्तेषां नोऽस्माकं व्यतिक्रममपराधं क्षन्तुमर्हति ॥ ५१ ॥

इत्थन्तावत्कृष्णे विषये कृतं हेलनमपराधो यैस्तथाभूताः शनैः स्वकृतमपराधमनुस्मृत्य ततस्तं श्रीकृष्णं द्रष्टुमिच्छवोऽपि कंसाद्भीताः स्वस्थानाच्च चलितवन्तः द्रष्टुं न जग्मुः किन्तु तं ध्यायन्तः स्वस्थान एव तस्थुः ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथापि अनुतप्ता अपि हरिं दिदृक्षवो द्रष्टुकामाश्च नाचलन् नागच्छन् कुतः कंसाद्भीता इति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥
( विजयध्वजरीत्या एकविंशोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वापराधः समर्थितः तस्यापराधस्य क्षमापनार्थं नमन्ति नम इति । अत्रैकः श्लोको विगीतः सोऽपि व्याख्यायते अहो इत्याश्चर्यं वयमिति श्लाघायां वयं धन्यतमाः कृतार्थाः येषामस्माकं तादृश्यः स्त्रियः यासां भक्त्या स्मारकत्वेनोपस्थितया अस्माकमपि हरौ मतिर्निर्मला जातेति तुभ्यं भगवते नम इति अपराधेन दीनभावे जाते आविर्भूतो भगवानिति लक्ष्यते अन्यथा तुभ्यमिति न वदेयुः अनेन तेषामपराधो गत इति निश्चितं तस्य षड्गुणान् दृष्ट्वा नमस्यन्ति भगवते इति दृष्ट्वा ऽदृष्टयोः साङ्कर्याभावार्थमुच्यते स्वरूपमपि ज्ञातवन्तः कृष्णायेति तस्य पूर्णज्ञानशक्तिं दृष्ट्वा आहुः—अकुण्ठा मेधा बुद्धिर्यस्येति । यद्यपि भगवच्छब्देनैव नित्यज्ञानवत्त्वं प्राप्तं तथापि यथा "सर्वस्येशानः" इति श्रुतेरैश्वर्यं साधारणं तथा सर्वज्ञ इति श्रुतेर्ज्ञानमपि तादृशमेव भगवत्पदेनोच्यते एवं सति "मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि" इति वाक्यात् केवलभक्तविषयकं स्वीयत्वेन यज्ज्ञानं पुष्टिमार्गीयं तदत्र मेधाशब्देनोच्यते तदस्मद्विषयकं पूर्वमासीन्मध्येऽस्माकं बाहिर्मुख्येन तस्याकुण्ठितत्वेन तत्कार्यमेव याञ्चारूपं प्रबोधं कृतवान् नतूपेक्षामिति भावः । नाप्यस्माकमपराधः भ्रान्तत्वादिति वदन्तः भ्रमस्त्वत्कृत एवेत्याहुः—यन्मायेति । भगवन्माययैव व्यामोहितबुद्धयः कर्ममार्गेषु भ्रमामः अन्यथा ज्ञाने भक्तौ वा मतिः स्यात् शुद्धे वा वैदिके कर्मणि यत्कर्मवर्त्मस्वेवाभासरूपेषु तत्रापि निश्चयाभावात् केवलं भ्रमामः अतो मोहिता एव ॥ ४९ ॥ ५० ॥

वाचापि क्षमापयन्ति—स वैष इति । क्रियया स्वापराधक्षमापनं न भवति दुर्बलत्वात् अतः स वा भगवानेव वा यस्यास्माभिरपराधः कृतः स एवैषः अग्रे आविर्भूतः अनेन ज्ञायते क्षमां करिष्यतीति । किञ्च, आद्योयं सर्वेषां पिता अतः पुत्राणामपराधमिव सहिष्यति । किञ्च, पुरुषोऽयमन्तर्यामी अतः तत्प्रेरणयैव कृतमिति युक्तमस्य सहनम् । किञ्च, स्वमायामोहितात्मनां तस्यैव मायया मोहितचित्तानाम् अत एव न विज्ञातः भगवदीयः अनुभावो यैः तादृशानाम् अतिक्रममपराधं क्षन्तुमर्हति स्वधर्मविचारेणापि क्षमा युक्तेत्यर्थः । एवमपराधक्षमां कारयित्वा निवृत्तव्यापारा जाताः न तु स्वयं तत्र गत्वा लोकन्यायेन क्षमां कारितवन्तः ॥ ५१ ॥

तत्र हेतुमाह—इतीति । स्वाघं स्वापराधमनुस्मृत्य ते ब्राह्मणाः कृष्णे विद्यमानेऽपि कृतहेलना अपि दिदृक्षवोऽपि उद्वसाय अथ भिन्नप्रक्रमेण व्रजं प्रति न चाचलन् तत्र हेतुः कंसाद्भीता इति तत्र गते कंसो भगवानयमिति ज्ञात्वा कदाचिदपकारं कुर्यात् व्रजस्य तदा महानयमपराधो भवेत् अतो व्रजं न गताः ॥ ५२ ॥

इति श्रीमद्भागवते श्रीमल्लक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्यां
दशमस्कन्धविवरणे विंशाऽध्यायविवरणम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपराधादतिव्यग्रा प्रणमन्ति । नम इति ॥ ५० ॥

अतिदैन्यग्रस्ताः भगवन्तं क्षमापयन्ति स वै इति अतिक्रममपराधम् ॥ ५१ ॥

ननु, तर्हि तदानीमेव तत्राशोकवने गत्वा विलम्ब्य व्रजं वा गत्वा कथं भगवन्तं शरणं न गतास्तत्राह—दिदृक्षव इति । तदानीं शोकानुतापादिमत्त्वात् सर्वैकमत्याभावाच्चाशोकवनं न गताः विलम्बे सति सायाह्ने व्रजं प्रति गतावैकमत्ये सति न चाचलन्निति चकाराच्चलन्तोऽपीत्याक्षेपलब्धं तत्र हेतुः सर्वेषामपि मनस्येकः सहसैवोद्भूत इत्याह-कंसाद्भीता इति । सूचकैरकस्मद्वृत्तान्तः कंसोऽद्यैवास्माकं जीविका हरिष्यतीति भयः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्याकुला इत्यर्थः । अतः पत्न्यादिकर्तृकवधत्यागादिलक्षणं भयं ब्राह्मणीनां कृष्णदर्शने किल न प्रतिबध्नाति इमेत्यत्र प्रेमैव हेतुः ब्राह्मणानां तु मनःकल्पितो भयाभासः एव तत्र प्रतिबध्नाति इमेत्यत्र भगवन्मायैव हेतुर्ज्ञेयः ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोविंशोऽत्रदशमेसङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्दर्शनाय न अचलन जग्मुः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाऽध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषाटीका

तब उनमें सों कितने समझवार बोले, कि—पछितायबे की कौनसी बात है, हमहूं बडे धन्य हैं जो हमारी घरवारी ऐसी हैं, कि—जिनकी भक्ति सूं श्रीहरि में हमारी हूं मति निश्चल होय गई ॥ ४९ ॥

तिन अकुण्ठ बुद्धि वारे कृष्ण भगवान् कूं नमस्कार है, कि, जिनकी माया सों मोहित होयके हम कर्म मार्ग में भ्रम रहे हैं ॥ ५० ॥

सो वो आदि पुरुष भगवान् आपकी माया सूं मोहित चित्त वारे, और आपके प्रभाव कों न जानन वारे ऐसे हम गरीबन के अपराध को आप क्षमा करिवे योग्य हो ॥ ५१ ॥

कृष्ण के विषै अपराध करन वारे वे ब्राह्मण अपने अपराध को स्मरण करिकें श्रीकृष्ण के दर्शन की इच्छाऊ कों करत भये। परंच तौऊ कंस के भय सों नहीं जात भये ॥५२॥

इति श्रीमद्भागवत दशमस्कन्ध में तेईसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

## ॥ चतुर्विंशोऽध्यायः ॥

—○:*:○—

श्रीशुक उवाच ।

भगवानपि तत्रैव बलदेवेन संयुतः ।
अपश्यन्निवसन् गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥
तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः ।
प्रश्रयावनतोऽपृच्छद्वृद्धान्नन्दपुरोगमान् ॥ २ ॥
कथ्यतां मे पितः ! कोऽयं सम्भ्रमो व उपागतः ।
किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥
एतद्ब्रूहि महान् कामो मह्यं शुश्रूषवे पितः ! ।
नहि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ।
कृष्णः प्रवर्त्तयामास गोवर्द्धनमखोत्सवम् ॥ १ ॥
भूसुराणां क्रियागर्वं निरस्य स्वः सुरेषु च ।
मघवन्मदभङ्गाय तन्मखं समवारयत् ॥

आश्रयाः कंसाद्भीताः स्वाश्रमस्था एव भगवन्तमभजन् भगवानपि तत्रैव निवसन्निन्द्रयागकृतोद्यमान्गोपानपश्यदिति सम्बन्धः ॥ १—२ ॥

वृथा सम्भ्रमो न भवति मखो ऽयमित्येवं चेत् किमत्र फलं का देवता केनाधिकारिणा केन वा साधनेन साध्यते ॥ ३ ॥

एतद् ब्रूहि महान् कामो मम श्रवणे वर्त्तते । यद्वा, तव महान् कामो दृश्यत इति तूष्णीं स्थितं प्रत्याह—नेति । सर्वात्मनां सर्वत्रात्मदृष्टीनाम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वं व्रजकुमारीः प्रति "याताऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" इति हेमन्तगतया निजाङ्गीकृतास्तासु शरद्रात्रिषु ताभिः सह श्रीभगवान् रेमे स ताः खलु शरदन्तरा व्यवहित-शरत्सम्बन्धिन्य एव सम्भवन्ति तद्रमणारम्भश्च शरत्पूर्णिमायामेव निर्देक्ष्यते सा च शरन्मध्यस्थाश्विनपूर्णिमैव सम्भाव्यते कार्त्तिकशुक्लप्रतिपद्विशेषा गोवर्द्धनपूजा सा च रासलीलायां व्रजदेवीभिरनुकृता गोवर्द्धनपूजानन्तरमेव वरुणलोक-गमनं ततः पूर्वां शरदमेवारभ्यागामिनीं यावत् क्रमात् गोवर्द्धन-पूजा वरुणलोकगमनवस्त्रहरणयज्ञपत्न्युपचर्याब्रह्मरासक्रीडा ज्ञेयाः तत्र तत्सद्वर्णनिर्णयः कंसवधान्ते करिष्यते वैपरीत्यो-क्तिस्तु प्रेमवैवश्यात् क्वचित् सजातीयत्वाच्च अथ भगवानपि तत्रैवेत्यस्यायमर्थः यत्र तद्यागयोग्ये गोष्ठनिकट एव स्थान-विशेषे सङ्गम्य निवसन्तो गोपाः कृतोद्यमा बभूवुः भगवा-नपि तत्रैव बलदेवेन संयुतो निवसन् इन्द्रयागकृतोद्यमान् गोपान् अपश्यत् पश्यन्नेवासीत् तदुद्देश्येन यागान्तरसाधनेच्छया न तु प्रथमं किञ्चिदुक्तवानित्यर्थः । यत्तु श्रीविष्णुपुराणे—

"विमलाम्बरनक्षत्रे काले चाऽभ्यागते व्रजम् ।
ददर्शेन्द्रमहारम्भायोद्यतांस्तान् व्रजौकसः" ॥ इति ।

श्रीहरिवंशे—

"व्रजमाजग्मतुस्तौ तु व्रजे शुश्रुवतुस्तदा ।
प्राप्तं शक्रमहं वीरौ गोपांश्चोत्सवलालसान्" ॥ इति ।

तत्खलु सामान्यतो दर्शनमत्र तु विशेषत इति भेदः एषा च क्रीडा कार्त्तिकशुक्लप्रतिपदि कार्त्तिकविधानस्य मध्यदेशीयाना-माचारस्य च तत एव प्रवृत्तेः "अपरस्मिन्नुत्सवे वर्षे" इति वक्ष्यमाणाच्च तथा चोक्तं पाद्मे दीपान्वितामावास्याकृत्यान्ते "प्रातर्गोवर्द्धनः पूज्यो रात्रौ द्यूतं प्रवर्त्तते" इति तस्मात् श्रीहरि-वंशे वर्षाशरत्सन्धिप्रायवर्णनं समुद्रतीरादिवन्मध्यदेशेऽपि तदानीं वर्षाणां बाहुल्येन कदाचित्सम्भवत्वापेक्षया ॥ १ ॥

ततश्च तस्य पूर्वपूर्वदृष्टस्येन्द्रमखस्य तथा श्रीव्रजराजेन प्रत्युत्तरयिष्यमाणस्य तदधिकस्य चार्थस्याभिज्ञोऽपि अपृच्छत् तत्र च भगवानपि सर्वसद्गुणनिधित्वेन विनयावनत एव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्रापृच्छत् अभिज्ञोऽपि हेतुः सर्वस्यात्मा परमात्मेति प्रश्ने हेतुः सर्वान् दर्शयन् स्वार्थे प्रवर्त्तयन्नपि तथा सः भवतु नाम पूर्वेषां मद्व्यवहितानां मद्दाहरङ्गदेवतापूजादिकं किन्त्वेषां मत्सान्निहितानां मदन्तरङ्गपूजैव मत्सुखकरी मत्पित्रादीनां तु "तद्भूरिभाग्यम्" इत्यादिलक्षणमहामहिमत्वादतिक्षुद्रस्य तत्रापि महागर्वस्येन्द्रस्य पूजा मम दुःखकरीति सम्प्रति परमान्तरङ्ग-गोवर्द्धनपूजाप्रवर्त्तनेच्छयैव वृद्धेषु तत्रैव मुख्यतात्मीयतापेक्षया विशेषतः स्वपितरि प्रश्न इति ज्ञेयः ॥ २ ॥

कथ्यतामित्यर्द्धकम् । मे मह्यं कथ्यतामिति सर्वेऽन्ये जानन्ति केवलं मयैव न ज्ञायत इति मां प्रत्येव कथ्यतामिति भावः । एषा च पितृसन्तोषार्थमौग्ध्यप्रायवाणीव आवश्यकतच्छ्रवणाय वः युष्माकं सर्वेषामेव न तु केषाञ्चित् तत्र च सम्भ्रमः त्वराविशेषः वैयग्र्यं वा श्रेष्ठेण सम्यक् भ्रम एवेत्यर्थः । उपागतः दूरे स्थातुं योग्योऽपि समीपं प्राप्तः उपस्थापितः इति वा ॥ ३ ॥

केनेति तृतीयान्तपदेन कर्तृकरणयोः प्रश्नः एतद्ब्रूहीति पुनरुक्तिर्निजशुश्रूषातिशयबोधनाय मह्यं मां प्रीणयितुमित्यर्थः यद्वा, ननु बालके त्वयि तत्कथनेन किं तत्राह—शुश्रूषते पुत्रस्येच्छावश्यं पूरयितुं युज्यत इति भावः । श्रेष्ठेण शुश्रूषुं धर्मं ब्रूयादिति न्यायेनावश्यकतोक्ता पितरिति पुनः सम्बोधनं स्नेहविशेषजननाय पूर्वपूर्वमप्ययं जानात्येव तथापि यत्पृच्छति तत्र च सोल्लुण्ठमिव यत्पृच्छति तत् पुनरिन्द्रं प्रत्यनादरेणैवेति गम्यते नारायणसमगुणत्वात् तज्जायदानवृन्दघातित्वाच्चेति संशय्य तूष्णीं स्थितं प्रत्याह—नहीति । सार्द्धकेन तत्र नहीत्येकम् उदासीन इत्यर्द्धकं साधूनामिति तेषां विकर्मस्वप्रवृत्त्या गोप्यत्वाभावात् साधूनामेव वचनं सर्वात्मनामित्यादिविशेषणत्रयेण परमात्मा तद्दृष्टीनाम् इह जगति कुत्रापीत्यर्थः । अतः तत्तल्लक्षणवद्भिर्भवद्भिर्न गोपयितुं युज्यत इति भावः । ननु निजहितार्थं देवताराधकानां कुतः सर्वात्मता युक्ता अतोऽस्वपरदृष्टित्वादिकं तव च नास्त्येवेति भवतु, तथापि मयि गोपयितुं न युज्यत एवेत्याह उदासीन इति वर्ज्यः मन्त्रभङ्गभयात् अहं तु सुहृत्सु परमान्तरङ्गः पुत्र एवेत्यतो न वर्ज्य एवेति भावः ॥ ४—५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेन्द्रप्रीतिकरयागभञ्जं ततः सङ्क्रुद्धेन्द्रचोदितमहावातवर्षपीडितशरणागतव्रजवासिरक्षणोपयुक्तगोवर्द्धनाचलोद्धरणात्मकं भगवच्चेष्टितमनुवर्णयति—श्रीशुक उवाच; भगवानपीति । तत्रैव वृन्दावन एव निवसन्निन्द्रयागार्थं कृत उद्यमः प्रयत्नो यैस्तान् गोपानपश्यत् ॥ १ ॥

सर्वात्मा सर्वदर्शनश्चेति च हेतुगर्भम् अतस्तदभिज्ञोऽपि उद्यमस्येन्द्रयागार्थत्वं जानन्नप्यज्ञ इवाजानतो नम्रः नन्दप्रभृतीन् वृद्धानपृच्छत् ॥ २ ॥

प्रश्नप्रकारमेवाह—कथ्यतामिति । हे पितः ! वो युष्माकं कः



संभ्रमः उपस्थितः संभ्रमो न भवति मखोऽयमित्यत्राह—किंफलमिति । मखश्चेत् किमत्र फलं कस्य सम्बन्धी उद्देशः का देवतेति प्रश्नः केन साधनेन साध्यत इति साधनप्रश्नः ॥ ३ ॥

हे पितः श्रोतुमिच्छवे मह्यमेतत् मत्पृष्टं ब्रूहि अत्र महान् कामः शुश्रूषा वर्त्तते गोप्यत्वात् वक्तुं श्रोतुं च न योग्यमित्याशङ्कां निराकरोति—नहीति । साधूनां कृत्यं न हि गोप्यं तत्र हेतुवदन् विशिनष्टि सर्वात्मनां सर्वेऽप्यात्मानः आत्मतुल्या येषां ज्ञानैकाकारत्वेन सर्वेऽप्यात्मान एकरूपा एवेति जानतामित्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वमहिमानं प्रकटयितुमुत्पथवर्ती पुरुषः सन्मार्गोपदेशेन शिक्षणीय इति शास्त्रशासनं पश्यन् कृष्णः सन्मार्गं दर्शयितुमुपक्रमत इत्याह—शुक इति । तत्र व्रज एव निवसन् ॥ १ ॥

सर्वात्मा सर्वदर्शन इत्येतद्द्वयं तदभिज्ञत्वे हेतुः प्रश्रयः सेवाशीलता ॥ २ ॥

कोऽयं किं विषयः मखविषयश्चेत्तत्राह—किं फलमिति । दृष्टमुतादृष्टं फलम् यद्वा, किमर्थं सम्भ्रमः अस्य सम्भ्रमस्य किं फलं साध्यं मखश्चेदत्राह—कस्येति । कां देवतामुद्दिश्य द्रव्यत्यागलक्षणः केनाधिकारिणा हेतुना वा ॥ ३ ॥

तदेतत्पृष्टं सर्वं मह्यं ब्रूहि । किमर्थं ? महान् कामः मम तस्मिन् कार्ये महत्याकाङ्क्षा वर्तते तुशब्दो भेदार्थः इह वाक्यव्यवहारविशेषे यत्सर्वात्मना कीर्त्यं वक्तुं योग्यं तत्साधूनां गोप्यं न हि कुत इत्थं सङ्कल्प्यत इत्यतः प्रसिद्धत्वादित्याह, हीति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवानपीति अत्रापिशब्देन तत्रैव निवसन्नितीत्थं चैवं लभ्यते एवं ते पत्नीसम्बन्धेनातिविश्वस्ता असान्निहिता नाचख्युः चकाराद्यत् किञ्चित् तत्सांमुख्येन यज्ञमेव कुर्वन्तोऽतिष्ठन् अथ किञ्चित्कालान्तरे भगवानपि बलदेवेन संयुतस्तत्रैव निवसन् स्वयं यत्र निवसति तत्रापीत्यर्थः । इत्यभिलाषसमञ्जसत्वं दर्शितं ब्रह्मादिदुर्लभं तत्संवाससहेतुमेऽयस्तेऽप इन्द्रस्यातिक्षोभविषयत्वात् बलदेवेन संयुत इति स कदाचित् सोढुं शक्नोति बलदेवस्तु तत् परमभक्तौ नैवेत्यर्थः । तस्य यज्ञस्य अभि सर्वतोभावेन सिद्धान्तानुष्ठानादिप्रकारेण जानातीति तदभिज्ञस्तादृशोऽपि पूर्वपूर्वमप्ययं जानात्येव तथापि यत् पृच्छति तत् पुनरिन्द्रं प्रत्यनादरेणैवेति गम्यते ॥ १—४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकविंशेऽहैतुकस्य कर्मणो विनिवारणम् ।
कृत्वा तद्वैदिकं चक्रे युक्त्यैवेति निरूप्यते ॥
यथा प्रबोधिता विप्रा एवं देवा अपि स्वयम् ।
महतां महती शिक्षा उत्तरोत्तरमुत्तमा ।
स्त्रीणां वचनाग्निं जगृहे विप्राणां तु स्त्रियः सती: ॥
देवानां तु हविष्येव येषु तेषु प्रतिष्ठिताः ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तामसान् राजसांश्चैव समुद्धृत्य मनीषया ॥
सात्त्विकोद्धरणे ऽयन्तु यागभङ्गं चकार ह ।

पूर्वाध्याये ब्राह्मणा नागता इत्युक्तं तथा सति गोकुले वैदिको यज्ञो न प्रवर्त्तेत इत्याशङ्क्य भगवानपि सर्वनिरपेक्षोऽपि स्वार्थं तत्र यज्ञं कारितवानित्याह—भगवानपीति । एवं प्रकारेण तत्रैव गोकुले बलभद्रसहितः नितरां वसन् निरोधं कुर्वन् अन्यार्थं प्रवर्त्तमानान् दृष्टवान् तदाह, गोपानिन्द्रयागकृतोद्यमानिति इन्द्रयागार्थं कृतः उद्यमो यैः वृद्धैर्गोपैः तानपश्यत् एतेन शुकस्याश्चर्यमपि ज्ञापितं भवति, तथाहि यत्र विहितत्वेनापि कृतः श्रवणादिः परम्परा भगवत्सम्बन्धी धर्मस्तिष्ठति न तत्रान्यधर्मसम्बन्धः सम्भवतीहतु नैसर्गिकैश्वर्यादिमान् साक्षात्स्वर्मीवसन्नन्यधर्मासहिष्णुषःस्वैश्वर्यादिषु जागरूकेषु सत्स्वपि तत्रापि स्वयमन्यधर्ममपश्यत्स्वकिरणानाश्यं तमःपुञ्जं तरणिरिव अत एव निवासोक्तिरपि एवं भगवत्पदञ्च क्रियाशक्तिप्रधानेन देवत्वेन भजनधर्मविरोधिनाशकेन साहित्यमप्याश्चर्यहेतुः अत्रायमाशयः एतावत्पर्यन्तं निवासमात्रं कृतवान् न त्वन्यधर्मबाधनमप्यत एतावत्कालपर्यन्तं यागकरणमित्यभिप्रेत्यापि निवासोक्तिः शनैः शनैर्निरोधं कर्त्तुमिच्छा नत्वेकदैव सर्वप्रकारकनतङ्कुसं तथा सति लीलारसो न स्यादत इयदवधितैतत्करणमिति चिरकालवर्त्तमानताबोधकशतृप्रत्ययेन ज्ञाप्यते यद्यपि वर्त्तमानत्वमात्रमर्थस्तस्य तथाप्यखण्डदण्डायमानो वासश्चिरकालीन इति तस्य वर्त्तमानत्वबोधने यादृशः स तादृशस्य तथा त्वमायातीति तथा इदं दर्शनं तेषु स्वज्ञानशक्तिस्थापनरूपाम् अन्यथा पारम्पर्यागतत्वेनोपपत्तिमत्त्वेनचाकरणे सुखाप्राप्तिहेतुत्वेन चेन्द्रयागं जानतां लोकरीतिपरिनिष्ठितबुद्धीनां बालभाषितेन कथमेतादृशं कर्म त्याज्यमित्येव ज्ञानं स्यान्न तु भगवदुक्ताङ्गीकारः अतः पूर्वमेतादृशीं स्वज्ञानशक्तिं बीजवदुप्ततया तेषु स्थापयित्वा तदुद्बोधकानि वचनानि वदिष्यति तेन सर्वसिद्धिरिति ज्ञेयम् ॥ १ ॥

तच्च भगवद्भक्तैर्भगवता निरुद्धैर्न कर्त्तव्यमिति तन्निषेधार्थं तन्मतं पूर्वपक्षीकृत्य सिद्धान्तं वक्तुं प्रस्तावनामाह—तदभिज्ञ इति । भगवान् हि सर्वज्ञः लोकन्यायेनापि पूर्ववर्षे कृतत्वात् तदभिज्ञः सर्वेषामन्तरात्मत्वाच्च सर्वज्ञानशक्तिमत्वाच्च सर्वस्यैव दर्शनं यस्येति एवम्भूतोऽपि प्रश्रयेण विनयेनावनतो भूत्वा अजानन्निव नन्दपुरोगमान् वृद्धानपृच्छत् ॥ २ ॥

प्रश्नमेवाह—कथ्यतामिति । पितरिति सम्बोधनं उत्तरश्रवपरिज्ञानार्थम् अनुशिष्टेन हि भाव्यं पितुः पुत्रेणाति अत एव मे मह्यं कथ्यतां कोयं सम्भ्रमो व उपागत इति सम्यक् भ्रमो यत्र तादृशः को वा पदार्थः समागत इति सम्भ्रम उत्सवः यत्र तादृशः को वा अलौकिकत्वेन तस्य विधानं वक्तव्यमित्याह, किं प्रयत्नो वा अलौकिकत्वेन तस्य विधानं वक्तव्यमित्याह, किं फलमिति । आदौ कर्मणः फलं ज्ञातव्यमन्यथा प्रवृत्तिरेव न स्यात् "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते,, इति न्यायात् किं च कस्य वा उद्देशः कमुद्दिश्यैतत्कर्म प्रवृत्तमिति का देवतेत्यर्थः । केन वा द्रव्येण साध्यत इति सर्वत्र हि द्रव्यदेवताफलानि वक्तव्यानि महान् सम्भ्रम इति ज्ञापयितुं मखो महान् यागः वेदेष्वप्रसिद्ध इति तदुपहासोऽपि ॥ ३ ॥

एतत्सर्वं विधिप्रकारेण वक्तव्यमिति पुनराह—एतद्ब्रूहीति । किं तत् स्यात्तत्राह महान् कामो मह्यमिति अयं महानेव कामः अभिलषितोऽर्थः तद्विषयिणीच्छा वा अतः शुश्रूषवे मह्यं वदेति अत्यन्तज्ञापनाय पुनः पितरिति सम्बोधनं बाला हि पितरं बहुधा सम्बोधयन्तीति । ननु, गोप्यमेतत् न बालकेभ्यो वक्तव्यमिति चेत् तत्राह, न हि गोप्यं हीति । इदं न गोप्यं प्रतिभाति महान् सम्भ्रमो दृश्यत इति किञ्च, साधूनां न किञ्चिद्गोप्यम् अन्यथा साधुत्वमेव न स्यात् अतो हि अयं युक्तं किञ्च साधूनां कृत्यमेव नास्ति कुतः ? पुनर्गोप्यं कृत्यं भविष्यति साधवोऽत्र शास्त्रीयाः "कृपालुरकृतद्रोहः" इत्यादिधर्मयुक्ताः तेषामगोप्यकार्यत्वे हेतुः सर्वात्मनामिति सर्वेष्वेवात्मा हृदयं येषां तेषु ते हि सर्वहिते रताः तत्रापीहामिंल्लोके न तेषां कृत्यं गोप्यमनेन भगवच्छास्त्रं कदाचिन्न वदेयुरपि न तु लौकिकं किञ्चित् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वपित्रा सह संवल्य मखं व्याधूय वज्रिणः ।
चतुर्विंशे गिरीन्द्रस्य मखं प्रावर्त्तयद्धरिः ॥

गोष्ठस्यास्यान्यां निवसन् स्वभ्रातृभिः सह नन्द इन्द्रयागसम्भारसिद्ध्यर्थं गोपानुद्योजयामास भगवानपि तत्रैव निवसन् इन्द्रयागकृतोद्यमान् गोपान् अपश्यदिति सम्बन्धः ॥ १ ॥

पूर्वपूर्ववर्षदृष्टत्वात्तस्याभिज्ञोऽपि सर्वात्मेति यद्यप्यन्तर्यामिस्वरूपेणेन्द्रयागे स्वयमेव प्रेरयति तदपि लीलाकौतुकार्थमित्यर्थः सर्वम् इन्द्रगर्वखण्डनसप्तरात्रपर्यन्तप्रियजनसहवासविलासादिकमुदर्कं पश्यतीति सः ॥ २ ॥

मखो भविष्यति तत्सिद्ध्यर्थमयं सम्भ्रम इति चेत् किमत्र फलं कस्य चोद्देशः को देवोऽत्र पूज्यत्वेन निर्दिष्ट इत्यर्थः । केन कर्त्रा करणेन वा ॥ ३ ॥

ननु, बालकस्य तव किमेतत् प्रश्नेन तत्राह—महान् कामोऽभिलाषो ममात्र वर्त्तते । यद्वा, महान् कामो युष्मदादीनामत्र दृश्यते अत एव तं मह्यं शुश्रूषवे शुश्रूषुं मां प्रीणयितुमित्यर्थः रहस्यत्वादनतिकोविदबालकादिषु वक्तुमनर्हमिति चेत्तत्र स्वस्यातिकोविदत्वमुक्तिवैचित्र्यैव द्योतयन्नाह—नहीति । सर्वं एवात्मान आत्मतुल्या येषां तेषाम् अत एवायं स्वोन्तरङ्गः अयं परो बहिरङ्ग इति न विद्यते दृष्टिर्येषां तेषाम् अत एव तद्भेदा मित्रोदासीनविद्वेषा न सन्तीत्याह—अमित्रेति । गृहस्था वयमेवम्भूताः साधवो भवितुं न शक्नुम इति चेत्तदपि मय्येतद्गोपयितुं न युज्यत इत्याह—उदासीनोऽरिवदिति । तुल्यार्थकवति प्रत्ययेनारिणा तुल्य उदासीनो वर्ज्य इत्यर्थः।अरिसाधर्म्यञ्चास्यारिमित्रत्वेनापरिकीर्त्तितत्वाच्च स्वपकारकत्वाद्विति ज्ञेयमत एव "यो विपक्षः सुहृत्पक्षः स तटस्थो निगद्यते" इत्युज्ज्वलनीलमणौ तल्लक्षणं दृष्टं यत्तूदासीनो नारिणा तुल्यो नापि सुहृदा तुल्यः स तु न वर्ज्यो नाप्युपादेयः स्वकर्म्मैविरसत एव सनोद्धिकृतः सुहृदात्ममित्रत्वादात्मवद्विश्वास्य इत्यर्थः । अहं तु पुत्रः सुहृदः सकाशादप्यन्तरङ्ग इत्यर्थः ॥ ४—५ ॥

---

(१)अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् ।
उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ॥ ५ ॥
ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ॥ ६ ॥
तत्र तावत् क्रियायोगो भवतां किं विचारितः ।
अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥ ७ ॥

नन्द उवाच ।

पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः ।
तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चतुर्विंशे इन्द्रमखनिराकरणपूर्वकं श्रीकृष्णप्रवर्तितं गोवर्द्धनमहोत्सवं वर्णयति—भगवानपीति आद्यया : कंसाद्भीताः व्रजाश्रमेभ्यो न चालयन् तेष्वेवस्थिता: भगवन्तमभजन् भगवानपि तत्रैववृन्दावने निवसन् इन्द्रयागायकृतः उद्यमो यैस्तान् गोपानपश्य दित्यन्वयः ॥ १ ॥

तदभिज्ञोऽपीन्द्रयागोद्यमाभिज्ञोऽप्यपृच्छत् ॥ २ ॥

हे पितः! वो युष्माकं कः सम्भ्रमः उपागतः उपस्थितः एतन्मे कथ्यताम् सम्भ्रमः किन्तु मखोऽयमित्यत्राह—किमिति। मखश्चेत्तत्र किं फलम् कस्य चोद्देशः कां देवतामुद्दिश्यायं क्रियते केन साधनेन साध्यते च एतत् मह्यं शुश्रूषवे ब्रूहि ॥ ३ ॥

हे पितः! महान् कामो दृश्यते तवेति शेषः। तं काममहं स्वमतानुसारेण साधयिष्यामीति भावः गोप्यं कृत्यं न कथयामीत्यत्राह—नहीति, सार्द्धेन। साधूनां कृत्यं गोप्यं न ह्यस्ति तत्र हेतुगर्भं विशेषणं सर्वात्मनामिति सर्वं सर्वात्मनि वासुदेवे आत्मा मनो येषां सर्वं वासुदेवात्मकमिदमित्येवं ज्ञानवता मित्यर्थः ॥ ४ ॥

भाषा टीका ।

ॐइन्द्रयागनिवारकाय नमः ॥

श्रीशुकउवाच ॥

श्रीशुकदेवजी बोले, कि—बलदेवजी सहित श्रीकृष्ण व्रज में वासकरत कहा देखें हैं, कि, सगरे गोप इन्द्रके यज्ञ की तैयारी करि रहे हैं ॥ १ ॥

ताकूं भगवान् जानतेऊ रहे काहे सों, कि भगवान् सर्वात्मा हैं, और सर्व विषय के ज्ञानवारे हैं तौ भी बड़े विनीत और बड़े नम्र होयकें नन्दसों आदि लेकें वृद्ध गोपन सों पूछन लगे, ॥ २ ॥

श्रीभगवान् उवाच ॥

श्रीकृष्ण बोले, कि—हे पिताजी! ये तुमको कहा संभ्रम होय रह्यो है, सो कछु मोसों भी तौ कहो, कहा यायज्ञ का फल है और कौन देवता के तांई ये करयो जाय है और कौनसी वस्तुन तें ये यज्ञ होय सके है ॥ ३ ॥

हे पिता! ये आप कहौ मोकूं बड़ी सुनिबे की इच्छा होय रही है। और या संसार में साधुजनन [ सज्जनन ] को तौ कछु बात गोप्य हू नहीं है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत एव न विद्यते स्वः पर इति दृष्टिर्येषामिति स्वपरदृष्ट्यभावादेव तद्भेदाः अमित्रादयोऽपि तेषां न सन्तीत्याह—अमित्रेति। न मित्रमुदास्त उदासीनो विद्विड्येषां तेषां कृत्यं सर्वं कर्म न गोपनीयं किञ्चिदस्तीत्यर्थः। सत्यपि भेददर्शने उदासीनः शत्रुवद्वर्ज्यः आत्मतुल्यत्वात् सुहृन्मन्त्रेषु न वर्जनीय इत्याह—उदासीन इति ॥ ५ ॥

किञ्च सुहृद्भिः सह विचार्य ज्ञात्वैव कर्म कर्त्तव्यं न तु गतानुगतिकत्वमाश्रेयमित्याह—ज्ञात्वेति अज्ञात्वा च तत्र विदुषो यथा तत्कर्मफलं स्यात्तथा नाविदुषः ॥ ६ ॥

भवतामयं क्रियायोगः शास्त्रतोपि किं विचारितः प्रवृत्तो लौकिकाचारप्राप्तो वेति साधुत्वोपपत्तिकं भण्यतां कथ्यतामिति ॥ ७ ॥

आचारप्राप्त एवेति सहेतुकमाह—पर्जन्य इति। आत्ममूर्तयः प्रियमूर्तयः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अज्ञात्वा च रूढपरम्परयेत्यर्थः। कर्माणि दृष्टादृष्टफलानि कृष्यादियागादीनि यथायथा वत् ॥ ६ ॥

तत्र तेषु कर्मसु क्रियायोग इदमदृष्टफलं कर्म भवतां किं खलु विचारितः शास्त्रैकप्रमाणत्वात्तद्विचारप्राप्तः किमथवा लोकपरम्परयैव प्राप्ता इति साधुत्वोपपत्तिकं भण्यतां ताव-

(१) अस्तस्वपरेत्यादि वीर० शुकप० पा० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दिति प्रश्नान्तरं पश्चात् कर्तव्यमित्यर्थः । अनेन तत्तदाभिज्ञत्व-मपि सूचितं निजोक्तिग्रहणाय ॥ ७ ॥

पर्जन्यो वृष्टिद्वारा भगवान् ईश्वर इति भक्तिविशेषेण प्रीणनं सन्तर्पकं जीवनं मृतप्रायाणां तृणादीनां प्राणदम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्तस्वपरदृष्टीनां स्वपराभिमतदेहेषु आत्मदृष्टिरहितानाम् अभिज्ञोऽवास्तविद्विषां मित्रोदासीनशत्रुरहितानाम् उदसीनोऽविवुर्धैः हिताहितश्रवणानर्हत्वात् शत्रुतुल्य इत्यर्थः ॥ ५ ॥ ६ ॥

क्रियायोगः शास्त्रीयः ॥ ७ ॥

पर्जन्यो वर्षाधिदेवतेति इन्द्र एव विशेष्यः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्तस्वपरदृष्टीनामस्तारहितास्वपरेषु स्वपराभिमतदेहेषु दृष्टिर्युष्मदस्मद्दर्शनं येषां देहात्मनोर्याथात्म्यज्ञानामित्यर्थः । अत एव मित्रोदासीनशत्रुरहितानां नाहि समदर्शिनां गोप्यमस्तीति भावः । विषमदर्शिनामपि सुहृद्विषये न गोप्यमस्तीत्याह—उदासीन इति । आरवदुदासीनोपि वर्ज्य एव अनेनोदासीनामित्रयोर्गोप्यश्रवणप्रतिषेध उक्तः सुहृत्त्वात्मवत् स्वतुल्य उच्यते अतः सुहृदहं श्रोतुं योग्य एवेति भावः ॥ ५ ॥

किञ्च सुहृद्भिः सह ज्ञात्वा ज्ञात्वा पुनः पुनर्विचार्यैवायं लौकिको जनः कर्माण्यनुतिष्ठतीति लोकपरिपाटी प्रदृश्यते गतानुगतमात्रेणानुष्ठाने त्वन्धपरंपराप्रसङ्ग इति भावः किञ्च यथा विदुषः कर्मसिद्धिर्नाविदुषस्तथा भवेत् ॥ ६ ॥

तत्रैवंसति भवतामयं क्रियायोगः किं विचारितः सुहृद्भिः शास्त्रतः किं विचारित इत्यर्थः । आहोस्वित् केवलं लौकिक एवाचारप्राप्त एव भ्रान्तिमूलकोऽप्याचारोऽस्तीति भावः तदेतत् पृष्टं शृण्वतु यथा भवति तथा पृच्छतो मम भवद्भिः कथ्यताम् ॥ ७ ॥

आचारप्राप्त एवेति वदन् तस्य कर्तव्यत्वं सहेतुकमाह नन्दः—पर्जन्य इत्यादिभिश्चतुर्भिः । पर्जन्यो वर्षाधिदेवता स चेन्द्र एव यद्यपि—

> "अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु ।
> स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥

इत्यादिषु पर्जन्यः सूर्य इति प्रतीयते तथापीन्द्रशासनानुवर्त्ती मेघद्वारकं तस्य वर्षुकत्वमित्यविरोधः अस्त्विन्द्रः पर्जन्यः ततः किमतआह—मेघास्तस्येन्द्रस्य आत्ममूर्तयः स्वशरीरतुल्याः तदुपाश्रयाश्च इत्यर्थः । ते च मेघा भूतानां जीवानां जीवनं प्राणधारणसाधनभूतं प्रीणनमाप्यायकं प्राणाप्यायनद्वारा तद्धारणसाधनं पयः जलं वर्षन्ति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कथमेतदवगतमिति तत्राह—अस्तीति । निरस्तस्वकीयपरकीयबुद्धीनां शत्र्वादिसद्भावेऽयं विशेषो दुर्घट इति तत्राह, अभिज्ञेति । न विद्यते मित्रम् उदासीनः विद्विट् येषां ते तथा तेषां मित्रादिविशेषाभावात् स्वकीयत्वादिबुद्ध्यभावेन साधूनां गोप्यं नास्तीति प्रसिद्धमेवेत्यर्थः । ननु, चेतनानां चित्तस्य प्रमितत्वेन साधूनां मित्राद्यभाववचनं कथमेतदिति चेत् औपचारिकं परोक्षप्रिया इव हि देवाः "प्रत्यक्षद्विषः" इति श्रुतेः "षट्कर्णो भिद्यते मन्त्रः" इतिस्मृतेः । अतः कथं गोप्यं नास्तीत्याशङ्क्य योग्यतातिरेकेण मित्रादिकं नास्तीति सत्त्वं न तु सर्वात्मना अतो गोप्यं नास्त्येवेति शत्रुः सर्वथा वर्ज्यः मित्रविषये उदासीनोऽपि तथा तस्य शत्रौ कथनसम्भवादरिवत्सुहृद्वर्ज्यं आत्मवत्सुहृदवर्ज्यं इत्यभिप्रायेणाह—उदासीन इति । अतस्त्वत्सुहृत्त्वाद्गोप्यमपि मह्यं ब्रूहीति भावः ॥ ५ ॥

अस्तु तव वक्तव्यम् अथाप्यस्माकं फलज्ञानाभावेऽपि सन्ध्योपासनादिवदनुष्ठानं घटत इत्याशङ्क्य सत्यं ज्ञानाभावे युष्माकं फलप्राप्तिर्न स्यादित्याह—ज्ञात्वेति । कश्चित् ज्ञात्वाऽनुतिष्ठतेऽकश्चिदज्ञात्वा तत्र विदुषः कर्मसिद्धिः अनुष्ठानफलं स्यात् अविदुषः कर्मानुष्ठानमजानतः पुंसः यथावत्फलं न भवेत् मन्त्रावृत्त्या द्रव्यसम्पत्त्या च ऋत्विगनुगुणेन वा किञ्चित्सम्भवेऽपि पूर्णफलं न स्यादित्यर्थः । यथाऽविदुषो न स्यात् तथा विदुष इति वा ॥ ६ ॥

अस्त्वन्यत्र प्रकृते किमिति तत्राह—तत्रेति । तत्र दैवताकर्मणां मध्ये तावत्प्रथमं क्रियायोगाः कर्मानुष्ठानप्रकाराः लौकिकवृद्धव्यवहारादवगताः गतानुगतवद्वा ॥ ७ ॥

पर्जन्यशब्दस्य गर्जन्मेघेपि वर्तनात्तद्व्यावृत्त्यर्थम् इन्द्र इति तर्हि इन्द्र इत्येवालमिति चेन्न, अस्य पर्जन्यशब्दस्य मेघाभिमानित्वविशेषद्योतनार्थत्वात् तत्कथमत्राह, मेघा इति । आत्मवत् देहवन्मूर्तयः देहाः स्वदेहो यथाभिमन्यमानत्वेन प्रेष्ठस्तथा मेघा अपीति भावः । मेघैः किं प्रयोजनं लोकस्येत्याशङ्क्य "मिह सेचने" इति धातुनिष्पन्नमेघशब्दार्थसूचनपूर्वकं तत्प्रयोजनमाह—अभिवर्षन्तीति । प्राणनं चेष्टाकरणं जीवनं शरीराप्यायनम् अनेन प्राणशब्दविवरणं कृतं प्राणिनामिति पाठे पयसो गतेर्हेतुत्वेन यः शब्दवाच्यत्वे जलस्य "पयगतौ" इति धातोरर्थः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नारायणसमगुणत्वात् तज्जयिदानवन्दहननात्मेति संशय्य तूष्णीं स्थितं प्रत्याह—उदासीन इति ॥ ५ ॥

कर्माणि दृष्टादृष्टफलानि ॥ ६ ॥

तत्रादृष्टफलः क्रियायोगो विचारितः शास्त्रद्वारा ज्ञातः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, "न च गोप्यानि सर्वथा" इति शास्त्रात्कथमगोप्यमिति चेत्तत्राह—अस्तस्वपरदृष्टीनामिति । अस्ता गता स्वः परश्चेत्यवान्तरभेददृष्टिर्येषां परबुद्धौ सत्यां गोप्यशास्त्रं न तु तदभावे । किञ्च, न मित्रमुदासीनो विद्वेषी च येषां तेषु बुद्धिभेदाभावात् तत् कृताः मित्रोदासीनरिपवोऽपि न सन्ति तस्मात्सर्वत्र तुल्यबुद्धिरेव कर्त्तव्येत्युपदेशोऽपि अथ यदि नास्मिन् ज्ञानेऽधिकारः तस्मिन्नपि पक्षे द्वयी गतिः कर्त्तव्या त्याज्यात्याज्यभेदेन त्रिविधगतौ तु बुद्धिरतिनष्टा स्यात् सगुणापि भवेत् अतो द्वयमेव कर्त्तव्यमिति चतुर्णां भेदद्वयमेवाह—उदासीन इति । आत्ममित्रोदासीनरिपव इति चतुर्षु तत्रात्मा मित्रं चैकम् उदासीनः अरिश्चैकः अतः कार्येषु उदासीनः अरिवद्वर्ज्यः शत्रुवन्निराकार्यः सुहृन्मित्रं तु आत्मवदुच्यते इति प्रमाणम् ॥ ५ ॥

ननु, वक्तव्यं भवति परं न ज्ञायत इति चेत् तत्राह—ज्ञात्वाज्ञात्वेति यमर्थं ज्ञात्वा जनोऽनुतिष्ठति अज्ञात्वा चानुतिष्ठति तत्रापि कर्माणि वैदिकानि तत्र ज्ञानमावश्यकं कर्माणि ज्ञात्वा तत्सम्बन्धी पदार्थोऽनुष्ठेयः नान्यथा ततः किं स्यादत आह "विदुषः कर्मसिद्धिः स्यात्" इति । यस्तु जानाति तस्यैव कर्मसिद्धिः कर्मफलं स्यात् "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" इति श्रुतेः । वीर्यवत्तरमेव फलजनकम् अथवा संपूर्णं फलं ज्ञानेन भवति अल्पं तु फलमज्ञात्वापि भवतीत्याह—तथा नाविदुषो भवेदिति । अविदुषस्तथा फलं न भवेदिति ॥ ६ ॥

भवतो चैतद्वक्तव्यं किमेतत्कर्मवैदिकं स्मार्तं लौकिकं चेति एतदभावे अकर्त्तव्यमेवेत्याशयेनाह—तत्रेति । तत्रान्यकथनापेक्षया प्रथममेतद्वक्तव्यम् अयं विचारितः क्रियायोगः किं वैदिकः स्मार्तो वा अथवा लौकिकः कुलदेवधर्म इव एतत् एतेषामवान्तरनिर्णयरूपं पृच्छतो मे साधु यथा भवति तथा भण्यतां युक्तिपूर्वकं प्रमाणपूर्वकं वक्तव्यमित्यर्थः ॥ ७ ॥

एवं भगवता पृष्टो यादृशज्ञानेनेन्द्रयागं कृतवान् तं प्रकारमाह, पर्जन्य इति चतुर्भिः "हैतुकं शास्त्रमाश्रित्य भौतिकेन्द्राय लोकतः । प्रमात् परम्पराप्राप्तं कुर्वन्तीति निरूप्यते "हेतुशास्त्रमूलत्वात् प्रथमं हेतुमाह—पर्जन्यो नाम वृष्टिकर्त्ता देवः स भगवानेव अन्यथा तद्वेतसाऽऽधिकं जायत इति भगवतो जगत्कर्तृत्वं न स्यात् अतः पर्जन्यो भगवानेव, मेघाः पुनः तस्यात्मनो देवस्य मूर्त्तयः अवयवाः त एव हि सर्वेषामेव भूतानां प्रीणनरूपमाप्यायनजनकं जीवनजनकं पयः जलं वर्षन्ति अतः सर्वजगदुपकारकः पर्जन्य एव जलाप्याय्यामेव जीवन्ति सर्वे प्राणिनः अत उपकारी परमैश्वर्यं प्राप्तः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च, बुद्धिमदन्तरङ्गजनेन सह विचार्यं ज्ञात्वैव कर्म कर्त्तव्यम् न तु गतानुगतिकन्यायेनेत्याह—ज्ञात्वेति । अज्ञात्वा च कर्माणि दृष्टादृष्टफलानि कुर्वाणस्यासिद्धिरिति ॥ ६ ॥

विचार्य ज्ञात्वैव क्रियत इति चेत्तत्राह—तत्र कर्मसु मध्ये क्रियायोगो भवता भवत्सदृशफल एव किं शास्त्रप्राप्तत्वेन विचारितः अथवा लौकिकः लोकाचारप्राप्तत्वेन ॥ ७ ॥

लोकाचारप्राप्त एवेति सोपपत्तिकमाह—पर्जन्य इति । प्रीणनं सन्तर्पकं जीवनं मृतप्रायाण्यपि तृणादीनि जीवयतीति तत् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अत एवास्तपरदृष्टीनाममित्रोदासीनविद्विषाम् उक्तज्ञानाभावे तूदासीनोऽरिवच्छत्रुवद्वर्ज्यः सुहृत्तु आत्मवदुच्यते अतो न वर्ज्य इत्यर्थः ॥ ५ ॥

किञ्चायं कर्मनिष्ठः प्रसिद्धो जनः फलतः देवतातः साधनतश्च ज्ञात्वा कर्माणि योऽनुतिष्ठति स विद्वान् यस्त्वज्ञात्वाऽनुतिष्ठति स अविद्वान् तत्र विदुषो यथा कर्मसिद्धिः स्यात्तथाऽविदुषो नेत्यन्वयः ॥ ६ ॥

तत्र भवतामयं क्रियायोगः शास्त्रतः किं तावत् विचारितः फलदेवतासाधननिर्णयेन विहितोऽथवा लौकिकः लोकाचारत एव प्राप्तः तन्मे मम साधु यथा स्यात् तथा भण्यतां कथ्यताम् ॥ ७ ॥

जीवनफलकः इन्द्रदेवताकस्तदुपाध्य द्रव्यसाध्यः लोकाचारतः एव प्राप्त इत्युत्तरमाह—पर्जन्य इति चतुर्भिः । पर्जन्यः वृष्ट्यधिष्ठात्री देवता भगवानिन्द्रः "स्तनोमिमोक्षुमारेभे पर्जन्यः काल आगते" इति सूर्यस्य पर्जन्यत्वं मेघद्वारेन्द्रद्वारैवेति ज्ञेयम् । तस्येन्द्रस्य मेघाः आत्ममूर्त्तयः स्वनियम्यमूर्त्तयः अतस्ते मेघाः प्राणिनां तृप्तिकरं जीवनं जीवनहेतु पयोऽभिवर्षन्ति ॥ ८ ॥

---

भाषा टीका ।

काहे सों, कि—उनके अपनी और पराई दृष्टि तो अस्त [ दूर ] होय गई है। और न उनको कोई मित्र न उदासीन न वैरी तासों ये कछु और हू छिपायवे योग्य नहीं है। सो ये बात तो साधुजनन की भई, परंच विषम दृष्टि वारेन को ऊ सुहृदन तें कछु बात गोप्य नहीं है सो, कहें है, कि—जो उदास है सो तो शत्रु के तुल्य वर्जन करवे योग्य हैं, और जो सुहृद है सो तो आत्मा के सदृश कहावें हैं तासों उनतें कछु छिपायवे योग्य नहीं है ॥ ५ ॥

ये प्राणी जानके और बिना जाने कर्म करे है, परन्तु जानिकें कर्म करवे वारे को जैसी सिद्धि होय है, तैसी बिना जाने कर्म करन वारे कूं नहीं होय है ॥ ६ ॥

अच्छो तो प्रथम आप ये कहो, कि—आपने क्रिया योग विचारयो है, ये शास्त्रीय अथवा लौकिक है, या बात को मैंने प्रश्न कियो है सो जो आप जानते होओ तो भली भांत कहो ॥ ७ ॥

नन्द उवाच ॥

नन्दराय बोले, कि—पर्जन्य जो हैं सो भगवान् इन्द्र हैं और पर्जन्य जो मेघ हैं ते इन्द्र की प्यारी मूर्ति हैं । वे प्राणीन के तर्पण करवे वारे जिवावन वारे जल की वर्षा करें हैं ॥ ८ ॥

---

तं तात ! वयमन्ये च वार्मुचां पतिमीश्वरम् ।
द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः ॥ ९ ॥
तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे ।
पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥ १० ॥
य एवं विसृजेद्धर्मं पारम्पर्यागतं नरः ।
कामाल्लोभाद्भयाद्द्वेषात् स वै नाप्नोति शोभनम् ॥ ११ ॥

श्रीशुक उवाच ।

वचो निशम्य नन्दस्य तथाऽन्येषां व्रजौकसाम् ।
इन्द्राय मन्युं जनयन् पितरं प्राह केशवः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमित्यत आह—तमिति । तमिन्द्रं वार्मुचां मेघानां पतिं स्वामिनमीश्वरं नियन्तारम् तद्रेतसा तद्वृष्टिपयसा ॥ ९ ॥

उपजीवन्त्युपजीविकां कल्पयन्ति धर्मार्थकामसिद्धये । ननु, कृष्यादिभिर्जीवन्ति, किमिन्द्रेण ? तत्राह—पुंसामिति । फलभावनः फलसाधकः पर्जन्यं विना कृष्यादिवैफल्यादित्यर्थः ॥ १०-११ ॥

इन्द्राय मन्युं जनयन्निति कोपजननद्वारा गर्वपर्वतादिन्द्रमवतारयितुं देवतानिराकरणं न स्वयमेवाभिप्राय इत्यर्थः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तातेति सलालनं सम्बोधनं निजोक्तौ श्रद्धार्थं तदर्थाऽवगमार्थं च वयं गोपाः न च गोपालनार्थं केवलं वयमेव किन्तु अन्ये च नराः सर्वे । ननु, "सूर्यः स्वरश्मिभिर्भौमं रसमाकृष्य वर्षति" इत्यादिवचनात् सूर्याद्वृष्टिः प्रसिद्धा तत्राह—वार्मुचां मेघानां पतिं मेघरूपाणां सूर्यरश्मीनामपि स एवेश्वर इत्यर्थः । तथा च श्रीविष्णुपुराणे "भौममेतत्पयो दुग्धं गोभिः सूर्यस्य वारिदैः । पर्जन्यः सर्वलोकस्य भवाय भुवि वर्षति" इति कुतः ईश्वरः देवेन्द्रत्वादित्यर्थः । अन्यथा भयमुत्पादयेदपीति भावः । यद्वा, वैष्णवप्रवराणां भवतां नान्यदेव पूजा युक्ता तत्राह—ईश्वरम् अन्तर्यामिदृष्ट्यैवेत्यर्थः । अभ्यर्च्यमानं तद्रेतसा सिद्धैरिति तत्त्वतःस्तेष्वस्माकं स्वाम्याभावेनार्तौ तैस्तत्पूजैव युक्तेति भावः । अन्यथा अकृतज्ञत्वादिदोषप्रसक्तेः यजन्त इति प्रथमपुरुषत्वमार्षं यजामः एवमग्रे चोपजीवन्तीति । यद्वा, पुत्राभिप्रायज्ञानेन तद्वाग्लङ्घनभयाज्जिदोषपरिहारार्थमन्येषां प्राधान्यविवक्षया तैः सह विशेषसम्बन्धेन प्रथमपुरुषत्वम् ॥ ९ ॥

ननु, तर्हि तेरस्माकं को नामोपकारः ? तत्राह—तच्छेषेणेति । त्रिवर्गः धर्मार्थकामाः स एव फलं तस्य हेतवे सिद्ध्यर्थम् एवं दृष्टादृष्टफलहेतुताका पुंसामिति तैर्व्याख्यातम् यद्वा, ननु पुरुषप्रयत्नैकसाधिका खेत्स्यति तत्राह—पुंसामिति । देवताप्रसादेनैव धर्मादिसिद्धेः पर्जन्यस्य च देवराजत्वादिति भावः । पुरुषकाराणाम् उद्यमानाम् ॥ १० ॥

व्यतिरेके दोषमप्याह—य इति । कामात् अदृष्टविषयात् द्वेषात् देवताविषयात् तदुपासकविषयाद्वा भयात् विरोधिजनहेतुकात् लोभात् दृष्टविषयात् वा शब्दोऽध्याहार्यः शोभनं नाप्नोति इहामुत्र च तस्य क्षेमं न स्यादित्यर्थः । अत्रैषां श्रीव्रजवासिनां त्रिवर्गलिप्सा तद्दोषजिहासा च श्रीकृष्णैकनिबन्धनेति प्रतिपादितमेव ततः सर्वथाऽऽसनाभिरामाधितामेव धत्त इति विवेचनीयम् ॥ ११ ॥

तथान्येषां व्रजौकसां वचो निशम्येति तेऽपि स्वयं श्रीनन्देनैव प्रमाणिता वा तथैवोचुरिति इन्द्राय मन्युं जनयन्निति तस्य बहिरङ्गत्वमनादरणीयत्वं च ज्ञापितं पितरमिति अस्य परमान्तरङ्गत्वं परमादरणीयत्वं च व्यञ्जितं को ब्रह्मा ईशो रुद्रस्तौ वयते निजमाहिम्ना व्याप्नोतीति कस्तत्र वराकः इन्द्र इति बोधयति ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तद्रेतसा तज्जलेन ॥ ९—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किमत आह—तमिति । हे तात ! तं वारिमुचां मेघानां पतिं पालकमीश्वरं नियन्तारं चेन्द्रमस्मत्प्रभृतयः सर्वे नराः तस्येन्द्रस्य रेतसा रेतःस्थानीयेन जलेन सिद्धैर्नानाविधैर्द्रव्यैर्द्रव्यसाधनकैः क्रतुभिर्यजन्ते ॥ ९ ॥

एवमिष्ट्वा तच्छेषेण यागविशिष्टद्रव्येण उपजीवन्ति जना इति शेषः जीविकां कल्पयन्ति किमर्थं त्रिवर्गफलहेतवे धर्मार्थकामहेतवे सिद्धये तं यजन्तीत्यन्वयः । त्रिवर्गफलहेतवे उपजीवन्तीति वा एवमिन्द्रयागावशिष्टेन जीवनं ततस्त्रिवर्गसिद्धिरित्युक्तम् । ननु, कृष्यादिभिरुपजीवनं ततस्त्रैवर्गसिद्धिरिति । किमिन्द्रेणेत्यत आह पुंसामिति ; पुरुषं कुर्वन्ति त्रिवर्गफलयुक्तं कुर्वन्तीति. पुरुषकारा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

त्रिवर्गप्रापका इति यावत् तेषां मध्ये पर्जन्यः इन्द्र एव पुंसां फलभावनः फलप्रापकः स्वायत्तवृष्ट्यादिद्वारेति भावः ॥ १० ॥

अतस्तदाराधनात्मकमिदं वृद्धाचारपरंपराप्राप्तं यः पुमान् कामाल्लोभाद्भयाद्द्वेषाद्वा त्यजेत् स शोभनं सुखं नाप्नोति किन्तु दुःखमेव प्राप्नोतीति भावः ॥ ११ ॥

इत्थं नन्दस्य तथाऽन्येषां गोपानामपि वचो निशम्य भगवानिन्द्राय मन्युं जनयन् क्रोधजननद्वारा गर्वं वारयितुं नन्दं प्राह ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यतो मेघा लोकोपकारिणः ततस्तेषाममुषां जलदानां मेघानां विभुः। ईश्वरम् भयच्छूयां स्थितिसमर्थं तेषां मेघानां रेतसा दत्तिफललक्षणेन जलेन सिक्तैः उत्पन्नैः अन्यैश्च नराः ॥ ९ ॥

तच्छेषेण दृष्टावशिष्टेन त्रिवर्गफलहेतवे धर्मार्थकामलक्षणपुरुषार्थसिद्धये पुरुषकाराणां पराक्रमसिद्धकर्मणां फलभावनः फलसाधकः ॥ १० ॥

विपक्षे बाधकमाह—य एवमिति। कामाद्दुर्विषयाभिलाषात् लोभाद्वित्तव्ययशङ्कया भयात् राजभयात् द्वेषाद्देवताद्वेषात् ॥ ११ ॥

मन्युं क्रोधम् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इन्द्र एव सर्वदेवोपास्योऽतस्तद्भजनं सर्वे कुर्वन्तीत्याह—तातेति। एतेन सम्बोधनप्रतारणाय वयं वैश्याः अन्ये क्षत्रिया ब्राह्मणाश्च सुतरां ये केचित् स्वल्पोपजीविनस्ते सर्वे वामुचां मेघानां पतिमिन्द्र पोषकत्वेनेश्वरं तद्रेतसैव बीजभूतेन जलेन सिद्धैव्रीह्यादिभिः क्रतुभिः नानाविधैरेव योगैः नराः सर्व एव मनुष्याः यजन्ति मनुष्याधिकारित्वात् शास्त्रस्य ॥ ९ ॥

ततस्तच्छेषेण यज्ञशिष्टान्नेन त्रिवर्गफलसिद्ध्यर्थं जीवन्तीत्याह—तच्छेषेणेति। तस्येन्द्रस्य यज्ञस्य वा शेषेण शिष्टान्नेन शेषत्वं वा प्राप्य उपजीवन्ति तच्छेषमनुपजीवन्ति त्रिवर्गफलस्य हेतुर्जीवनं जीवनार्थं भक्तं तद्दास्यं वा उपजीवन्तीत्यर्थः। ननु, स्वपौरुषेणात्मसुखाय स्वत एव जीवन्ति किमिन्द्रेण कार्यमित्याशङ्क्याह—पुंस इति। पुरुषस्य ये पुरुषकाराः पौरुषाणि कृष्यादिव्यापाराः तेषां सर्वेषां पर्जन्यः एव फलं भावयति अन्यथा वृष्ट्यभावे पुरुषप्रयत्नोऽपि व्यर्थ एव स्यात् अतः स्वसामर्थ्ये विद्यमानेऽप्युपजीव्य इन्द्रः ॥ १० ॥

किं च, परम्परया प्राप्तोऽयं धर्मः अतः कर्त्तव्यः अकरणे प्रत्यवायमेवाभिनिर्दिशत्याह—य एवमिति। यथा ग्रामदेवताः अपूजिताः तत्कालमेव ग्रामं दहन्ति अतः पूजनीयाः "प्राप्तसेवापरित्यागो दोषमूलमिदं स्मृतम्" इति एवं प्रकारेण पारम्पर्यागतं धर्मत्वेन क्रियमाणं स्वयं नरो भूत्वा यो विसृजेत् सः शोभनं शुभफलं न प्राप्नोति त्यागे हेतुचतुष्टयं कामक्रोधलोभा अन्यभयात् प्रतिबन्धश्च तानाह—कामादिति। कामे कृते स्वादुः यावता कालेन यागः क्रियते तावान् कालो भोग एव व्याप्रियत इति कालसङ्कोचादकरणं कामहेतुकं लोभो द्रव्यगतो लोभो द्रव्यं स्वार्थे तिष्ठत्विति अकरणं भयमन्यस्मात् क्लेशभयं वा द्वेषो देवताविषयकः प्रमाणाविषयको वा ॥ ११ ॥

एवं चतुर्भिर्हेतुभिरभजनेऽनिष्टमेव फलं शुभफलाभावो वा शुभफले प्रतिबन्धो वा भवेत् एवं हेतुवादमाश्रित्य लौकिकस्मार्त्तवैदिकानां सम्बन्धरहितमपि कर्त्तव्यमिति निरूपितं तद्भगवान् सर्वधर्मरक्षकः पाषण्डधर्मनिराकरणकर्त्ता दूषितवानित्याह—वचो निशम्येति। नन्दस्य वचो निशम्य तथाऽन्येषां सम्मत्यर्थं पुरोहितानामपि व्रजवासिनः सर्वे मूर्खा एवेति विचिन्त्याधिभौतिक इन्द्रो वृथा मन्यत इति दृष्टे धर्मो न भवतीतीन्द्राय मन्युं जनयन् पितरं नन्दं प्रति भगवान् प्राह। ननु, देवद्रोहं कुतः कृतवान्? जाते वा भगवतः किं स्यात्? तत्राह—केशव इति। ब्रह्मशिवयोरपि मोक्षदाता कोऽयं वराक इन्द्रः अतः पाषण्डधर्मं ब्रह्मादीनां देवत्वमेव गच्छतीति तन्निवृत्त्यर्थमेवं कृतवानित्यर्थः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तातेति सलालनसम्बोधनेन तादृशपूज्यदेवतानामेवानुग्रहेणैव तावद्गुणवान् त्वं पुत्रः प्राप्तोऽस्यतस्तत्पूजा प्रयत्नेनापि त्वया शुभंयुना न कर्त्तव्यमिति द्योतितम् वस्तुतस्तद्यज्ञे कर्तृत्वाभिमानोऽपि नोचित इत्याह—तद्रेतसा तद्रूपपयसा सिद्धैः ॥ ९ ॥

तच्छेषेण तद्यज्ञशिष्टान्नेन उपजीवन्ति जीविकामुपकल्पयन्ति तत्र जीविकापि यथेष्टविषयभोगार्थेत्याह—त्रिवर्गेति। पुरुषकाराणां त्रिवर्गार्थमुद्यमानानां फलं यत्त्रिवर्ग एव तस्य भावनः साधकः पर्जन्याद्वृष्टिर्वृष्टेरन्नम् अन्नाज्जीविका जीविकातो धर्मो धर्मात्सुखम् इत्यर्थः। यतो वस्तुतः पर्जन्य एव त्रिवर्गे मूलहेतुरतः पर्जन्य एवेज्यत इति भावः ॥ १० ॥

व्यतिरेके दोषमाह—य इति। कामात् स्वेच्छातः लोभात् द्रव्यव्ययाभावविवक्षात् भयात् भीषणलोकहेतुकात् द्वेषात् देवताविषयकात् ॥ ११ ॥

इन्द्राय इन्द्रस्य इन्द्रमन्युजननस्य प्रयोजनं तद्गर्वखण्डनप्रतिवर्षगोवर्धनोत्सवप्रवर्त्तनतद्गुहास्थानिजप्रियजनसहवास—लीलाविलासादिकमुपरिष्टाज्ज्ञास्यते ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे तात! कृष्ण! तं वामुचां मेघानां पतिमिन्द्रं तद्रेतसा वृष्टिपयसा सिद्धैर्द्रव्यैः साध्यो ये क्रतवस्तैर्यजन्ते ॥ ९ ॥

तच्छेषेण क्रतुशिष्टेन द्रव्येण उपजीवन्ति जीविकां कल्पयन्ति। ननु, कृष्यादिभिः पुरुषकारैर्जीवन्ति किं पर्जन्ययजनेन तत्राह—पुंसां ये पुरुषकाराः पुरुषं कुर्वन्तीति पुरुषकाराः कृष्यादिरूपाः जीवनोपायाः तेषां भावयति साधयतीति फलभावनः पर्जन्यः पुरुषकाराः दैवनिरपेक्षा न फलदा इत्यर्थः ॥ १० ॥

मन्यूत्पादनद्वारा स्वप्रभावपरिचितोऽभिमानगर्वं वारयितुं मन्युं जनयन् पितरं प्राह—"कालात्मना भगवता शक्रदर्पजिघांसता" इति

श्रीभगवानुवाच ।

कर्मणा जायते जन्तुः कर्मणैव विलीयते ।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥ १३ ॥
अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ।
कर्त्तारं भजते सोऽपि न ह्यकर्त्तुः प्रभुर्हि सः ॥ १४ ॥
किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्त्तिनाम् ।
अनीशेनाऽन्यथा कर्तुं स्वभावविहितं नृणाम् ॥ १५ ॥
स्वभावतन्त्रो हि जनः स्वभावमनुवर्त्तते ।
स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वक्ष्यमाणात् यथाऽन्येषां तथैव तदनुरोधेनैव मन्दस्य यशो निशम्य ननु श्रीनन्देन स्वमतं प्रकटितम् यद्यस्ति यदिच्छन्ति चानुमोदेत तस्य तदिति शास्त्रानुरोधेन गतानुगतिकानां स्वबन्धूनामेव मतं महाभागवतेन भगवदिच्छानुसारिणा श्रीनन्दे नोक्तम् ॥ ११ ॥

अथ सर्वेश्वरः सर्वशक्तिः सर्वकारणकारणः श्रीपुरुषोत्तमो जिज्ञास्यस्तज्ञिविलोपयोगिनिवृत्तकर्मयोगः तस्यान्तःकरण शुद्धिद्वारा ज्ञानोत्पत्तिः फलं सर्वात्मा देवदेवः तदर्चनेन सर्वमर्चितं स्यात् स पुरुषोत्तमः क्रियायोगस्य भोक्ता प्रभुश्च "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति वचनात् तत्र वासुदेवाङ्गतया यथायथमीज्यानामिन्द्रादीनां न निराकारणम् तत्साधनं च शास्त्रीयं प्रसिद्धम् सत्क्रियायोगः "तत्र तावत् क्रियायोगो भवतां किं विचारितः" इत्यनेन भगवता पृष्टो मुमुक्षु विषयः "गतानुगतिको लोको न लोकस्तत्त्वचिन्तकः" इत्येवं गतानुगतिकैर्गोपैः परमभागवतैरपि कालगत्या विस्मृतः मोक्षधर्मे कालगत्या भगवदीयस्य क्रियायोगस्य लोपो नारायणीयोपाख्यानेऽपि प्रसिद्ध एव यत्र सर्वशास्त्रार्थभूतवासुदेवनैरपेक्ष्येण" तृप्तयैनमिद्र स्तर्पयसि"इत्यादिवाक्यार्थभूताः शास्त्रार्थान भिज्ञैः वाक्यार्थज्ञानवलेनेन्द्राद्या एव स्वातन्त्र्येणेज्या यत्रा-श्रत्येवं विद्भिर्लौकैः इन्द्रादयो देवा एव स्वातन्त्र्येण इज्यन्ते स मुमुक्षुविषयः प्रकृतकर्मयोगान्तर्गतः क्रियायोगो लौकिकः अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यतामित्यनेन भगवता पृष्टः सच गोपैः स्वीकृतः तत्रैवं विभात ,क्रियायोगानु मद्यात्मगिरिविप्रादिमख एव श्रेष्ठ इत्याह भगवान् कर्मणेति षोडशैः केचित्त्वाहुः प्रथमं, तावत् कर्मवादेन देवान् निराकरोतीति तदयुक्तम् अत्र कर्मवादाश्रयणपूर्वकदेवनिराकरणाभावात्"धर्मसंस्थापनार्थाय संभवामि युगे युगे" इति श्रीमुखवचनात् धर्मस्थापनावतीर्णत्वात् नहि निरीश्वरस्वकर्मभावादिस्थापनाय निराकरणाय वैवं भगवतः प्रवृत्तिः किन्तु स्वचरणाश्रितगिरिविप्रपूजनविधानेन स्वचरणाराधनरूपकर्मयोगस्थापना यैव क्षोभमावैव शक्रदर्पजिघांसयेति वक्ष्यमाणत्वात् कर्मणेत्यत्र एवकारश्यां कर्माभावे जन्माद्यभावः प्रतिपाद्यते ननु निरीश्वरत्वं कर्मणः सूच्यते ॥ १२ ॥ १३ ॥

भाषा टीका ।

हे तात ! मेघन के पति या इन्द्र को अपन और अन्य लोग हू सब उनके वर्ष भये जलनतें होनवारी सामग्रीन सिद्ध होयवे वारे जो यज्ञ हैं तिनतें पूजें हैं ॥ ९ ॥

और या यज्ञ के शेष अन्न के भागतें अर्थ धर्म काम रूप फलके तांईं सब जीविका करें हैं ॥ और जीविका के तांईं उद्यम करन वारेन को फल देन वारो इन्द्र है ॥ १० ॥

ऐसी परंपरातें प्राप्त जो धर्म ताकूं जो पुरुष काम तें लोभ तें अथवा भयतें त्याग देवें हैं, ते कल्याण कूं नहीं पावें हैं ॥ ११ ॥

श्रीशुक उवाच

श्रीशुकदेवजी बोले, कि—नन्द के तथा और वृद्ध व्रजवासिन के ऐसे वचन सुनि के ब्रह्मा और ईश ( शिव ) कूं वश में राखन वारे श्रीकृष्ण, इन्द्र के तांईं क्रोध उपजावत पिता तें ऐसें बोलत भये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथमं तावत्कर्मवादेन देवान्निराकरोति—कर्मणेति । ननु, जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यादिति चेत् अहो मशीविताभीमांसानां स्वमतिविलासिता अन्धा कर्मणां फलकारणत्वे सत्त्वनतोऽवगतो ,किन्ततोऽनुपपन्नं नाम ॥ १३ ॥

केचित्पुनरतिवादसभीताः कर्मपरतन्त्रमीश्वरं मन्यन्ते तन्मतमनूद्य निराकरोति—अस्ति चेदिति । स्वयं कर्मभिरचिन्त्योऽन्येषां जीवानां कर्मणां फलरूपी फलदाता कर्त्तारं भजते तत्तत्कर्मफलदानेन ॥ १४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः कर्मण एव फलसिद्धेस्तत्पारतन्त्र्ये अजागलस्तनतुल्यत्वाच्च देवतया कृत्यमित्याह—किमिन्द्रेणेति । ननु, कर्मणोऽपि प्रवृत्तिरन्तर्याम्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशङ्क्याह—स्वभावविहितमिति । स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथा कर्तुमनीशेन ॥ १५ ॥

एतद्विवृणोति—स्वभावतन्त्र इति । प्रवृत्तेः संस्काराधीनत्वात्किमन्तर्यामिणेत्यर्थः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एषां मतिपित्रादिरूपनित्यपरिकराणां पूजाग्रहणे को नाम इन्द्र इति तन्मदहरणं यद्यपि मनसि वर्तते तथापि नरलीलापालनाय तदनुद्घाट्य कर्मवादस्य सर्वत्रातिप्रसिद्धत्वात् तन्मतावष्टम्भेनैव प्रथमं परिहरन्ति, कर्मणेति । प्रमीयते म्रियते अत्र तु कर्मणस्त्र कर्तरि तृतीया प्रलीयत इति पाठेऽपि स एवार्थः हि नीयते इति पाठे तु ज्ञानाचेव हि निश्चये एवं जन्ममरणे उक्ते जन्ममरणानन्तरञ्च कर्मणैव सुखादिकमाह सुखमिति क्षेमम् अभयं कर्मणेति पुनःपुनरुक्तिः तदेकहेतुताविवक्षया दाढ्यार्थमेव ज्ञातव्यञ्च ॥ १३ ॥

फलं रूपयितुं दर्शयितुं दातुं शीलम् अस्येति फलरूपी भजते अनुसरति कर्मानुसारेणैव फलदानात् व्यतिरेकेण हढयति नेति हि यतः कर्माभावे फलं दातुं न शक्त इत्यर्थः ॥ १४ ॥

अत्रापि भूतानां प्राणिमात्राणां कर्मानुवर्तिनां प्राक्तनकर्मानुसारेण सुखदुःखं भुञ्जानानामिन्द्रेण किं कर्मण एव तत्तद्भोगकारणत्वात् तेषु नृणाञ्च कर्मान्तरोपार्जकानां स्वं स्वं स्वभावविहितमन्यथा कर्तुमनीशेन तेन किं स्वभावस्यैव तत्तत्कर्मप्रवृत्तिकारणत्वात् ॥ १५ ॥

सर्वमित्यनेन गृहीतानामपि देवादीनां पृथगुक्तिर्विचारादिसद्भावेऽपि तदतिक्रमणाशक्तेः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्तारं भजते सोऽपि देवः स चैतदेवोपपादयति—तस्य कर्मण्यनुषङ्गः ॥ १४—१५ ॥

स्वभावतन्त्रः स्वभावविहितकर्मतन्त्रः कर्मस्वभावस्यम् इति सत्यमाणत्वात् ॥ १६—२१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं "पर्जन्यः फलभावनः" इति तत्प्रतिक्षेप्तुकामस्तावदीश्वराराधनभूतकर्मणामवश्यकर्तव्यतां वक्तुकामफलसाधनत्ववादाय प्राधान्येन पुण्यपापकर्मणां सुखदुःखादिहेतुत्वमाह कर्मणेति । सुखमैहिकं क्षेमं पारलौकिकं जायते प्रलीयते इति दृष्टान्तार्थं यथा कर्मणैव हेतुना जायते प्रलीयते च तथा सुखदुःखादि च कर्मणैव प्राप्नोति एवकारेण केवलदेवतानिरासो गूढमभिसंहितः ॥ १३ ॥

ननु, क्षणिकस्य जडस्य च कर्मणः कथं कालान्तरभावि विचित्रफलहेतुत्वम् ? नत्वपूर्वद्वारा, तस्य स्थिरत्वेऽपि जडत्वाविशेषादतः "तृप्त एवैनम् इन्द्रः प्रजया पशुभिस्तर्पयति" इत्याद्युक्तरीत्या कर्मजनितनिग्रहानुग्रहवती देवतैव सुखदुःखादिहेतुस्तत्राह अस्तिचेदिति । अस्य कर्तुः कर्मणां फलं रूपयति कल्पयतीति तथा फलदाता कश्चिदीश्वरोऽस्ति चेत्तर्हि हे पितः ! सोऽपि ईश्वरः कर्तारमेव भजते यस्तदाराधनरूपं कर्मानुतिष्ठति तमेवानुवर्तते तस्मा एव फलं ददाति तदकर्तुः प्रभुः फलदः एवमन्वयव्यतिरेकाभ्यां कर्मण एव फलसाधनत्वम् ईश्वरस्य तत्तत्कर्मानुवर्तित्वेन तत्पारतन्त्र्यञ्चोक्तं कश्चिदीश्वरोऽस्तिचेदित्यनेनेन्द्रस्यानीश्वरत्वमभिप्रेतं सम्भावितस्येश्वरस्यैकत्वं हि विवक्षितम् अयं भावः क्षणिकत्वाज्जडत्वाच्च केवलकर्मणः फलदत्वं न सम्भवतीति देवतैव फलदेति ब्रूषे; तर्हि सा किम् इन्द्रवाय्वादिरूपेणानेका ? उतैका ? नाद्यः, इन्द्रादीनां कार्यत्वकर्मत्वकर्मवश्यत्वदुःखित्वादेः प्रतिपन्नत्वेन फलदत्वासम्भवात् न हि स्वदुःखनिराकरणेष्टापादनासामर्थ्यस्यान्येष्टानिष्टप्रापणपरिहारसामर्थ्यम्; अत इन्द्राद्यन्तर्यामी स्वकर्मवश्यो निरस्ताऽधिकः कश्चिदीश्वर एकः फलदः सोऽप्यन्वयव्यतिरेकाभ्यां कर्मानुवर्तित्वेन तत्परतन्त्र इति, नचैवमीश्वरस्य स्वातन्त्र्यादिभङ्गः जन्ममरणसुखदुःखादेः कर्माधीनत्वेऽपि ईश्वरस्य पूर्वपूर्वकर्मवासनानुरोधेन जीवप्रेरकत्वात्तस्य मूलकारणत्वात् ईश्वरस्य हि सर्वेष्वपि व्यापारेषु स्वयं ज्ञानचिकीर्षायाः प्रयत्नवत्त्वात्कर्तृत्वं, चेतनप्रवृत्तिहेतुत्वात्कारयितृत्वं, स्वयं सर्वकार्यहेतुत्वेन सामान्यकारणत्वादुदासीनत्वं, प्रवृत्तस्य चेतनस्येतरोत्तरं प्रवर्तकत्वादनुमन्तृत्वं, सर्वव्यापारसाक्षात्कर्तृत्वात्साक्षित्वं, विशेषकारणभूततत्तत्कर्मसाहित्येनैव विशेषकार्यहेतुत्वात्सहकारित्वं कर्मभिराराधितस्यैव फलहेतुत्वात्फलदत्वं, चेतनशेषित्वात्तच्चेतनफलोपभोगस्यापि स्वोपयोगशेषत्वात्फलित्वं, कर्मानुरोधेनैव फलप्रदानादविषमत्वं, सहकारिसन्निधिक्रमानुरोधेनैव परदुःखनिराचिकीर्षाशालित्वाद्नैर्घृण्यं, तत्तत्कर्मानुरोधेन निग्रहानुग्रहसङ्कल्पेऽपि किञ्चिदानुकूल्यमवलोक्य निःशेषनिग्रहप्रणाशेन यावदात्मप्राविमोक्षप्रदानादनुग्रहप्राबल्यम्; अत एव परमोदारत्वं चेत्यादि सर्वमुपपन्नमेव, तस्मादीश्वरस्य कर्मपारतन्त्र्यकथनमन्वयव्यतिरेकाभ्यां कर्मणः फलसाधनस्वभावव्युदासार्थं नचैतावता "ईश्वरस्य फलदत्वव्युदासः" कर्तारं भजते सोऽपीत्यनेन तस्यापि फलदत्वावगमात् नचान्यतरसाधनत्वमन्यतरेण प्रतिबध्यते कर्मणामीश्वरानुग्रहनिग्रहद्वारा सुखदुःखादिफलसाधनत्वादीश्वरस्य तु साक्षादिति विरोधाभावाच्चेदिति सम्भावनयेश्वरास्तित्वे वादिविप्रतिपत्तिः सूचिता भवतीति तदभ्युपगमेन तस्य कर्मानुवर्तित्वकथनेनचेश्वरानभ्युपगमवादो धर्मिग्राहकमानविरुद्ध इति दर्शितम् ॥ १४ ॥

तदेवमीश्वराराधनभूतकर्मणोऽवश्यानुष्ठेयत्वं फलितम् ईश्वर इत्येकवचनेनेन्द्रब्रह्मादीनामनीश्वरत्वमवगतं तदेव व्यञ्जयन्नाह—किमिति । स्वस्वकर्मानुवर्तिना राजसादिस्वस्वभावानुगुणपुण्यपापात्मककर्मानुवर्तिना भूतानाम् इन्द्रेण किं स्वभावानुगुणकर्मणामेव सुखदुःखादिहेतुत्वे सतीन्द्रस्य न तद्धेतुत्वमिति भावः । स्वस्वकर्मानुवर्तिनामित्यनेन कर्मवैचित्र्ये तत्तत्कर्तृस्वभाववैचित्र्यमेव निमित्तमित्यभिप्रेतम् ननु भूतानां स्वस्वकर्मानुवर्तित्वेऽपि स्वस्वकर्मजनितनिग्रहानुग्रहवानीश्वर एव फलद इति चेत्तत्रैव

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मीश्वरः किमिन्द्रेणानीशेनेत्याह—अनीशेनेति । नृणां स्वभाव विहितं स्वभावानुगुणकर्मविहितं सुखदुःखादिकमन्यथाकर्तुमप्रभुणा इन्द्रेण किं नकिञ्चिदपीत्यर्थः । अन्यथाकर्तुमनीशेनेत्यनेन सर्वेश्वरस्तु साध्वसाधुकर्म कारयितृत्वद्वाराऽन्यथा च कर्तुं प्रभुरिति सूचितम् ॥ १५ ॥

स्वस्वकर्मानुवर्तिनामिति ।स्वभावविहितमिति च भूतानां स्वस्वभावानुवर्तित्वं सूचितं । तदुपपादयति स्वभावतंत्र इति स्वभावस्थं सर्वं जगत् स्वभावानुगुणप्रवृत्तिमदित्यर्थः । अथवा जगदन्तर्भूतं देवादिवस्तु निस्स्वभावं नास्तीत्यर्थः तथा च गीतं भगवता—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥

इति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मफलदातृत्वेन कर्मप्रेरयितृत्वेन कर्मशब्दवाच्यत्वेन च नारायण एव सर्वस्य कर्तेत्यभिप्रेत्य सर्वस्य कारणं कर्मैवेत्याह—कर्मणेति ॥ १३ ॥

ननु, प्रवृत्तेर्बुद्धिपूर्वकत्वेन कर्मणोऽचेतनत्वेन तदयोगाज्जगदधीनमिति वक्तुं न युक्तं किन्तु चेतनाधीनमेव चेतनोऽपि न देवदत्तवत्साधारणो भवति अपितु विशिष्ट एव कश्चिदिति श्रीकृष्णाद्दर्शनभिज्ञस्य नन्दगोपस्य मानसीं शङ्कां गूढाभिसन्धिः परिहरति—अस्ति चेदिति । यदि कश्चिदीश्वरोऽस्तीति मतं तर्हि स ईश्वरः कर्मणः फलं सुखादिलक्षणं रूपयति । अनुकूलं करोति ददातीति फलरूपः सहायकल्पः न, स्वतन्त्र इत्यर्थः एतदेव द्रढयति, कर्तारमिति, फलरूपत्वेन प्रयोजकत्वाज्जगतस्तदधीनत्वमायातम् इत्यतोवाह कर्तारमिति, त्वदभिमतईश्वरोऽपि कर्मकर्तारं भजते फलदातृत्वेनानुवर्तते नाकर्मकर्तारं कुत इत्यत आह—न हीति । स ईश्वरः कर्माकर्तुः फलदाने प्रभुः समर्थो न हि कस्मात्सामर्थ्याभाव इत्यत्राह—हीति । उद्रेके कारणाभावात् ॥ १४ ॥

अवान्तरेश्वरत्वमभ्युपगम्येदमुदितम् इदानीमीश्वर एव स्वदत्तभीष्टो नापेक्षितः वस्तुतस्तु स्वभावविहितकर्मणा एव फलदातृत्वोपपत्तेः पयःस्यन्दनादिवदित्याशयेनेश्वरमाक्षिपति—किमिन्द्रेणेति । स्वस्माद्भावः सत्ता यस्य स तथा न पराधीनसत्ताकः यद्वा, स्वतन्त्रो भावः स्वभावः तेन नारायणेन विहितं कथितम् अन्यथाकर्तुमनीशेनासमर्थेन ॥ १५ ॥

ननु, यदि स्वभावेनैव कर्म क्रियते तर्हि कर्ता मृद्दण्डसलिलादिबाह्यद्रव्यं किमर्थमपेक्षत इत्याशङ्क्य तदपि स्वभावनियतमित्यतः सर्वं स्वभावाधीनमित्याह—स्वभावेति । हि शब्देन पयःस्यन्दनादिकमपि नारायणकृतमित्यभिप्रैति "एतस्य वा अक्षरस्य प्रशासने गार्गि ! प्राच्योऽन्या नद्यः स्यन्दन्ते" इति श्रुतेः स्वभावादिशब्दवाच्यस्य हरेरधीनमिदं सर्वमित्यभिप्रायेणावान्तरेश्वर एवात्र निषिध्यते न तु मुख्येश्वर इत्यत्र मात्वार्यैः फलरूपः सकर्मणा इत्याद्यवान्तरेश्वरविषयमित्यभिप्राय—

"स्वभावे कर्मणि च यः सत्त्वादिषु गुणेषु च ।
स्थितो विष्णुः सर्वकर्ता पृथक्संस्थश्च सर्वगः" ॥

इत्यादिप्रमाणं च कृष्णहार्दतात्पर्यार्थम् उदाहारि. यद्वा, स ईश्वरः कर्मणो हरेः फलरूपो ज्ञानात्मा कर्तारं कर्म भजते अकर्तुः अकर्मणः प्रभवतीति प्रभुः तदुक्तम् "तेन जातं फलं यस्मात्कर्मणः फलमीर्यते" इति. अस्त्ववान्तरेश्वरः कर्मफलरूपः प्रकृते किमायातमिति तत्राह—किमिति । स्वस्वकर्मज्ञानविषयं बिम्बभूतं भगवन्तम् अनुवर्तिनां प्रतिबिम्बानाम् ननु, त्रैलोक्येश्वरमिन्द्रं कथं कर्मफलभागिति तुच्छीकरोषीति तत्राह—अनीशेनेति । अस्मदभिमतं कर्मशब्दवाच्यं वस्तु कर्मफलभाक् न भवतीत्याशयेन स्वभावेत्युक्तं स्वः स्वाधीनः भावः क्रिया यस्य स स्वभावः तदुक्तं "नचासौ कर्मफलभाङ्नास्य किञ्चिन्न शक्यते" इत्यादि. एतदेवोपपादयति—स्वभावतन्त्र इति । हिशब्देन तेषामवान्तरेशानां विष्णुवशत्वमन्तरेणान्यकर्मवशत्वं नास्तीति दर्शयति, "नान्यकर्मवशत्वं तु तेषां विष्णुविना क्वचित्" इति. स्वभावस्थमिदं सर्वम्" इत्यनेन सर्वशब्दवाच्यत्वं स्वभावस्य हरेरिति सूचितम् "स च ब्राह्मणगीर्वादिनामा विष्णुरजः पर" इत्यादि स्मृतेः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एषां मत्पित्रादिरूपनित्यपरिकराणां पूजाग्रहणे को नाम इन्द्र इति मन्मदहरणं यद्यपि मनसि वर्त्तते तथापि नरलीलापालनाय तदनुद्घाट्य कर्मवादमेवावलम्ब्याह—कर्मणेति ॥ १३ ॥ १४ ॥

भूतानां प्राणिमात्राणां कर्मानुवर्त्तिनां प्राक्तनकर्मानुसारेण सुखदुःखं भुञ्जानानामिन्द्रेण किं कर्मण एव तद्भोगकारणत्वात् तेषु नृणाञ्च कर्मान्तरोपार्जकानां स्वं स्वं स्वभावविहितमन्यथाकर्त्तुमनीशेन तेन किम् ॥ १५ ॥

स्वभावस्यैव तत्तत्कर्मप्रवृत्तिकारणत्वात् ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमतो भगवान् हेतुपक्षं वारयति—कर्मणेति । हेतुवादे हृदयारूढे साक्षाद्ब्रह्मवादो न वक्तव्य इति तेषां तन्निष्ठात्याजनार्थं कालकर्मस्वभाववादा उत्पन्नाः तत्रापि कालवादो गूढः शीघ्रं हृदयारूढो न भवति अतो ज्योतिर्विद एव तत्र निपुणाः कर्मस्वभाववादौ तु उपपत्तावुत्पत्तौ चोपयुज्येते अत उपपत्त्यर्थं प्रथमतः कर्मवादमाह—कर्मणा जायते इति । यादृशं हि शुभाशुभं कर्म तेन कृत्वा प्राणी देव तिर्यङ् मनुष्यो वा भवति यतः सर्वं जायते यस्मिन् प्रतिष्ठितं येन च क्षीयते तदेवोपास्यं भवति अतः प्राणी कर्मणा जायते कर्मणैव च म्रियते शुभाशुभभोगे समाप्ते विपरीते कर्माणि म्रियते स्थितावपि कर्मैव हेतुरित्याह—सुखं दुःखमिति । जीवन् प्राणी कदाचित् सुखं प्राप्नोति कदाचित् दुःखं कदाचिद्भयं कदाचित्क्षेममिति एतत्सर्वं कर्माभावे नोपपद्यते ॥ १३ ॥

ननु, कथं कर्मणः कारणत्वं जडं हि कर्म फलं हि चेतनस्य चेतन एव प्रयच्छति स्वामिसेवकयोः तथादर्शनात् तस्मादीश्वर

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

वाद एव सत्यो न कर्मवाद इति चेत् तत्राह-मस्ति । चेदिति अदावीश्वर एव नास्तीति प्रयोजनाभावात् कर्मसिद्धान्तानभिज्ञो हि मूर्ख ईश्वरं मन्यते वेदो हि बोधयति कर्म फलसाधनत्वेन कृते च कर्मणि फलं भविष्यति इति यथा भोजने तृप्तिर्यथा बीजावापे फलं यथा शयने निद्रा एवमलौकिकेऽपि कर्मणैव फलं भवति न चानधिष्ठितं कथं साधयेदिति वाच्यं चेतनो हि जीवस्तस्याधिष्ठाता न च कर्म नष्टमिति कथं फलसाधकं कर्मणो नित्यत्वात् तदानीमेव सूक्ष्मस्वर्गजननात् बीजात् गर्भाधानवत् अदृष्टद्वारा वा अन्यथानुपपत्त्याकल्पितमदृष्टं तादृशमेव कल्पनीयं यदितरानधिष्ठितमेव फलं जनयतीति अस्तु वा ईश्वरः कल्पमानोऽप्यकिञ्चित्कर एव सूपकारवत् जीवविशेष एव भवेत् यादृशं यस्य कर्म तादृशं तस्मै सिद्धं कृत्वा प्रयच्छतीति तदाह-अन्यकर्मणां जीवकर्मणां फलनिरूपकः ईश्वरः कश्चिदस्ति चेत् सोऽपि कर्त्तारमेव भजति तत्कर्मफलं तत्कर्त्रे प्रयच्छति नान्यस्मै सोपि न ह्यकर्त्तुः प्रभुः स्वतन्त्रेश्वरवादे तु वैषम्यनैर्घृण्ये स्यातां अतः सर्वथा ईश्वरवादोऽसमीचीनः हैतुकोऽयमीश्वरो निषिध्यते न प्रामाणिकः तस्य हेतुना निषेधासम्भवात् न ह्यप्रयोजकोऽपि अस्तौ निषेद्धुं शक्यते तस्मात् प्रमाणाभावे हेतुसिद्धः ईश्वरो नाङ्गीकर्त्तव्यः ॥ १४ ॥

तदाह—किमिन्द्रेणेति । इह कर्मफलदाने स्वं स्वं कर्म अनुवर्त्तिनाम् भूतानां इन्द्रेण किं कार्य्यं कर्मानुवृत्तिरीश्वरेणापि निषेद्धुं न शक्यते उपजीव्यत्वात् अत ईश्वरं साधयन्ननीश्वरमिव साधयति तदाह-अतीशे नान्यथाकर्त्तुमिति अन्यथाकर्त्तुमनीशेनासमर्थेनेश्वरेण किं प्रयोजनम् ननु, कर्मकरणे ईश्वरो हेतुर्भविष्यति "तं साधु कर्म कारयति यमुन्निनीषति, तमसाधुकर्म कारयति यमधो निनीषति" इति श्रुतेः । अयमपि पक्षो हेतुत्वेन-नाङ्गीकर्त्तव्यः अन्यथोपपत्तेः कर्मकरणे स्वभाव एव हेतुः यदि सत्त्वमभिव्यक्तं साधुकर्म करोति रजश्चेन्मध्यमं तमश्चेदधममिति ततः नृणां स्वभावविहितमेव कर्म स्वभावेनैव सिद्धम् अन्यथा कर्त्तुं समर्थो न भवतीश्वरः अतो नाङ्गीकर्त्तव्य इत्यर्थः ॥ १५ ॥

ननु, स्वभावप्रबोधनार्थमीश्वरोऽङ्गीकर्त्तव्यः इति चेत्तत्राह-स्वभावतन्त्रो हि जनइति यदि स्वभावः परिच्छिन्नो देशतः कालतश्च स्यात् तदा तत्प्रबोधनार्थमीश्वरोऽङ्गीकर्त्तव्यः स्यात् स्वभावस्तु आदौ जीवं वशीकरोति तदा जीवः स्वभाववशगो भवति तदा बन्धे पतित इव स्वभावतन्त्रः सन् स्वभावमेवानुवर्त्तते यस्य यः स्वभावो भवति सात्त्विकादिः नन्वस्वभाववशानामर्थं ईश्वरोऽङ्गीक्रियतां तत्राह-"स्वभावस्थमिदं सर्वम्" इति सर्वमेव जगत् स्वभाव एव तिष्ठति देवाः सात्त्विकाः असुरा राजसाः मानुषास्तामसाः त्रिविधैरपि जीवैः सहितं जगत् स्वभावस्थमेव ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नरलीलतयैव इन्द्रमखभङ्गे कर्त्तव्ये युक्तिमुत्थापयन् सद्भिर्विगीतमपि कर्मवादमाश्रित्य देवतां निराकरोति, कर्मणेति ॥ १३ ॥

ननु, जडात् कर्मणः केवलात् कथं फलसिद्धिरतः कर्मफलदाता ईश्वरोऽवश्यापेक्ष्य इत्यपि केषाञ्चिन्मतं तत्राह—अस्ति-चेदिति । फलरूपी अन्यकृत् कर्मणां फलदाता सोऽपि कर्तारं भजते अनुसरति कर्मानुसारेणैव फलदानात् व्यतिरेकेण द्रढयति, नेति । हि यतः कर्माभावे फलं दातुं न शक्त इत्यर्थः ॥ १४ ॥

अतोऽजागलस्तनतुल्यत्वान्न देवतया कृत्यमित्याह । किमिन्द्रेणेति।ननु, कर्मण्यपि प्रवृत्तिरन्तर्याम्यपेक्षयैव कथं सर्वथा देवताया अनुपयोग इत्याशङ्क्याह—स्वभावविहितमिति । स्वभावेन प्राक्तनसंस्कारेण विहितं कर्त्तव्यत्वेनोपस्थापितं यत्कर्म तदेव कर्तुमन्तर्यामी जीवं प्रेरयति न त्वन्यदित्यतः स्वभावविहितमेव कर्म अन्यथा कर्तुमसमर्थेन इन्द्रेण पूजनीयेन किं न किमपि फलमित्यर्थः ॥ १५ ॥

एतद्विवृणोति—स्वभावतन्त्रः प्राक्तनसंस्काराधीनः अतः स्वभावमनुलक्षीकृत्य तत्तत्कर्मणि स्वयमेव प्रवर्त्तते इत्यन्तर्यामिणापि न किमपि फलमिति भावः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्मफलदमीश्वरं कालगत्या विस्मृत्य "स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः" इत्यादिशास्त्रोक्ता एव गतानुगतिकाः "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यादिवाक्यमाश्रित्य कर्मफलदाने इन्द्रादीनेव स्वतन्त्रान्मत्वा कर्मभिः पूजयन्ति तानुपशिक्षयितुमिन्द्रादीनां जीवानामीश्वरनैरपेक्ष्येण न कर्मफलदातृत्वं घटते इति वदन् ईश्वरः कर्मफलदोऽस्तीति सूचयति—अस्ति चेदिति द्वाभ्याम् । कर्मणो जडत्वात्स्वफलदातृत्वं नैव घटेत अतः फलं रूपयतीति फलरूपी फलदाता कश्चिज्जीव ईश्वरोऽस्ति चेत् स अन्यः अन्यकर्मणां स्वतोऽन्यतोऽन्येषां यानि कर्माणि तेषाम् प्रभुर्न भवति नापि लोकान्तरगतः लोकान्तरगतानां कर्माणि ज्ञातुं शक्नोति । किञ्च,कर्तारं सोऽपि भजते वृथैव कस्यचित्कर्म कर्तुं वा सेवते इत्यर्थः । ननु फलं दातुं शक्नोति । किञ्च, नाकर्तुः प्रभुर्भवति विहिता कर्तुः सांसारिकफलदानेन सर्वकर्मफलत्यागेन कर्तृत्वाभिमानत्यागेन च योऽकर्ता शास्त्रेण निर्णीतस्तस्य मोक्षदानेनेति भावः ॥ १४ ॥

अतः स्वभावविहितं स्वभावेन अनादिकर्मप्रवाहवशवर्तिजीवस्वभावेन प्राक्तनसंस्कारेण विहितं यत्कर्म तत्फलभूतसुखं दुःखं वान्यथा कर्तुमनीशेनासमर्थेन जीवमात्रेणेत्यर्थः । अनेनेश्वरः सर्वं कर्तुं समर्थोऽस्ति कर्मफलद इति सूचितम् ॥ १५ ॥

अनादिकर्मप्रवाहपतितजीवस्य स्वभावमपि वर्णयति स्वभावतन्त्र इति ॥ १६ ॥

---

### भाषा टीका ।

#### श्रीभगवान् उवाच ॥

श्रीकृष्ण बोले, कि—कर्मनतें जीव जन्म लेय हैं और कर्मनतें देहत्यागें हैं सुख, दुःख, भय, और कुशल कर्म ही तें पावे है अर्थात् कर्म को फल देन वारो कोई ईश्वर नहीं है, सो

देहानुच्चावचान् जन्तुः प्राप्योत्सृजति कर्मणा ।
शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥ १७ ॥
तस्मात्सम्पूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ।
अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥ १८ ॥
(१)आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ।
न तस्माद्विन्दते क्षेमं जारं नार्यसती यथा ॥ १९ ॥
वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ।
वैश्यस्तु वार्त्तया जीवेच्छूद्रस्तु द्विजसेवया ॥ २० ॥

भाषा टीका ।

समय अपने इन्द्र के याग को भंग करिबे के ताईं वो वरी कूं निरीश्वर वाद स्वीकार कियो है कछु वास्तव आपको ऐसोई अभिप्राय नहीं है ॥ १३ ॥

जो कछू नंदादिक गोप कहैं, कि—विना ईश्वर के माने केवल जड कर्म तें कैसें फल की सिद्धि होयगी, तहां कृष्ण कहैं हैं, कि—अहो बडो आश्चर्य है तुम सबन ने; पूर्व मीमांसा तौ देखी नहीं और ईश्वर को न मानिबे रूप अत्यन्त साहस तें डरो हौ तासूं कर्मतंत्र को चलावन वारो कर्मन को फल देवे वारो एक ईश्वर मान लीनों है । भवाँ जो तुम्हारो मान्यो भयो, आप कर्मन तें अलिप्त, और जीवन कों कर्म फल देन वारो, जो ईश्वर है ? तो फिर वो कर्म करन वारेई कूं क्यों फल देइ है, जो कर्म नहीं करें तिनकों तो फल नहीं देसके है तासूं जब कर्म करन वारेई कों फल देइ है तब कर्मन कोई फलदाता क्यों न मानो ईश्वर तें कहा प्रयोजन है ॥ १४ ॥

ताई रीति सों अपने २ कर्म के अनुवर्त्तन करन वारे प्राणीन कों इन्द्रसें कौन प्रयोजन हैं ? काहे सों, कि मनुष्यन के स्वभाव तें जो विहित है ताकूं अन्यथा करवेकूं तो इन्द्र हू समर्थ नहीं है तब फिर इन्द्र को व्यर्थ क्यों मानों हौ ॥ १५ ॥

ये जन जो हैं सो स्वभाव के परतन्त्र है, तासों अपने स्वभाव को अनुवर्त्तन करें है, और देव असुर मनुष्य सहित ये संपूर्ण जगत् स्वभाव में स्थित है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात् स्वभावतो निष्पन्नस्य कर्मण एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह-देहानिति सार्द्धेन ॥ १७ ॥

सम्पूजयेत्सम्मानयेत् ननु देवतोद्देशेन द्रव्यत्यागात्मकत्वात् कर्मणः कथं देवतां विना सिद्धिरित्याशङ्क्याह-कर्माङ्गमात्रं देवतेति पक्षमुपसंहरन्निव हेतुमाह-आभिमुख्येनेव देवतां समर्थयते अञ्जसेति ॥ १८ ॥

हेतुबलेनैव विपक्षे दोषमाह-आजीव्येति उपजीवति सेवते ॥ १९ ॥

स्वधर्मं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह-वर्तेतेति । ब्रह्मणा वेदाध्यापनादिना ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्राप्योत्सृजति प्राप्नोति सृजति चेत्यर्थः । शत्र्वादयोऽपि कर्मैव एकस्यैव कदाचिच्छत्रुतायाः कदाचिन्मित्रतायाः कदाचिदुदासीनतायाश्च दर्शनात् । ननु, ज्ञानं विना कर्मसु अप्रवृत्तेः ज्ञानार्थमुपदेष्टारमवश्यमपेक्षते तत्राह-गुरुरिति । अदृष्टं विनोपदेष्टप्राप्तेः प्राप्तेऽप्युपदेशे तत्फलासिद्धेः । ननु, कर्मणो जडत्वेन तत्फलदाता प्रभुरपेक्षते तत्राह—ईश्वरश्चेति । ईश्वरस्यापि कर्मानुगत्वात् तस्यैव साधकत्वात् ॥ १७ ॥

तस्माद्गुरुत्वेश्वरत्वादेर्हेतोः स्वभावस्थः संस्कारत एव स्वयं कर्म निष्पद्यते इत्येतद्दृष्टिः सन्नित्यर्थः । यद्वा, यस्मात् स्वभाव एव कर्मान्तरावसेकः कर्मैव च फलदात् तस्मात् केनचिद्दोषेण ब्राह्मण्याद्यनर्हभावान्तरानुगमेऽपि यत्नात् स्वभावस्थस्तदर्हभावस्थ एव सन् स्वकर्मकृत् तदर्हकर्मकृदेव च सन् कर्मेति कर्माजीव्यमेव सम्पूजयेत् न तु बहिरङ्गदेवादीनित्यर्थः । अग्रे तथैव व्यक्तेः तदेवाह—अञ्जसेति । हि यतः सुखपूर्वकं येन वा वर्तेत यत् च आजीव्येत् तदेवास्य जनस्य दैवतम् ॥ १८ ॥

एकतरं भावम् एकं पदार्थम् आजीव्य जीवनोपायं कृत्वा तस्मादन्यस्मात् जारादिति तस्मात्समानाधिकरण्येन दृष्टान्तः जारमिति क्वचित्पाठः तथापि तदेव तात्पर्यं पित्रादिभ्यस्तल्लीकृतमिदं तत्कर्तृकनीचाराधनजेन कोपेनैवेति ज्ञेयम् ॥ १९ ॥

अधुना स्वकर्माजीव्यपूजामेव साधयितुमादावात्मनो गोवृत्तिमाह-वर्तेतेति सार्द्धकम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वभावमनुवर्त्तत इत्यनेन प्रवृत्त्याख्यकर्मणः स्वभावानुवर्तित्वमुक्तं कर्मणा जायते जन्तुरित्यनेन कर्मणोऽपि जन्मादिनिमित्तत्व

(१) अयं श्लोको विजयध्वजीये चतुर्विंशतिसङ्ख्याकत्वेन टीकायां निविष्टोऽस्ति ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मुक्तं तदुभयमुपपादयन् कर्मैव बहुमन्तव्यमित्याह—देहानिति । जन्तुर्जीवः कर्मणा स्वभावानुगुणेनेति शेषः । नानाविधान् कर्मानुरूपान् देहान् प्राप्य त्यजति अरिमित्रादिकञ्च कर्मैव कर्मकृतमेवेत्यर्थः । ईश्वरः इन्द्रादिगतं सावधिकमीश्वरत्वमपि कर्मकृतमेवेति भावः ॥ १७ ॥

यतः कर्मैव सुखदुःखादिहेतुस्तस्मात्स्वभावस्थः पुमान् स्वकर्मकृत् स्वस्वभावानुरूपकर्मशीलः कर्म पूजयेद्बहुमन्येत कर्मेति द्वितीयान्तम् अहो कर्मणो वैभवमिति श्लाघेतेत्यर्थः । किञ्च वयं केवलं वनौकसः द्विजानामाशिषः गाः पर्वतं चोपजीवामस्ततस्त एवाराध्या इत्यभिप्रायेणान्वया स्वदृष्टान्तमनर्थमाह—अञ्जसेति सार्द्धेन । येन अञ्जसा सुखं वर्तेत जीवेत तदेवास्य जिजीविषोर्दैवतं दैवतत्वेन द्रष्टव्यं तद्द्वाराधनीयमिति भावः ॥ १८ ॥

यस्त्वेकमन्यतरं भावं पदार्थमुपजीव्य अन्यतरमुपधावस्यनुवर्तते भजत इति भावः । स तस्मादुपजीव्यबुद्ध्या आराध्यमानात् क्षेमं न विन्दते असती पुंश्चली नारी पतिमुपजीव्यमनाराध्य जारमनुवर्त्य यथा न तस्मात् क्षेमं विन्दते तद्वत् ॥ १९ ॥

किञ्चास्मद्वृत्तिरिन्द्रयागानपेक्षा चेति विवक्षुस्तावत्स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह—वर्तेतेति । विप्रो ब्रह्मणा वेदेन वर्तेत वेदाध्ययनादिनोपजीवेदित्यर्थः । राजन्यो भुवः रक्षया वार्तया वैश्यो वर्तेत द्विजसेवया त्रैवर्णिकसेवया शूद्रः वर्तेत ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, विष्णोः सर्वनामवत्त्वे एकस्यैवोच्चनीचदेहयोगवियोगप्राप्त्या देवदत्तादिविशेषाभावेन सर्वं तदधीनमिति वक्तुं न शक्यते इति तत्राह—देहानिति । दुःखयतीति दुःखी, तद्दुःखाद्यतन्त्रत्वात्तच्छब्दवाच्यत्वं न तु तदनुभवतः । अतः सर्वनामत्वं युज्यते उत्सृजति त्यजति सृजति आपादयति ज्ञातस्य शत्र्वादिभावस्य हरिणैवेत्याह—शत्रुरिति "सुखं दुःखं भवो भावः" इत्यादिस्मृतेः । यद्वा, यथा तत्तच्छक्तिप्रेरकत्वेन ब्राह्मणादिशब्दवाच्यत्वं हरेस्तथा शत्रुत्वादिशब्दवाच्यत्वमित्याह, शत्रुरिति । कर्मवाच्यत्वाच्च हरिरेव, शत्रुत्वादिः पूज्यत्वात्तत्त्वोपदेशेन गुरुरैश्वर्यादियोगादीश्वरः ॥ १७ ॥

यस्माद्धरिरसि सर्वमिदमिति गिरीन्द्रनामा हरिस्तस्मात्स्वविहितकर्मकृत् स्वभावस्थः नारायणार्पितसर्वेन्द्रियवृत्तिः पुरुषः "क्रियापतनयोः कर्म" इत्यभिधानात् क्षितिधृत्यादिक्रियाश्रयत्वेन जगत्सर्जनादिक्रियाश्रयत्वेन वा परोक्षापरोक्षज्ञानविषयत्वेन वा कर्मसु पूजयेदित्यन्वयः । तदुक्तम्—

> "एतस्मात्कारणात्कृष्णः शक्रस्य विमदाय च ।
> गिर्यादिदैवतमात्मानं पूजयामास वल्लवैः" ॥ इति

स्वकर्मकृदित्युक्तं विवृणोति अञ्जसेति येनाञ्जसा तत्त्वेन यो वर्तेत अस्य तदेव दैवतं कुलदैवं हि लोकप्रसिद्धम् "अञ्जसा त्वरिते तत्त्वे महद्भूतवेदयोः" इति यादवः । अनेन यच्छास्त्रे विप्रेश्वरादिनामाख्यातं तत्सर्वं हरेर्नामेति सिद्धम् ॥ १८ ॥

एकतरं बहूनां सिद्धान्तानां मध्ये एकं भावं सिद्धान्तमाजीव्योपजीव्यान्यं भावमुपधावति उपास्ते स पुरुषः तस्मादुपायात् क्षेमं सुखं न लभते यौवनं जरयतीति जारः असती बहुभर्तृका ॥ १९ ॥

यस्य यत् किं किमिति तत्राह—वर्तेतेति । ब्रह्मणा वेदेन विहितेन यागादिना यज्ञा, यो येन कर्मणा अञ्जसा सहितो वर्तेत अस्य तदेव कर्म दैवतं मान्यं हि तर्हि विप्रादेः किं कर्मविहितमित्यत्राह-ब्रह्मणेति । कृच्छ्रचान्द्रायणादिलक्षणेन तपसा "ब्रह्मवेदस्तपस्तत्त्वम्" इत्यमरः । वार्तया कृष्यादिलक्षणया चतुर्विधया ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मात् स्वभाव एव कर्मान्तरप्रवर्तकः कर्मैव च फलदातृ तस्माद्दोषेण ब्राह्मणाधमहंभावान्तरानुगमनेऽपि यत्नात् स्वभावस्थः तदहंभावस्थ एव सन् स्वकर्मकृत् तदर्हं कर्मकृदेव च सन् कर्मेति कर्माजीव्यमेव सम्पूजयेत् न तु बहिरङ्गदेवादिमित्यर्थः । अग्रे तथैव व्यक्तेः ॥ १८ ॥

तस्मादन्यस्मात् जारादिति तत्सामानाधिकरण्येन दृष्टान्तः पित्रादिष्वप्यौचित्यमिदं तत्कर्तृकर्माराधनजेन क्षोभेन इति ज्ञेयम् ॥ १९ ॥

स्वकर्माजीव्यपूजामेव सामान्यविशेषाभ्यां योग्यत्वमाह—द्वाभ्याम् ॥ २०—२३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु लोकान्तरगमनार्थमीश्वरोऽपेक्षते अन्यथा गते देहे मार्गापरिज्ञानात् फलदेशे कथं गच्छेदित्याशङ्क्याह—देहानुच्चावचानिति उच्चावचाननेकविधान् देहानयं जन्तुर्जीवः प्राप्य प्राप्योत्सृजति अव्यवहितकर्मणा देहान्तरं प्राप्य पूर्वं त्यजतीत्यर्थः । तत्कर्मैव । ननु, समानेऽपि देहे कश्चित् कदाचिच्छत्रुर्भवति मित्रं भवत्युदासीनश्च तत्र को हेतुरिति चेत्? तत्राह—शत्रुर्मित्रमुदासीनः कर्मैवेति । अन्यथा तेऽपि अशुभशुभफलाभावा न स्युः किं च गुरुरपि कर्मैव न हि तादृशादृष्टाभावे गुरुरुपदिशति—फलति वा ईश्वरोऽपि कर्मैव फलदानात् ॥ १७ ॥

अतस्तमेव पूजयेदित्याह-तस्मादिति कर्मैव सम्पूजयेत् सम्मानयेत् तस्य सम्मानप्रकारमाह—स्वभावस्थः सन् स्वकर्मकृदिति यस्य यः स्वभावः ब्राह्मणादिः तदनुसारेण स्ववर्णाश्रमविहितं कर्म कर्तव्यम् अन्यथा पतितः स्यात् फलम् प्रयच्छतु मा वा ईश्वरोऽस्तु न वा कर्म तु कर्तव्यमेव एवं सति अञ्जसा सामस्त्येनानायासेन येनैवोपायेन प्रकारेण वर्तेत जीवेत् तदेवास्य दैवतं सुकृत्यमर्थः सद्वा असद्वा यत्र प्रतिष्ठितः तद्दैवतमिति ॥ १८ ॥

अन्यथात्वे बाधकमाह—आजीव्येति । एकतरं भावमाजीव्य प्रथमं तदनुवृत्तिं कृत्वा पश्चाद्योऽन्यमुपधावति तत्र परितोषमकृत्वा अधिकफलार्थमन्यं चेत् पश्चाद्भजते तदा न तस्मात् क्षेमं विन्दते । सोऽपि मन्यते मामपि त्यक्ष्यतीति असन्नमानं प्रति दृष्टान्त-

कृषिवाणिज्यगोरक्षाकुसीदं तुर्यमुच्यते ।
वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥ २१ ॥
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ।
रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥ २२ ॥
रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ।
प्रजास्तैरेव सिद्ध्यन्ति महेन्द्रः किं करिष्यति ॥ २३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

माह—जाराश्रयेसती यथेति । न हि जारः भरणपोषणादिकं करिष्यति नापि सम्भोगं सर्वदा परलोकस्तु नास्त्येव तस्मात् कर्मण आवश्यकत्वात् स पक्षो न त्याज्यः ॥ १९ ॥

किञ्च, कर्मोपजीवका एव सर्वे यतो ब्राह्मणः ब्रह्मणा वेदेन वर्तेत तस्य वेदाध्यापनादिनैव जीवनम् । राजन्यस्तु भुवो रक्षया जीवेत् स्वधर्मस्तस्येति शूद्रस्तु द्विजसेवया तेषां सेवायां क्रियमाणायां ते दद्युः तेन जीवेत् शूद्रत्वेनाऽन्यपक्षा निराक्रियन्ते एवं सर्वेषामेव वर्णानां स्वकर्मणैव जीवनमिति निर्धारे वार्तामिन्द्रो हेतुमिरपेक्षित इति उक्तः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात्स्वभावतो निष्फलस्य कर्मण एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह—देहानिति सार्द्धेन ॥ १७ ॥

सम्पूजयेत् सम्मानयेत् कर्मसामान्यस्यापि पूज्यत्वेऽपि कर्मविशेषफलयो शास्त्रमेव प्रमाणमित्याह—स्वभावस्थः ब्राह्मणादि वर्णस्थः स्वविहितं कर्म करोतीति सः । ननु, तद्वदत्र देवतोद्देशेन द्रव्यत्यागात्मकत्वात् यागस्य कथं देवतां विना सिद्धिरित्याशङ्क्य कर्माङ्गमात्रं देवतेति मतमङ्गीकुर्वन् हेतुवाक्यमाभिलाम्यामेव देवतां समर्थयते अञ्जसा सुखेन वर्तेत जीवेत ॥ १८ ॥

हेतुबलेनैव विपक्षे दोषमाह—आजीव्येति । उपजीवति सेवते ॥ १९ ॥

तस्मादस्माकं च एवाजीव्यः सैव देवतेति वक्तुं दृष्टान्तत्वेनान्येषामप्याह—वर्तेतेति । विप्रस्य वेदध्यापनेन देवतानि रक्षया भुव इति भूरेव तस्य देवता वार्त्तयेति वार्त्तैव तस्य देवता द्विज शुश्रूषयेति द्विजा एव तस्य देवता इत्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वभावानुरूपेण कर्मणा जन्तुर्जीवः स्वभाववान् देवमनुष्यादिनामवान् देहान् प्राप्योत्सृजति, तेषु जन्तुषु क ईशः कर्माधिपतयः इति भावः । कर्मणैव शत्वादिर्भवतीति कर्मैव शत्रुमित्रमुदासीनश्च इति प्रकृतं कर्म दर्शितं सङ्क्षेपतो निष्कृष्टं कर्म वर्णयति, कर्मैव गुरुर्ब्रह्मनिष्ठगुरुप्रापकत्वात् कर्मैवेश्वरः ज्ञानतत्त्वयुत्पादकतयेश्वरप्रापकत्वात् ॥ १७ ॥

एवं स्थिते मदीयैर्मवद्भिर्मदधिष्ठितगिर्यादिमुद्दिश्येन स्ववृत्त्यनुरोधेन कर्मानुष्ठेयमित्याशयेनाह—तस्मादित्यादि । सम्पूजयेत्सम्मानयेत् तदेव दैवतं तत्रैव परमेश्वरः फलं ददातीति भावः ॥ १८ ॥

एकतरं भावं पदार्थमाजीव्यमुत्सेव्य अन्यं तदितरमुपजीवति सेवते ॥ १९ ॥

ब्रह्मणा ग्रन्थब्रह्माध्ययनादिना ॥ २० ॥

---

### भाषा टीका ।

ये जो प्राणी है कर्म तें ऊंचे नीचे देहन को प्राप्त होय के कर्म हीते देहनकों छोड़ देव हैं, अपनो कर्म जो है सोई शत्रु है और कोई मित्र है कर्म ही मध्यस्थ है, तथा गुरु है, और कर्म ही ईश्वर है ॥ १७ ॥

तासों अपने स्वभाव में रहके अपने कर्म को करतो भयो कर्म ही की पूजा करे तत्त्व बात तो यही है, कि—जासों जो वर्ततो होय और जीविका करतो होय वोई वाकी देवता है ॥ १८ ॥

जो पुरुष एक को सेवन करिके दूसरे को सेवन करे है वो पुरुष वा दूसरे सोच्य तें कल्याण कूं नहीं प्राप्त होय हैं, जैसे खोटी नारी जार पुरुष को सेवै है ॥ १९ ॥

ब्राह्मण वेदतें जीविका करके वर्ते, और क्षत्रिय भूमि की रक्षा करिकें, वैश्य वार्त्ता वृत्ति से जीवन करे, शूद्र तीन वर्णों की सेवा करिके जीविका करे २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वैश्यवृत्तेश्चातुर्विध्यमाह—कृषीति । कृषिवाणिज्यसहिता गोरक्षा एवं त्रयम् कुसीदं वृद्धिजीवनं चतुर्थम् ॥ २१ ॥

ननु, गवामपि वृत्तिर्महेन्द्राधीनैवेत्याशङ्क्य निरीश्वरसांख्यमताश्रयेण निराकरोति, सत्त्वमिति श्लोकद्वयेन । अन्योन्यं स्त्रीपुरुषयोगेन ॥ २२ ॥

सर्वत इति समुद्राधिकोपरादिष्वपि वृष्टिदर्शनात्मेघानामेव तत्पूर्वकत्वं वृष्टेरिति भावः । तैरेव मेघैरेव सिद्ध्यन्ति । जीवन्ति ॥ २३ ॥

न नः पुरो जनपदा न ग्रामा न गृहा वयम् ।
नित्यं वनौकसस्तात ! वनशैलनिवासिनः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तथापि योगक्षेमार्थं देवतापेक्षेति चेदत आह–न नः पुर इति । पुरः पत्तनानि जनपदा देशाः अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रानिशमिति वैश्यत्वेऽपि गोपत्वात् कृष्यादि क्वापि वृत्तिरिति भावः ॥ २१ ॥

पूर्वपूर्वं कार्यरूपं त्रिविधं विश्वमन्योन्यं स्त्रीपुरुषादियोगेन यावच्च जगद्रूपं समुत्पद्यते सत्त्वादीनां स्थित्यादिहेतुत्वं स्वभावत एवेति ज्ञेयम् ॥ २२ ॥

महेन्द्र इति सोपहासं मेघानां तस्यापि रजोधीनत्वात् ॥२३॥

वनान्येव ओकांसि येषां तथाभूता जात्यैव वयम् अत एव न कदाप्यन्यत्र प्रयाम इत्याह–नित्यमिति । हे तातेति सम्बोधयति एवं श्रीगोवर्द्धनसमीपे निजवासश्च सूचितः ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अध्यात्मदृष्ट्या च मतमुपपादयति–सत्त्वमिति ॥ २२—३८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वर्णान्तराणामपि प्रतिनियतस्वस्ववृत्तिलाभे वार्तैव वृत्तिरित्यभिप्रायेणैतत्स्वरूपं दर्शयितुं तस्याश्चातुर्विध्यमाह–कृषीति । कृष्यादीनां द्वन्द्वः कृष्याद्यन्यतमः कुसीदं वृद्धिजीवनं तुरीयं चतुर्थमेवं वार्ता चतुर्विधोच्यते कृषिगोरक्षवाणिज्या इति त्वपपाठः स्त्रीत्वाभावस्य स्त्रीलिङ्गत्वात् इत्थं वृत्तिरभिधायाथ स्ववृत्तिमाह–वयमिति । तत्र वार्ताभेदानां चतुर्णां मध्ये गोवृत्ता गोरक्षा वृत्तिर्येषां तथाभूता वयम् ॥ २१ ॥

अथ स्वभावस्यैव सृष्ट्यादिकारणत्वेनानपेक्षत्वमाह–सत्त्वमिति त्रिभिः । तत्र तावद्वर्षा वृष्टेर्महेन्द्राधीनत्वशङ्कां निराऽऽह कुर्वन्ना द्वाभ्यां सत्त्वादयो जगतः सृष्टिस्थित्यन्तहेतवः तत्र रजसा हेतुभूतेनान्योन्यं स्त्रीपुंयोगेन जगदुत्पद्यते ॥ २२ ॥

ततः किमत आह—रजसेति रजसा रजः स्वभावेन प्रेरिताः सर्वत्र नदीसमुद्रपर्वतादिषु वर्षन्ति समुद्रेष्वपि वृष्टिदर्शनात् प्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः । प्रजाः तथाभूताः तैर्मेघैरेव सिद्ध्यन्ति जीवन्ति प्रजा इति पाठे गोसमूहा इत्यर्थः । एवं सति महेन्द्रः किमस्मनिष्टं न करिष्यति किञ्चिदपि नोपकरिष्यति चेत्यर्थः ॥२३॥

नोऽस्माकं पुरः पत्तनानि जनपदा देशा ग्रामा गृहाश्च न सन्ति पुरादयो वा सस्थानानि पुरादयो वा न सन्तीत्यर्थः । किन्तु हे तात ! वयं नित्यं वनादिनिवासिनः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृषिर्भुव उल्लेखनादिक्रिया, वाणिज्यं सत्यानृतलक्षणक्रयादि, गोरक्षा पशुपालनं, वृद्ध्यर्थं द्रव्यप्रयोगः कुसीदं, तत्र कृष्यादिषु गोभिर्वृत्तिराजीवनं येषां ते तथा ॥ २१ ॥

प्रकारान्तरेणेन्द्रमाक्षिपति, सत्त्वमित्यादिना । विश्वं समस्तम् अन्योन्यं निमित्तीकृत्येति शेषः ॥ २२ ॥

मेघानामिन्द्रो नियोजक इत्यत्राह–रजसेति । रञ्जयति सर्वमिति रजो भगवानभिहितः न ह्यचेतनस्य रजोगुणस्य मेघे प्रेरकत्वं सङ्घटीतीति सिद्ध्यन्ति सम्पन्नकार्या भवन्ति किं करिष्यति न किमपीत्यर्थः "प्रदने स्वपे विकल्पे किम्" इति यादवः ॥ २३ ॥

इतोऽप्यस्मत्कुलदेवतात्वाभावादिन्द्रयागो नोचित इत्याशयेनाह, नन इति । पुरः पुराणि ग्रामस्थितिमुपादाय गृहिण्यः सपत्नीकाः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न न इति द्वाभ्यां तदानीं श्रीगोवर्द्धनसमीप एव व्रजं बोधयति ॥ २४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तन्निराकरणार्थं वार्तां विभजति—कृषीति । कृषिः कर्षणं वाणिज्यं व्यापारः गोचारणं गोरक्षा कुसीदं वृद्धिजीविका तत्तुर्यं चतुर्थं पूर्वाभाव एवोपजीव्यमिति अन्यथा तन्निन्दितम् उपपातकमध्ये गणनात् एवं चातुर्विध्यमुपपाद्य तस्य प्रकृतोपयोगमाह—वार्ता चतुर्विधेति । तत्र प्रकारेषु वयमनिशं सर्वदैव गोवृत्तयः अतः कृष्यभावादिन्द्रेण प्रयोजनमिति भावः ॥ २१ ॥

अस्तु वा कृषिः तथापि नेन्द्रस्योपयोग इत्याह—सत्त्वमिति । उत्पत्तिस्थितिप्रलयार्थं रजःसत्त्वतमांसि स्वीकृतानि सन्ति अतः त्रयोऽपि गुणाः स्थित्युत्पत्त्यन्तहेतवः समुदायेन निरूप्य प्रत्येकोपयोगं निरूपयति—रजसोत्पद्यते विश्वमिति । अयमर्थं हि रजः जगदुत्पादयति यदि मेघान् रजो न प्रेरयेत् तदा कथमुत्पादयेत् यदीन्द्रादयोऽप्यङ्गीकर्तव्याः तेऽपि गुणाधीना एवेति न तेषां स्वातन्त्र्यं किं च अन्योन्यं चेतदुत्पद्यते सर्वत्र रजः प्रविष्टमिति यथा बीजादङ्कुरः अङ्कुराद्बीजं पितुः पुत्रः पुत्रात् पुनः पिता "प्रजामनु प्रजायन्ते" इति श्रुतेः किं च त्रिविधमपि जगदुत्पद्यते अभिन्ना भिन्नं भिन्नादभिन्नं निष्फलात् सफलः सफलान्निष्फल इति अत एतत्सर्वं रजस उत्पद्यत

**तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः।**
**य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः॥ २५॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इति वक्तव्यम् एकस्यैव तथाङ्गीकारे लाघवं स्यात् अतो जीवसृष्टिः कर्मणा जडसृष्टिः रजसेति, जडसृष्ट्यर्थमपि नेश्वरापेक्षा एवं सामान्यत ईश्वरवादो निराकृतः श्रुतिसिद्धस्तु न निराक्रियत इत्यवोचाम॥ २२॥

इदानीं वृष्ट्यर्थमिन्द्रोऽपेक्षित इति मतं विशेषाकारेण निराकरोति-रजसा चोदिता इति। मेघा वर्षन्ति तेषामन्तः रजोगुणोऽस्ति स हि विक्षेपकः अतस्तेन विक्षिप्ता वर्षन्त्येव यथा राजानः कौतुकिनः अन्यथा इन्द्राज्ञया वर्षणपक्षे जले मरुकभूमौ च वृष्टिर्न स्यात् अतो रजोविक्षेपादेव यथा तथा वर्षन्ति मत आवश्यकत्वात् लाघवाच्च नाज्ञा नियामिका किं तु रज एव अतस्तेनैव रजःप्रेरणावर्षेणैव प्रजाः सिद्ध्यन्ति जीवन्ति॥ २३॥

एवं सति महेन्द्रः किं करिष्यति तत्कार्यमन्यथैव सिद्धमिति अस्तु वा तुष्यतु तुष्टेन इति न्यायेन महेन्द्रकार्यं तथापि नास्माकं तदुपयोगः तदाह-नमः पुरो जनपदा इति। नोऽस्माकं पुरो नगराणि न सन्ति न वा जनपदा देशाः ग्रामाः हट्टाः नापि गृहाः इन्द्रस्य हि लोकपालत्वं वृष्टिसाधकत्वं यागभोक्तृत्वं दिग्देवतात्वं चतुर्विधत्वमप्यस्माकं नोपयुज्यते पुराभावात् न तेन रक्षा कर्तव्या नापि तस्याधिपत्यं देशाभावात् कृष्यादौ तदुपयोगः ग्रामाभावात् व्याहृताग्नेरिव इन्द्रो हविर्न प्रदीप्यतीति न मत्वं गृहाभावाज्जलदिग्भागादिपरिज्ञानापेक्षा किं च वयं वनौकसः अस्मामिकं वनमिति यास्तं तातेति सम्बोधनं स्नेहार्थमप्रतारणार्थं च। किञ्च, नित्यं सर्वदा शैले निवासाः वैष्णवा वनस्पतय विष्णुः पर्वतानामधिपतिः अतः वैष्णव एव वासा उचितः तत्र विष्णोश्चैयमद्भुतं ब्राह्मणा गावश्च मन्त्रा एकत्र प्रतिष्ठिताः हविरेकत्र आद्रिर्गोवर्द्धनः स्वयमेव देवता॥ २४-२५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अस्य वैश्यत्वादुक्तामपि वैश्यवार्त्ता विविच्याह-कृषीति। कृषिवाणिज्याभ्यां सहिता गोरक्षा कुसीदं वृत्तिजीविका गोवृत्तयः गोरक्षणवृत्तयः अनियमितिं कदाचापत्कालेऽपि कृष्यादिकमस्माभिर्न क्रियत इति गाव एवास्माकं दैवतत्वात् पूज्या इत्यर्थः॥२१॥

ननु, गवामपि वृत्तिर्महेन्द्राधीनैवेत्याशङ्क्य निरीश्वरसाङ्ख्यमतापेक्षया निराकरोति-सत्त्वमिति द्वाभ्याम्। अन्योन्यं स्त्रीपुरुषयोर्योगेन॥ २२॥

वर्षन्त इति समुद्रशिलोपरादिष्वपि वृष्टिदर्शनादप्रेक्षा पूर्वकारं वृष्टेरिति भावः। तैरेव मेघैरेव सिद्ध्यन्ति जीवन्ति॥ २३॥

किञ्च, गा वर्द्धयतीति गोवर्द्धन इति व्युत्पत्त्यैवार्थेनैवान-भूयमानत्वाद्गवां वृत्तिर्गोवर्द्धनाधीनैवेति गोवर्द्धनश्च पूज्य इत्याह, नेति द्वाभ्याम्। पुरः पत्तनानि जनपदा देशाः किन्तु गोधनचारकत्वाद्वनौकसः॥ २४॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वार्तायाश्चातुर्विध्यमाह-कृष्यादीनां द्वन्द्वः कुसीदं वृद्धिजीवनम्॥ २१॥

ननु, गोवृत्तीनामस्माकं जीवनमिन्द्राधीनमित्यत्र परमेश्वरे सति तदा यत्तेषु प्रकलितद्गुणतत्कार्ये सूर्ये इमेमजलादिषु बहुषु जीवनहेतुषु सत्सु इन्द्र एव एकलः जीवनहेतुरिति कोऽयं दुराग्रह इत्याशयेनाह-सत्त्वमिति द्वाभ्याम्॥ २२॥

महेन्द्रः वृष्ट्यधिष्ठात्री देवता इन्द्र एव एकलः किं करिष्यति न किमपीत्यर्थः॥ २३॥

तथापि प्रबलाद्वेतव्यमत्राह-नेति। पुरः पत्तनानि जनपदा देशाः वनशैलेषु अगतिकगतिनेश्वरेण विहितेषु निवासो येषां ते॥ २४॥

### भाषा टीका।

तहां वार्त्ता वृत्ति चार प्रकार की है खेती वणिज, गोरक्षा, और व्याज बढ़ावनो येई चार वैश्यन की वृत्ति हैं तामें हम सब निरन्तर गऊन की वृत्ति वारे हैं॥ २१॥

और जो तुम कहो कि, इन्द्र जल की वर्षा करे है, सो बात नहीं है-क्योंकि? सत्व, रज, और तम, ये तीनों गुण या विश्व की स्थिति उत्पत्ति और संहार के कारण हैं। तहां ये विश्व रजोगुण ते उत्पन्न भयो है, और परस्पर में नाना प्रकार को यह जगत है॥ २२॥

तासों रजोगुण की प्रेरणातेई ये मेघ वर्षें हैं ताई सों तो सब जगे वर्षें हैं, जो कोई वर्षावनवारो देवता होतो तो जल में जल वर्षायवे को कहा प्रयोजन हो? तस्मात् रजोगुण की प्रेरणातें ई मेघवर्षें हैं तिनतें प्रजा के सब कार्य सिद्ध होवें हैं यामें इन्द्र कहा करेगो॥ २३॥

तहां हे तात! न हमारे पुर, न देश, न गाम, न घर, हम तो सदा वन वासी हैं, निरन्तर वन में और पर्वतन में रहवे वारे वारे हैं॥ २४॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

ब्राह्मणानपि सङ्गृह्णन्मखमपि प्रवर्तयति-तस्मादिति। अयमुत्प्रेक्षितयागप्रयोगकल्पनायाह-य इन्द्रयागसम्भारा इति। सम्भारा उपकरणानि सम्भाराः साधनानि॥ २५॥

पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः ।
संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥
हूयन्तामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः ।
अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥ २७ ॥
अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः ।
यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सूपं मौद्गं पायसं केवले पयसि पक्वं संयावादयो गोधूमादिविक्रियाः क्रमश्च सूपपायसयोः श्रुत्या दोहस्यार्थतोऽन्येषां पाठतः ॥ २६ ॥

यागशोभार्थं भक्तोत्पादनार्थं चाह—हूयन्तामिति । धेनुदक्षिणाः धेनुसहिता दक्षिणाः ता एव वा दक्षिणाः वो युष्माभिः ॥ २७ ॥

यवसं तृणम् ॥ २८ ॥ २९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मात् माजीव्यत्वात् तत्र ब्राह्मणानां गवादिवत् प्रागनुक्तिः सर्वाजीव्यतया सामान्यत एव प्राप्तेरिति भावः तथा च मनुः—

"उत्तमाङ्गोद्भवा ज्यैष्ठ्यात् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः" ॥ इति

आजीव्यतयोक्तत्वेऽपि वनस्यानुक्तिर्देवतात्वाप्रसिद्धेः तत्राद्रेरेव वा । मुख्यत्वात् यथा स्कान्दे "अहो वृन्दावनं रम्यं यत्र गोवर्द्धनो गिरिः" इति अत्र देवानां समुच्चयात् मखस्य चैकवचनोक्तेर्देवताप्रसाराधनात्मक एक एवायं मखो ज्ञेयः वक्ष्यते च तद्रूपेण गिरिद्विजानित्यादि इत्यद्रिगोद्विजमखामिति च तथापि "कृष्णस्त्वन्यतमं रूपम्" इत्यादिना तस्यैव महिमदर्शनात् तद्भेददर्शनाच्च शैलस्यैव मुख्यत्वमवगम्यते यद्यपि श्रीवृन्दावनभूमौ नन्दीश्वराष्टकूटवरसानुधवलगिरिसौगन्धिकादयोऽबहवोऽद्रयो वर्त्तन्ते तथाप्यत्र अद्रिः श्रीगोवर्द्धन एव तन्नामनिरुक्तिबलात् पञ्चमे कुलाचलमध्ये गणनेन तत्पादस्वरूपतत्तदद्रेस्तस्यैव मुख्यत्वात् लोकशास्त्रयोः तस्यैव पूजनप्रसिद्धेः पूजितस्य तस्याग्रे समुद्धरणात् तत्रैकदेशे खपात्रकूट इत्यादिप्रसिद्धेश्च तन्नाम्ना ग्रहणम् अतिसान्निहितत्वेन यज्ञाग्रमदेशे तस्यैव श्रेयस्त्वात् तैरेव साध्यतामिति देवतानिराकरणेन इन्द्रस्याप्रयोजकत्वोक्तेः एवं द्रव्याहरणपरिश्रमाभावश्च सूचितः एतच्च तस्याधिकोपजननार्थमेव एवं पारम्पर्यागतधर्मपरिपालनमपि वृत्तम् अयोग्यप्रदानपरित्यागपूर्वकयोग्यसम्प्रदानमात्रग्रहणेनाविशेषात् प्रत्युत वैशिष्ट्यात् ॥ २५ ॥

महेन्द्रयागादप्ययं मखो विशेषतः सम्पाद्य इत्याशयेन तद्विधिविशेषमुपदिशति, पच्यन्तामिति चतुर्भिः । पाकाः पचनीया अन्नव्यञ्जनादयः सूपा व्यञ्जनानि आदिग्रहणेन गृहीतानामपि संयावादीनां पृथगुक्तिः प्राचुर्यापेक्षया सर्वदोहस्य विवरणं यथा हरिवंशे "त्रिरात्रं चैव सन्दोहः सर्वघोषस्य गृह्यताम्" इति अन्यत्तैः तत्र श्रुत्या आद्यन्तशब्दश्रवणानुरूपमित्यर्थः दोहस्य दुग्धस्य अर्थतः प्रयोजनवशात् प्रथमत इत्यर्थः ॥ २६ ॥

क्रमविधिमाह—हूयन्तामिति । वेदाभ्यासपरैर्ब्राह्मणैरग्नयः सम्यक् हूयन्तां यद्वा, सम्यग्भिर्ब्राह्मणैर्वैष्णवविप्रैरित्यर्थः । बहुत्वं* गार्हपत्यादित्रयापेक्षया दक्षिणाग्नेरपि तत्र रक्षःआदिहननापेक्षया ग्रहणं बहुगुणमिति बहुविधमिति वा पाठः ॥ २७ ॥

अन्येभ्य ऋत्विगितरेभ्यः विप्रेभ्यो वैष्णवेभ्यो दीनेभ्यो याचकेभ्यश्च किं विशेषनिर्देशेन श्वादीनभिव्याप्यैवान्नादिकं देयं यथार्हतो यथायोग्यं देयं केवलमिन्द्रं वर्जयित्वेति भावः गवां गोभ्यः बलिः गन्धपुष्पाद्युपचारः ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माज्जीवनहेतूनां गवां ब्राह्मणानामस्मत्कुलमाश्रितानामद्रेस्तृणजलादिभिर्नित्यं गोवर्द्धनस्याद्रेश्च तुष्ट्यर्थं मखो याग आरभ्यताम् अनेन "अञ्जसा येन वर्तेत तदेवास्य हि दैवतम्" इत्यभिप्रेतं स्पष्टीकृतं कथमारप्स्यामीत्यत्राह—य इति । सम्भाराः साधनानि तैरयं वक्ष्यमाणविधिः साध्यताम् ॥ २५ ॥

अयमित्यनेनाभिप्रेतं प्रकारं दर्शयति—पच्यन्तामिति चतुर्भिः । पाकाः पच्यन्तां क्रियन्तां सूपपायसादिशब्दाः तत्पाकपराः यद्वा पाकशब्दोऽत्र बहुलग्रहणादसंज्ञायामपि "अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९) इति कर्मणि घञन्तः पक्तव्याः पच्यन्तां इत्यर्थः सूपान्ताः पायसादय इति विपर्ययपाकक्रमविपर्ययद्योतनार्थमुक्तं तत्र सूपादयः पायसान्ता हि पच्यन्ते संयावादयो गोधूमादिविक्रियाः सर्वदोहः व्रजे कृत्स्नं क्षीरं गृह्यतां पायसाद्यर्थमेकत्र समुद्भियतामित्यर्थः ॥ २६ ॥

तेभ्यो ब्राह्मणेभ्यो बहुगुणं षड्रसोपेतमन्नं वः युष्माभिः देयं यागशोभार्थं भक्तोत्पादनार्थञ्चाह—हूयन्तामिति । ब्रह्मवादिभिः ब्राह्मणैः सम्यक् यथावत् अग्नयः हूयन्ताम् धेनुसहिता दक्षिणाः ता एव दक्षिणा वा देयाः ॥ २७ ॥

श्वादिभ्योऽपि यथायोग्यमन्नादिकं देयं अपर्यन्ताः अन्नादिभिस्तर्पणीया इत्यर्थः । तथा गवां यवसं तृणं दत्त्वा गवामिति सम्प्रदानस्य शेषत्वविवक्षया षष्ठी गिरये गोवर्द्धनाय बलिर्दीयताम् ॥ २८ ॥

* गार्हपत्यादित्रयापेक्षया इति वङ्गाक्षरमुद्रितपुस्तके ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ २५ ॥

सूपो मुद्गान्नम् अन्धः केवलान्नं संयावः मिश्रयवकृतः मुद्गमिश्रौदनो वा अपूपं पिष्टकृतं शष्कुली पैष्टिका मण्डलाकृतिः सर्वदोहः क्षीरदधितक्रादिकः ॥ २६ ॥

बहुगुणं षड्रसोपेतम् ॥ २७ ॥

यवसं तृणचूर्णिका गिरये गिरिसन्निहिताय तन्नाम्ने हरये ॥ २८ ॥ २९ ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादाजन्यित्वात् अत्र सर्वत्र प्रसिद्धः ब्राह्मणा अपि संग्रहीता देवतानां समुच्चयात् मखस्य चैकत्वात् देवतात्रयाराधनात्मक एवायं मखः तथापि गोवर्द्धनस्य माहात्म्यविशेषदर्शनात्तदीयता प्रसिद्धिः ॥ २५॥२६ ॥

क्रमविधिमाह-हूयन्तामिति । स्वलङ्कृता इत्यादिकानि प्ररोचनार्थमुपलक्षणानि नतु विशेषणानि तानि विनापि फलसिद्धेः अतस्तत्तत्पूजानन्तरं तत्तत्प्रदक्षिणाभोजनानन्तरं श्रीगोवर्द्धनपरिक्रमः गोधनानि पुरस्कृत्येत्यादि पृथगुक्तेः ॥ २७—२९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी

अतः वैष्णव एव यागः कर्त्तव्य इति वक्तव्ये गवां ब्राह्मणानामद्रेश्च मख आरभ्यतामित्याह—तस्मादिति यदि युक्तिरेव प्रमाणं तदा श्रुत्यनुसारिण्येषा भवतीति गिरिवनेचराणामेष एव याग उचितः चकारादङ्गदेवताः सर्वा एव वैदिक्यः परिग्राह्याः अयमिति गोसवात्मकः अयाजयद्गोसवेनेति वाक्यात् गोसत्रादयमतिरिक्त एव लौकिकः अस्य विधानं भगवानेव वक्ष्यति अनेनैतद्ज्ञापितं युक्तिसिद्धमपीश्वरयुक्तिसिद्धमेव ग्राह्यं न तु लौकिकयुक्तिसिद्धमिति ननु इन्द्रार्थं द्रव्याणि सम्पादितानि कथमेतैरन्यसाधनं तत्राह—य इन्द्रयागसम्भाराः आज्यादयः तैरेव अयं मखः साध्यतां मखपदेन च सर्वदेवोपकारो ज्ञापितः तत्र एक एवेन्द्रः तुष्यतीति अज्ञानात् कृते सर्वत्रैवं व्यवस्था अन्यस्मै दत्तमपि हविरान्द्रियान्यस्मै देयमिति यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तन्डुलान्विभजेद्ये मध्यमाः स्युः स्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्र इत्याद्यभ्युदयेष्टौ कालभ्रमात्प्रवृत्ता इष्टिरन्यथा क्रियते तथा प्रकृतेपि युक्तिभ्रमात् इन्द्रार्थमपि संभृताः अन्यार्थमेव कर्त्तव्याः ॥ २५ ॥

तस्माद्यागादत्र विशेषमाह—पच्यन्तामिति । लौकिकोत्सवपुरःसरे तु प्राकृतानां महानुत्साहो भवतीति स्त्रीणामप्यत्रोपकारो भवतीति च विविधाः पाका भर्जनजलपचनतैलघृतदुग्धदध्यादिषु च पाकाः परिगृहीताः तेन नानाविधानि भक्ष्याणि सेत्स्यन्ति तेषां सर्वेषामन्ते सूपः कर्त्तव्यः पक्वान्नादीनां करणे भूयान्कालो लगति अतः प्रथमतः सूपकरणे सोऽलम्बतामापद्यते पायसं हि बहुदुग्धे अल्पीयांसस्तण्डुला दत्ता अल्पाग्नावेव पच्यमाना महता कालेन पच्यन्त इति पायसमादौ कर्त्तव्यं अथवा देवानां प्रथमतः पाकः मध्ये लौकिकानां महतां प्राकृतानां सूपमात्रमिति ततो यत्कर्त्तव्यं तदाह, संयावः गोधूमचूर्णसारांशाः पूर्वदिन एव पच्यमाना महता कालेन सिद्धा भवन्ति सोऽपि ग्राह्यः अपूपाः गुडमिश्रितपूर्णनिष्पादिताः पाकाः स्नेहद्रव्येषु शष्कुल्यः नानाकारेण अमङ्गुलाः भक्ष्यविशेषाः सर्वं एवाद्यतनो दोहः गृह्यतां दुग्धस्य विक्रयादि विनियोगो न कर्त्तव्यः चकारात् अशक्यं वत्सेभ्य एव देयमिति ॥ २६ ॥

ततः अलौकिको देवानामर्थे होमः कर्त्तव्य इति सम्यक्विधानपूर्वकं ब्राह्मणाः स्वरूपत उत्तमाः ब्रह्मवादिनो ज्ञानतः ततो होमानन्तरं प्रत्यक्षदेवता ब्राह्मणा इति तेभ्यः अन्नं बहुविधं पक्वान्नादिसहितं देयं वो युष्माभिः युष्माकं वा एतत् कर्त्तव्यं ब्राह्मणान् प्रति वो युष्मभ्यमिति धेनवश्च दक्षिणात्वेन देयाः ॥ २७ ॥

तत अन्येभ्यो देयमित्याह—अन्येभ्य इति । क्षत्रियवैश्यादिवर्णेभ्यः ततः श्वचाण्डालपतितेभ्यश्च एते बहिर्बलिभुजः अतोऽन्ते अदेवतत्वात् निरूपिताः श्वचाण्डालपतितवायसेभ्यो बलिरिति पर यथायोग्यं ततो गोभ्यो यवसं देयं चारणार्थं न प्रस्थापनीया ततो गिरये पर्वताय बलिर्देयः सर्वमेवान्नमुत्तमं पर्वतसमीपे राशीभूतं कर्त्तव्यम् ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्राह्मणानामाशिषोऽस्माकं प्रत्यक्षफला इति तेऽपि पूज्या इति स्वमते तानप्यनुकूलयन्नाह—तस्मादिति।सम्भाराः साधनानि॥२५॥

पाका अन्नव्यञ्जनादयः सूपान्ता इति सूपस्यौष्ण्यं पायसादय इति पायसस्य शैत्यमपेक्षितं भवतीति भावः । संयावादयो गोधूमादिविक्रियाः सर्वेषामेव व्रजवासिनां दोहः दोहोत्थदुग्धदध्यादिसञ्चयः ॥ २६ ॥

यागशोभार्थं श्रद्धोत्पादनार्थं चाह—हूयन्तामिति । धेनुसहिता दक्षिणाः वो युष्माभिः ॥ २७ ॥

स्वमते अन्त्यजपर्यन्तान् सर्वानेव व्रजवासिनोऽनुकूलयन्नाह—अन्येभ्य इति । बलिः गन्धपुष्पाद्युपचारः ॥२८—२९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मात् गवादीनां मखः आरभ्यतां सम्भारा साधनानि ॥ २५ ॥

पच्यन्तां क्रियन्ताम् ॥ २६ ॥

वो युष्माभिः ॥ २७ ॥

यवसं तृणम् ॥ २८ ॥ २९ ॥

---

स्वलङ्कृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः ।
प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥ २९ ॥
एतन्मम मतं तात ! क्रियतां यदि रोचते ।
अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥ ३० ॥

श्रीशुक उवाच ।

कालात्मना भगवता शक्रदर्पजिघांसता ।
प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥ ३१ ॥
तथा च व्यदधुः सर्वं यथाह मधुसूदनः ।
वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥ ३२ ॥

भाषा टीका ।

तातैं गौ ब्राह्मण और गोवर्धन पर्वत इनके यज्ञको प्रारम्भ करो श्रीकृष्णकी या बातको सुनके नन्दराय बोले, कि—लाला! तू जो यज्ञ कहै भाऊ को कर देंगे, नेक इन्द्रको यज्ञ होय जानदे, तब श्रीकृष्ण बोले कि—नहीं बाबा! जो इन्द्रके यज्ञकी सामग्री तैयार कीनी हैं तिनही तें या यज्ञको आरम्भ करो ॥ २५ ॥

वृद्धगोपनने पूछी कि लाला! याय यज्ञकी कैसी विधि है, तब कृष्ण बोले कि मैंतो कहूहूं कि—नाना तरह के पकान्न बनवाओ सबते पहिले खीर और सबते पीछें दाल और बीचमें मोहनभोग पूआ पूरी तैयार करो और सम्पूर्ण दूध इकठोरो करो ॥ २६ ॥

और जो वेद पढन वारे ब्राह्मण हैं ते भली भांति अग्नि में हवन करें, तिन ब्राह्मणन को बहुत गुण वारो अन्न देओ, और गऊन को दान करो, और बहुत सी दक्षिणा देओ ॥ २७ ॥

और कुत्ता चाण्डालसोंलेकें पतित पर्यन्त सबकों यथायोग्य भोजन कराओ गऊन कों घास देके गोवर्धन पर्वत को बलिदेओ ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वान् शिरः कम्पेनानुमोदयन्नाह—गोब्राह्मणाद्रीणामिति । मह्यं मम च ॥ ३० ॥ ३१ ॥

तद्द्रव्येण तेन महेन्द्रमखद्रव्येण गिरिद्विजान् प्राप्त यथायथम् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न चाप्यकृत्यवदिदं दुःखसाध्यं किन्तु परमसुखमयमेवेत्याह, स्वलामिति । भुक्तवन्त इत्यत्र प्राक् पश्चादिव सुशब्दप्रयोगो दरिद्र प्रत्येत तद्वचनौचित्यात् यद्यप्येकदैवात्र गवादीनां परिक्रमविधानं तथापि तत्तत्पूजान्ते पृथक् पृथगेव श्रेयं पूजान्तकर्त्तव्यत्वात् तस्य अत एव "गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम्" इति गिरेः परिक्रमः पृथगेव वक्ष्यते उदाहरिष्यमाण हरिवंशवचनेन च नान्यथार्थः कल्प्यते स्वलङ्कृता इत्यादिकानि तु न विशेषणानि किन्तु प्ररोचनार्थमुपलक्षणानि ततो नाङ्गत्वे प्रविशन्ति तदभावेपि तन्निःस्पृहत्वेपि तत्सिद्धेः तस्मात् गवादीनां भोजनात् पूर्वमेव परिक्रमः अद्रेस्तु महाभोजनसमाधानायैव तत्पश्चादिति गवां च पूजा न सर्वासाम् असङ्ख्यत्वात् किन्तु मुख्यानामेव तत्तत्तासां परिक्रमश्चाल्प इति ॥ २९ ॥

हे तातेति यदि मयि स्नेहो वर्त्तते तर्हि क्रियतामिति गूढो भावः यदि रोचत इति पूज्येषु तथैवोक्तेर्योग्यत्वात् तेन च विनयविशेषेण तत्कृत्यतामेव सम्पादयति । किञ्च, अयं गोब्राह्मणाद्रीणां मखो मह्यं च दयितो हित इत्यर्थः । हितार्थयोगे हि चतुर्थी भवति कथमपि स्वहितं ज्ञात्वा मद्धितस्यैव च भवदेककर्त्तव्यतामनुभूय भवतामिदं प्रार्थये न केवलं युक्ततामेव निश्चित्येति भावः ॥ ३० ॥

कालस्यापि आत्मना प्रवर्त्तकेनेति सर्वेषां तदेकाधीनत्वं सूचितम् अयं च तद्वचो ग्रहणे हेतुः यद्वा, परमशक्तिमत्त्वम् अत इन्द्रदर्पहतिस्तस्येषत्कर इति भावः यद्वा, यदा शक्रयागः प्रवर्तितः तदानीं स एव प्रवृत्तः अधुना चायमेवेति तदिच्छयैव सर्वं प्रवर्त्तते तामतिक्रमितुं कः शक्नोतीति भावः यद्वा कालः श्यामल आत्मा देहो यस्येति श्यामसुन्दरेणेत्यर्थः । तत्सौन्दर्येण सर्वे वशीकृताः किं पुनर्वचनेनेति भावः यद्वा, कलयति जगच्चित्तमाकर्षतीति कालः आत्मा स्वभावो यस्य तत्तद्वचनाङ्गीकरणमिदं न चित्रमिति भावः । शक्रस्य यो दर्पः पूज्यमानस्यापि स्वपित्रादिषु प्राकृतगोपदृष्ट्या तेषां सम्बन्धेन स्वस्मिन्नपि मर्त्यदृष्ट्या बाढमनादरात्मकः स एव "अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् । कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥ इति प्राकट्यं लप्स्यमानः तस्य स्वयम् ज्ञायमानस्य जिघांसया अत एव मन्युं जनयिष्यसीत्युक्तम्, अन्यथा भयमेव स्यात् न मन्युः मन्युजननं चेदं तत्सम्बन्धेनैव तद्ध्वंस्तकदर्थनेच्छयेति ॥ ३१ ॥

कचिद्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले ।
गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥
वने सञ्चारयन् वत्सान् सरामो बालकैर्वृतः ।
हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥ ८ ॥
वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया ।
हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥ ९ ॥
हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः ।
चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥ १० ॥
प्रलम्बं घातयित्वोग्रं बलेन बलशालिना ।
अमोचयद्व्रजपशून् गोपांश्चारण्यवह्नितः ॥ ११ ॥
आशीविषतमाहीन्द्रं दमित्वा विमदं हृदात् ।
प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यः कृष्णो दैत्येन ह्रियमाणः संस्तं तृणावर्तं दैत्यं कथमहन्नित्यर्थः ॥ ६ ॥

हैयङ्गवस्तैन्ये नवनीतचौर्ये बाहुभ्यां गच्छन् रिङ्खन्नित्यर्थः ॥ ७ ॥

मुखतो हन्तुं कामो यस्य तं बकवेषमरिं बाहुभ्यां मुखतः कथमपाटयत् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

आशीविषतमोऽतिक्रूरविषश्वासाऽहीन्द्रश्च तम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रपदेन मा इयत् इतं प्रहृतं रुदत इति पूर्ववत् बाल्यातिशयः सूच्यते तेन चात्यद्भुतत्वहेतुतया शक्तिविशेष एव द्योत्यते एवमग्रेऽपि प्रत्यस्य: तत्र मास्यस्येति मासमात्रं व्याप्य जातबाल्यस्येत्यर्थः। कालाद्धित्यधिकारे "तमधीष्टो भृतोभूतो भावी" (५।१।८०)इत्यधिकृत्य "मासाद्वयसि यत्खञौ"(५।१।८१) इत्यनेन यद्विधानात् तत्र द्वितीयसूत्रे तं भूत इति तावन्तं कालं व्याप्य लब्धसत्ताक इत्यर्थे सतीति व्याख्यानात् तृतीयसूत्रे वयसीति विशेषोपादानाच्च किन्तु मासश्च मासश्च मासश्च मासा इति त्रयाणामेवैकशेषत्वकरणात् "त्रैमासिकस्य च पदा शकटोऽपवृत्तः" इति द्वितीयस्कन्धस्य च स्वरसः कर्तव्यः ॥ ५ ॥

आसीन इति अत्यन्तबाल्यमेवाभिप्रेतं सम्यक् चलितुमपि यदा न शक्नोतीत्यभिप्रायात् कण्ठग्रहणमात्रेणैव मातुरं विह्वलम् ॥ ६ ॥

कचित् कदाचित् अत्याऽग्रेऽपि सर्वेश्वर्यानुष्ठानैः बाहुभ्यां तदग्रभागाभ्यां कराभ्यामित्यर्थः। उलूखलकर्षणाय तयोरेवाधिक्येन प्रयोजनात् ॥ ७ ॥

सरामो बालकैर्वृत इति रामे बालकेषु च तत्रैव सत्सु स एवापाटयदिति सर्वेभ्यः शक्तिविशेषो ध्वनितः मुखतो मुखमारभ्य अरिमिति न तामसयोनित्वात् यदृच्छया हन्तुकाममपि तु अरिं भगिनीवधजातशत्रुभावात्प्रहेयापीत्यर्थः। पूर्वोक्तत्तद्वधव्युत्क्रमस्तथाद्य व्योमवधातिक्रमश्च परमविस्मयेनाक्रान्तचित्तत्वात् एवमग्रेऽपि ॥ ८ ॥

जिघांसया सरामस्य तस्य लीलया हत्वा पश्चात् पादद्वयग्रहणेन भ्रमणात् कपित्थानि चेति महावृक्षाग्रविक्षेपद्योतनेन शक्तिविशेषः सूचितः ॥ ९ ॥

बलान्वित इति धेनुकवधेऽपि तस्यैव प्राधान्यविवक्षया नूनमेतत्प्रभावेणैव बलस्यापि वधोद्यादेतस्यैककर्तृत्वमिति भावः क्षेमं निर्भयं सर्वोपभोग्यमित्यर्थः ॥ १० ॥

बलेन घातयित्वेति तत्रापि तस्य मुख्यत्वं सूचितं कुतो बलेनैवाऽघातयत् न स्वन्येन तत्राहुः–बलेति । तत्प्रभावलब्धबलविशेषवता अतस्त्वस्मिन् विद्यमानेऽन्येन घातना न योग्येति भावः ॥ ११ ॥

विमदं यथा स्यात् तथा दमयित्वा यद्वा विमदं सन्तं ह्रदादुद्वास्य ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

छिन्दत इति । शकटस्याधश्शयानस्य बालस्य मासपस्येति पाठे मासाख्यः परिच्छेदका यस्य तस्य उदमूर्ध्वं चरणौ छिन्दतः चालयतः रुदतश्च प्रपदा पादाग्रेण हतमनः शकटं विपर्यस्तं सत्कथमपतत् सर्वत्र कथं शब्दोऽनुवर्तते ॥ ५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एकहायन इति । यः कृष्ण एकाब्दवयस्को भुवि निषण्णः दैत्येन तृणावर्त्तेनाकाशमार्गेण नीयमानः तं कण्ठग्रहणेनातुरं पीडितं तृणावर्तं कथमहन् हतवान् ॥ ६ ॥

क्वचिदिति । कदाचिन्नवनीतचौर्ये सति क्रुद्धया मात्रा यशोदया उलूखले बद्धो बाहुभ्यामर्जुनयोर्मध्ये गच्छन् रिङ्गन् तावदर्जुनौ कथमपातयत् ॥ ७ ॥

वन इति । रामेण सहितो बालकैश्च वृतो वत्सान् वने सम्यक् चारयन् जिघांसुं बकासुरमरिं मुखे भुजाभ्यां कथमपाटयद्विदारितवान् ॥ ८ ॥

वत्सेष्विति । हन्तुमिच्छया वत्सरूपेण वत्सेषु प्रविष्टं वत्सासुरं हत्वा लीलया न्यपातयत् तेन पातितेन दैत्यदेहेन कपित्थानि च न्यपातयत् ॥ ९ ॥

हत्वेति । बलदेवेन सहितो रासभासुरं तद्बन्धूंश्च हत्वा परिपक्वैः फलैरन्वितं तालवनं क्षेमं चक्रे सर्वैः प्रवेष्टुं क्षेमं चक्रे इत्यर्थः ॥ १० ॥

प्रलम्बमिति । बलशालिनाबलदेवेन उग्रं प्रलम्बमसुरं घातयित्वा स्वयं व्रजपशून् गोपांश्च दवाग्नेरमोचयत् ॥ ११ ॥

आशीविषेत्यादि । आशीविषतम अतिक्रूरविषः स चासावहीन्द्रश्च तं बलाद्दमित्वा ततो विगतमदं ह्रदादुद्धृत्य निष्कास्य यमुनां निर्विषोदकां चक्रे ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चरणावुदक् ऊर्ध्वं हिन्वतः उत्क्षिपतः मासत्रयस्य मासमात्रवयस्कस्य प्रपदेन पादाग्रेण हतं पीडितम् ॥ ५ ॥

एक एव हायनो वर्षं वत्सरो यस्य स तथा तृणावर्तमहन्निति यत्कर्म तदपि ॥ ६ ॥

हैयङ्गवं हैयङ्गवीनं सद्यो दधिमन्थने जातं नवनीतं तस्य स्तैन्ये चौर्ये सति बाहुभ्यां गच्छन्निति सम्बन्धः ॥ ७ ॥

मुखतः मुखे अहीत्वेति शेषः । अपाटयत् व्यदारयत् ॥ ८ ॥

तेन दैत्येन कपित्थानि कपित्थबीजानि फले लुक् ॥ ९ ॥

क्षेमं प्रासरणम् ॥ १० ॥ ११ ॥

दमित्वा निगृह्य उद्धृत्य उच्चाटयित्वा ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बाहुभ्यां गच्छन्निति उलूखलाकर्षणाय अरिं शत्रुत्वेनासम्भाव्यमपि ॥ ७—१२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यथा प्रतिक्रियां कुर्यात् पलायेत वा तस्मादेवमलौकिकं सामर्थ्यं बाल्ये किञ्च, अधः शयानस्य हिन्वतः चरणौ चालयतः "हिन्व् चलने" इति मासत्रयस्य मासत्रयपरिमितस्य सङ्ख्यानुक्तिः वर्षाभावार्था नाद्यापि वर्षः परिच्छेदकः नाप्ययनं किन्तु मासा एव परिच्छेदकाः अत एव चरणौ उदक् ऊर्ध्वं हिन्वतः सतः न तु तदर्थं हिन्वतः तथापि विपर्यस्तं सत् अनः शकटमपतत् पादचालने निमित्तमाह—उदक् इति । अनेनाशक्तिरुद्घाटिता तत्रापि प्रपदेन पादाग्रेण आ ईषद्धतं सत् विपर्यस्तं विपरीतं सदपतत् साधनाल्पत्वं कार्यमहत्त्वं चोक्तम् ॥ ५ ॥

क्रमेण भगवच्चरित्रं वदन्तस्तृणावर्तवधमाहुः—एकहायन इति । अयमेकहायनः एकवार्षिक आसीन उपविष्टः न तु चलितुं समर्थः तादृशोऽपि दैत्येन विहायसा नीतः निरालम्ब एवाकाशे तमहन् मारितवान् तत्रापि न युद्धं किन्तु कण्ठग्रहणेन यथैव कण्ठे गृहीतः तदैवातुरो जातः मातुः प्रदर्शनादिकमप्रसिद्धमिति तद्वर्णनम् ॥ ६ ॥

ततः क्रमाज्जातं यमलार्जुनभङ्गमाहुः—क्वचिदिति । हैयङ्गवस्य स्तैन्ये निमित्ते शिक्षार्थं मात्रा उलूखले योजितः तादृशोऽपि अर्जुनयोर्मध्ये बाहुभ्यां गच्छन् पश्चादुलूखलस्य भारत्वात् पादद्वयेन सहोलूखलस्याकर्षणमेव गमनन्तु बाहुभ्यामेव बाहुभ्यां वा अपातयत् ॥ ७ ॥

यथादृष्टवचना हि ते तेषामेतदेवाश्चर्यम् उभयोः पातनमुभाभ्यामिति ततो वृन्दावने बलभद्रसहितः वत्सान् चारयन् बालकैर्वृतः विशेषसामर्थ्यमप्रकाशयन्नपि हन्तुकामं बकम् अरिं शत्रुभूतं न तु प्रासङ्गिकं मुखत एवापाटयत् एतत्सर्वजनीनं बालानां पलायनमप्यशक्यं स तु विपाटितवानेव वत्सबकयोः व्यत्यासेन कथनमनवधानात् क्रमाग्रहणात् नाप्येतेषां क्रमे तात्पर्यं बाहुभ्यां पातनं बाहुभ्यामुत्पाटनमिति बाह्वोः सामर्थ्यकथनार्थं यमलार्जुनयोर्भङ्गकथनानन्तरं बकनिरूपणम् ॥ ८ ॥

अतः पश्चात् एकहस्तसाध्यं वत्सासुरवधमाह—वत्सेष्विति । वत्सरूपेण जिघांसया वत्सेषु प्रविशन्तं तदानीमेव ज्ञात्वा मारयितुमागत इति प्रथमत एव तं परिभ्रामणेन हत्वा तेन कपित्थानि न्यपातयत् चकारात्समपि वृक्षशाखाख्या महाबलकार्यं तत्तादृशमपि लीलया कृतवान् ॥ ९ ॥

ततो धेनुकवधमाह—हत्वा रासभदैतेयमिति । बहवो धेनुकसदृशा हता इति प्रधानेन व्यपदेशा भवन्तीति न्यायेन बलभद्रेण सहभावमात्रं वस्तुतो भगवतैव हत इति हत्वा रासभदैतेयमित्युक्तं रासभो भूत्वा दैतेयो धेनुकः तद्बन्धवोऽपि रासभाः तानपि हत्वा बलभद्रसहितः तालवनं क्षेमं चक्रे यो हि तत्र गच्छति स क्षेमं न प्राप्नोतीति फलं तु स्वभावत एव प्राप्नोतीत्याह—परिपक्वफलान्वितमिति । परिपक्वैः फलैरन्वितम् एवं धेनुकवधोऽपि लोकानां हितार्थमेव नत्वाहितार्थम् ॥ १० ॥

मारणक्रमात् धेनुकवधानन्तरं प्रलम्बवधो निरूप्यते, मध्ये जातं कालियदमनमग्रे वक्ष्यति, उग्रमपि प्रलम्बं बलभद्रेण घातयित्वा बलभद्रे घातकशक्तिं दत्वा स्वस्य मारकत्वे प्रयोजनाभावात् व्रजपशून् गोपांश्च अत्ययवह्नितः अमोचयत् दावानलान्मोचितवान् ॥ ११ ॥

वह्निसाध्याद्दावाग्निमपि निरूपयति—आशीविषमिति । आशीनां आविषदंष्ट्रा तत्र विषं यस्य स्वाभाविकाविषात् अधिकविषयुक्तोऽहीन्द्रः सर्पश्रेष्ठः तं प्रसिद्धं कालियम्, अन्यैः दमितुमपि शीघ्रते तादृश

दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् ।
नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥ १३ ॥
क्व सप्तहायनो बालः क्व महाद्रिविधारणम् ।
ततो नो जायते शङ्का व्रजनाथ तवात्मजे ॥ १४ ॥

नन्द उवाच ।

श्रूयतां मे वचो गोपा व्येतु शङ्का च वो ऽर्भके ।
एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥
वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ह्रदात् दूरं प्राप्य ह्रदमध्ये दमित्वा प्रसह्य बलात् ह्रदादुद्वास्य दूरीकृत्य यमुनां निर्विषोदकां चक्रे अनेन यद्गरुडस्याप्यसाध्यं यमादीनां देवानामपि अन्यथा गरुडः शत्रुं मारयेत् यमुनां वा यमादिः शुद्धां कुर्यात् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनसोऽधः शयानस्य मारयस्य मासत्रयवयसः मासाद्वय- ।सियत स्तनार्थिति यत् चरणौ उदक् ऊर्ध्वं क्षिप्वतः चालयतः तस्य प्रपदेन पादाग्रेणाहतं अनः शकटं विपर्यस्तं सत् कथम पतत् ॥ ५ ॥

यो दैत्येन ह्रियमाणः सन् तं तृणावर्तं दैत्यं कथमहन् ॥ ६ ॥

हैयङ्गवस्तैन्ये नवनीतचौर्ये बाहुभ्यां गच्छन् रिङ्गन्निस्वर्थः ॥ ७ ॥

तोऽभ्यां धृत्वा मुखतः मुखमारभ्य कथमपाटयत् ॥ ८ ॥ ९ ॥

रासभदैतेयं धेनुकं सबान्धवं इति तत्रापि कृष्णस्य प्राधान्यं विवक्षितम् ॥ १०—११ ॥

आशीविषतमोऽतिक्रूरविषश्वासावर्द्दाग्रश्चाति तं विमर्द्य यथा-रूपास्तथा दमित्वा ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधः अनस इति शेषः " त्रैमासिकस्य च पदा शकटोऽपवृत्तः " इति वचनान्मासत्रयस्य मासास्त्रयः प्रादुर्भावावधि भूताः यस्य तस्य उदगूर्ध्वं चरणौ क्षिप्वतः चालयतः प्रपदेन पादाग्रेणाहतं विपर्यस्तम् अनः अपतत् ॥ ५ ॥ ६ ॥

हैयङ्गवस्य नवनीतस्य स्तैन्ये चौर्ये ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

आशीविषतमः अतितीव्रविषश्वासावर्द्दान्द्रश्च तम् ॥ १२ ॥

भाषा टीका ।

जब ये तीन महीना को रह्यो गाड़ा के नीचे पालने में सोयो हो तब दूध के तांई रोवते में पावन कूं ऊंचे उछारे सो जाके चरण की ठोकर तें गाड़ा उलटि गयो ॥ ५ ॥

एक वर्ष की अवस्था में बैठे भये को जब तृणावर्त दैत्य आकाश में उड़ाय कें ले गयो, तब जाने कंठ घांटिके वा आतुर दैत्य को मार गेरयो ॥ ६ ॥

काई समें माखन चोरी में माता ( यशोदा ) ने ऊखल में बांध्यो तब यमलार्जुन वृक्षन के बीच में जायकें हाथन तें दोऊवृक्षनकूं उखारिकें गिराय दिये ॥ ७ ॥

दाऊ सहित बछरानकों चरावते में बालकन सहित अपने कूं मारिबे आयो जो बैरी बकुला ( बकासुर ) ताकों हाथन तें मुख फार गेरयो ॥ ८ ॥

बछरान में बछरा को रूप धरिकें मारिबे की इच्छा सूं आयो जो वत्सासुर दैत्य ताकूं मारिकें वाके देह को लीलाई तें कैथ के वृक्षपै गिराय दियो ॥ ९ ॥

और बलदेव जी सहित श्रीकृष्ण, गधा को रूप धारे धेनुकासुर दैत्य कूं बंधुन सहित मारिकें पके ताल के फल जा में लगि रहे ऐसे ताल वन में कुशल करत भये ॥ १० ॥

बड़े उग्र प्रलम्ब दैत्य कों बलवारे बलदाऊ तें मरवाय कें वन की आंचि ते व्रज के पशून कूं और गोपन कों छुड़ावत भये ॥ ११ ॥

बड़े विषहरे कालीनाग कों दमन करि वाके मद कों दूरि करि जोरवारी वाकूं कालीदह में तें निकासि कें जमना कूं निर्विष करत भये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

औत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामात्मायं स्यादिति शङ्का ॥ १३ ॥

उक्तमप्यतिविस्मयेनाभिनयेन आह क्वेति ॥ १४ ॥

प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १७ ॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १८ ॥
एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ।
अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १९ ॥
पुरानेन व्रजपते साधवो दस्युपीडिताः ।
अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्राक् श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्ता सम्भावनस्य नन्दस्य कृष्णतत्त्वावबोधकं जातं स इदानीं तेनैव वाक्येन गोपानुपादिशति—श्रूयतामिति ॥ १५—२१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किञ्च, दुस्त्यजश्चेति । ते तनये तवैव तनयोऽयं नास्माकमिति विचारितेऽपि त्यक्तुमशक्यः स्वाभाविक इत्यर्थः । तत्रापि सर्वेषाम् अहो भवतु वा सर्वाकृतिप्रकृतिसुन्दरे सर्वचित्ताकर्षकेऽनन्यगतीनामस्माकमनुरागो दुस्त्यजः तस्याप्यस्मास्वयोग्येष्वपि औत्पत्तिकः जन्मदिनमेवारभ्य दृष्टः स्वाभाविक एवेत्यर्थः । अत्रादिमाविति तत्तद्वक्ष्यमाणेन सम्प्रति प्रस्तूयमान इत्यर्थः । अन्यत्तैः तत्र किमित्याद्युत्प्रेक्षायां मिथो देहदेहिनोर्यथा तद्वदित्यर्थः ॥ १३ ॥

केति प्रथमर्थः सप्तहायनत्वेन जन्मवृद्ध्यावयवतदवस्था गृहीताः ताभिश्च बालत्वं निश्चितं तच्चात्यन्तं बालान्तरेषु व्याप्तदर्शनात् तथा महाद्रिविधारणेन पूतनादिवधहेतुप्रभावत्वं स्वाभाविकप्रेमविषयाश्रयत्वं च गृहीतं ताभ्यां बालादन्यत्वं तदन्यत्वेऽपि देवादित्वं तत्रापि परमविलक्षणत्वं निश्चितं बालान्तरादौ तददर्शनात् तदेवं सप्तेत्यादित्वे बालादन्यत्वं न सम्भवति महाद्रीत्यादित्वे च बालत्वं च न सम्भवतीत्यर्थः । ततस्तस्मादेकस्मिन् मिथो विरोधिधर्मद्वयात् शङ्काविप्रतिपत्तिजः संशयः बालोऽयं बालादन्यः परमविलक्षणदेवादिर्वेति ॥ १४ ॥

निजाशेषभगवत्ताप्रकटनार्थम् अवतीर्णोऽयं साक्षात् श्रीभगवानेवेति व्यक्तमुक्ते कदाचिदैश्वर्यज्ञानेन भयगौरवादिना स्नेहमरहानिः स्यादिति शङ्कया श्रीगर्गेण साक्षात् परमैश्वर्यमनुक्त्वा व्यपदेशेनैव तद्व्यञ्जयता यान्यक्षराण्युक्तानि तैरेव इदश्च स्वाभाविकगुणवाचकता प्रतिपादकतयाऽवधारितैर्गोपान् प्रबोधयन्नाह—श्रूयतामिति । मे मम गर्गकात् श्रुतेतत्प्रभावस्य वचः वः शङ्का व्येतु श्रूयतां अर्भक इति स्वस्य बालत्वेनैव निश्चयं बोधयति यद्वा, वो युष्माकं योऽर्भकस्तस्मिन्निति ममैव युष्माकमप्ययं बालक इति स्नेहविशेषमेव दर्शयति एवं भवतां परमानुरागविषयं परोक्षेऽप्यपरोक्षवदुक्तिः सदा तस्य साक्षादिव हृदि स्फूर्तेः मे मम कुमारं पुत्रमिति पूर्ववत् पुनः पुनस्तथैवोक्तिरतिनिश्चयाय यद्वा, मे माम् एकाकिनं यद्वचः व्यक्तमेव न च सङ्केतादिनेत्यर्थः—यद्वा ह हर्षे ॥ १५ ॥

गर्गोक्तिमेवाह—वर्णा इत्यादिना । न विस्मय इत्यन्तेन अत्र प्राचीनप्रकटार्थोऽनुसन्धेयः । किञ्चात्र "तस्मान्नन्द ! कुमारोऽयम्" इति प्रथमश्चरणः "तत्कर्मसु न विस्मयः" इति चतुर्थः गर्गवाक्ये तु "तस्मान्नन्दात्मजोऽयं ते" इति प्रथमः "गोपायस्व समाहितः" इति चतुर्थः ; इत्यद्धा मां समादिश्येति वक्ष्यमाणात् श्रीनन्दवाक्यात् तद्वाक्यमेवानेनानुदितमिति लभ्यते तस्माद्विनयार्थं स्वपुत्रे सर्वेषां स्वसाधारण्येन ममताया गोपायितव्यतायाश्च व्यञ्जनार्थमेव च किञ्चिदन्यथा विधायानूदितमपि श्लेषेण यथार्थतया सम्पाद्यते स्म ॥ १६—२१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अञ्जः अञ्जसीः ॥ १९—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुस्त्यज इति । हे नन्द ! ते तव तनयेऽस्मिन् कृष्णे नोऽस्माकं सर्वेषां व्रजौकसामनुरागः दुस्त्यजः कथं तस्यैवंविधातिमानुषचेष्टितस्य चास्मास्वौत्पत्तिकः जन्मसिद्धोऽनुरागः कथम् ? अतः सर्वशक्तिः सर्वेषामात्मा च किं तवात्मज इत्याशङ्कामह इति भावः ॥ १३ ॥

अन्यथैतन्न घटत इत्याशङ्कामेवाविष्कुर्वन्ति—केति । हे व्रजनाथ ! ततोऽद्रिधारणादेस्तवात्मजे शङ्का सर्वशक्तिपरमात्मशङ्का जायते ॥ १४ ॥

एवमापृष्टः प्राकृतश्रीकृष्णजातकात्मकगर्गवाक्यो नित्यं तच्चरित्रपरिशीलननिवृत्तेश्वरत्वासम्भावना नन्दस्तेनैव गर्गवाक्येन गोपानामाशङ्कामपनुदति हे गोपाः एवं कृष्णमुद्दिश्य गर्गो यदुवाच तच्छ्रूयतां तच्छ्रवणेनार्भकेऽस्मिन् विषये भवतां शङ्का व्येतु निवर्तताम् ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं तद्गर्गोक्तं येन शंका व्येतीत्यत्र तदेवाह-वर्णा इत्यादिभिः इत्यन्ता इत्यतः प्राक्तनैः इमे श्लोकाः पुरस्तादेव व्याख्याताः ॥ १६—२२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुरागो हृदयङ्गमः स्नेहः औत्पत्तिकः उत्पत्तिसिद्धः कथम् ॥ १३ ॥

ततो नो जायते शङ्केत्यादिना न तद्वीर्यविद इति स्पष्टीकृतम् ॥ १४ ॥

व्येतु विगता भवतु वः युष्माकं प्रसक्तकथां प्रत्यन्तरङ्गत्वेन कथान्तरमारभ्यत इति सूचनाय हकारः "प्रत्यारम्भप्रसिद्धे । ह हा विषादशुगार्तिषु" इति च ॥ १५ ॥

वर्णाः शुक्लाद्याः ॥ १६ ॥

कचिन्मथुरायां वा वसुदेवस्य सकाशात् अभिज्ञाः वसुदेवस्यापत्यमिति तद्धितप्रत्ययज्ञानपटवः ॥ १७ ॥

न केवलमेतदेव नामरूपत्रयमेव अपि त्वन्यान्यपि सन्तीत्याह-बहूनीति । नारायणादीनि गुणानुरूपाणि मधुसूदनादीनि कर्मानुरूपाणि ॥ १८ ॥

आधास्यत् आधास्यति । यद्वा, यदि यूयमस्मिन् भक्त्युद्रिक्तं चित्तमकरिष्यत् तर्ह्ययं वः पुरुषार्थलक्षणमाधास्यत् "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" ( ३ । ३ । १३९ ) इति सूत्रात् अयं विधिः ॥१९॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च, दुस्त्यजश्चेति तस्माद्विरुद्धधर्माश्रितो ॥ १३ ॥

शङ्का संशयः ॥ १४ ॥

बाल एव वा परमविलक्षणः देवाद्विवेति श्रूयतामित्यादि ॥१५॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वमनं च सुतरामशक्यं निर्विषकरणं च ॥ एतत्सर्वं बाह्यं निरूप्य आन्तरं निरूपयन्ति, दुस्त्यज इति । अस्मिन् कृष्णे नोऽस्माकं सर्वेषामेव अनुरागोऽपि दुस्त्यजः नह्यन्योद्भवे असम्बन्धिनि साधारणसम्बन्धमात्रेण वित्तात् पुत्रात् प्राणादपि अधिकः स्नेहो भवितुमर्हति, तर्हि पुत्र एवाऽस्य न भवत्यकस्मादेवागत इति मन्तव्यं तत्राहुः, नन्द ! ते तनय इति । कचिद्गुर्वादिषु कस्यचित् स्नेहोऽपि भवेत् न तु सर्वेषां न वा व्रजौकसां ज्ञानमस्ति अतोवस्तुसामर्थ्यादेवैवं जायत इति किञ्च, तस्याप्यस्मास्वौत्पत्तिक एव स्नेहो नान्येषां बालकानां एतत्कथं भवेत् अतो वस्तुसामर्थ्यात् क्रियासामर्थ्याच्च धर्मविचारेण धर्मिविचारेण वा महान् भवतीति कथं तव पुत्रो भवेत् ॥ १३ ॥

आस्तां तावदन्यत् इदमधुना जातमित्याश्चर्यमित्याहुः-क समहायनो बाल इति । समहायनो बालः क महाद्रिविधारणं च क अतः कार्यकारणयोः लोकन्यायेन विरोधात् तवात्मजे नः शङ्का जायते अस्माकमेतद्अतिसन्दिग्धं तव पुत्रो भवति न वेति विधिपक्षे कृतार्था भविष्यामः अविधिपक्षेऽपि अपराधाः क्रियन्त इति को वेद किं वा भविष्याम इति भवति विचारणा ॥ १४ ॥

एवं पूर्वपक्षे कृते नन्दः सिद्धान्तमाह-श्रूयतामिति । भगवानद्भुतकर्मेति पूर्वपक्षसिद्धान्तयोर्व्यत्यासः अन्यथैतद्भगवच्चरित्रं न भवेत् नन्दस्तु स तादृश एव कश्चित् महापुरुषो मम गृहे जात इति मन्यते गर्गवाक्यात् यथा भगवदवताराः कचित् भवन्ति तथायमपि मम गृहे अवतीर्ण इति अतः सम्बन्धोऽप्यस्ति "माहात्म्यं चोपपद्यते" इति गर्गवाक्यानि वक्तुमुपक्रमते, श्रूयतामिति । हे गोपाः ! भवन्तो न विचारणाक्षमाः अतो मे वच एव श्रूयतां सर्वैरेव भवद्भिः ततः किं स्यात् ? अत आह-व्येतु शङ्का वश्चाऽर्भक इति । अर्भके बालके शङ्कावचनमपगच्छतु मत्पुत्रो भवति न वेति ननु, तद्वाक्यं कथं प्रमाणं वादिवाक्यस्याप्रमाणत्वात् तत्राह-एनं कुमारमुद्दिश्येति । यदायं कुमारो बालक एव स्थितः तदैव गर्गः मे मह्यं मां बोधयितुं किञ्चिदुवाच हेत्वाश्चर्ये ॥ १५ ॥

कथमेवं ज्ञातवानिति गर्गवाक्यानि पूर्वं व्याख्यातान्यपि पुनरापाततो व्याख्यायन्ते अनुवादात् वर्णास्त्रय इत्यादीनि वाक्यानि अष्टश्लोकैरुक्तानि किलेति प्रसिद्धे अस्य बालस्य पूर्वं त्रयो वर्णा जाताः वर्णशब्दो रूपविशेषे जातिविशेषे च वर्तते तत आह "शुक्लो रक्तस्तथा पीतः" इति इदानीं कृष्णः कृष्णवर्णत्वं प्राप्तः सत्यादिष्वेवं भवति रामो रामो वा इदानीं त्वद्गृहे वर्त्तमानसमीपे कलौ वा कृष्णधर्मे कृष्णत्वं प्राप्तः न तु कृष्णः मध्यन्दिने सवितरि मण्डलस्थकृष्णत्ववत् इति कृष्णनामनिरुक्तिः ॥ १६ ॥

वासुदेवनिरुक्तिमाह-प्रागयमिति । कचिद्देशविशेषे कालविशेषे वा वसुदेवस्यायं पुत्रो जातः अतो ये अभिज्ञाः एतन्मम जानन्ति ते वासुदेव इति प्रचक्षते वस्तुतस्तु वसुशब्देन अन्ने वसुरूपो देवः वसुदेवः लक्ष्मीः तस्याः पतिर्वासुदेव इति तदाह, श्रीमानिति । इतीति तत्रापि सम्बध्यते इति शब्दस्तदन्ते वा योजनीयः ॥ १७ ॥

न केवलं नामत्रयमेव भगवतः किन्त्वन्यान्यपि बहूनि सन्तीत्याह-बहूनीति । रूपाण्यपि सन्ति ते सुतस्येति सम्बन्धस्यापनार्थं रूपनाम्नोः हेतुमाह-गुणकर्मानुरूपाणीति । तावन्तो गुणाः तावन्ति च कर्माणि प्रतिरूपनामभेदेन, कर्मरूपाणि अनन्तत्वेषामनुरूपाणि तत्र प्रमाणमाह तान्यहं वेदेति । आधाभावमाह—नो जना इति । जनास्तु न जानन्ति ॥ १८ ॥

एवं नामान्युक्त्वा भगवतः कार्याण्याह-एष व इति । एष एव वः युष्माकं श्रेयः आधास्यत्- "आधास्यति छन्दसि लुङ्लङ्लिटः" (३।४।६)इति भविष्यदर्थे लङ् पूतनादिवधस्य कृतत्वात् भूतार्थतापत्ति किञ्च, गोपगोकुलयोः नन्दनः आनन्दजनको भविष्यति । किञ्च, अनेनैव सर्वाण्येव दुर्गाणि सङ्कटस्थानानि यूयं तरिष्यथ ॥ १९ ॥

परमनायासेनैव अत्रार्थे पूर्वसम्मतिमाह-पुराऽनेनेति । पृथुरूपेण अन्येन वा व्रजपते ! इति सम्बोधनमज्ञानं नाश्चर्यमिति बोधनार्थं साधवः सर्वे एव दस्युभिः पीडिताः दस्यून् जिग्युः रावणा-

य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥ २१ ॥
तस्मान्नन्द ! कुमारोऽयं नारायणसमो गुणैः ।
श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२ ॥
इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते ।
मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥ २३ ॥
इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः ।
दृष्टश्रुतानुभावास्ते कृष्णस्याऽमिततेजसः ।
मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वयेऽपि दस्यवः अराजके च अरक्ष्यमाणाः स्थिताः नष्टा अनेनैव समेधिताः दस्यून् जिग्युः पृथावेव तत् स्पष्टम् ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवमस्येश्वरत्वे गिरिधारणादय एतन्निष्ठा धर्मा एव हेतवो दर्शिताः अस्मदादिसर्वव्रजवासिनिष्ठश्चैको धर्मो दृश्यतामित्याह—दुस्त्यजश्चेति । ते तनये तवैव तनयो नाऽस्माकमिति सम्यग्विचारिते सत्यपीति भावः । न केवलमस्माकं वात्सल्यभाववतामेव गोपानाम् अपि तु सर्वेषां बालादीनामपि सख्यादिभाववतां स्त्रीपुंसामपि जात्यन्तराणामपि वनौकसां मृगपक्ष्यादीनामपि अनुरागः प्रतिक्षणं नवनवायमाना वर्द्धमाना प्रीतिरनुरागशब्दस्य तथाभूतार्थकत्वात् न तु प्रीतिमात्रम् । किञ्च, दुस्त्यज उत्पत्तिकत्वात् सम्प्रतीश्वरत्वलक्षणे दृष्टेऽपि त्यक्तुमशक्यः तेन पुत्रवित्तादिदेहजीवात्मभ्यो यथोत्तराधिकप्रेमास्पदेभ्योऽप्यात्यन्तिकप्रेमास्पदं परमात्मैवायमिति बुध्यते नहि केवलनरत्वे सत्येवं सति सम्भवतीति भावः । सत्यं तर्हि परमात्मैवायं निश्चीयतामिति चेत्तत्राहुः—अस्मासु सर्वेषु व्रजवासिषु वनौकस्सु च तस्याऽपि अनुराग उक्तलक्षणः कथं सम्भवेत् तस्यात्मारामत्वेन सर्वत्रौदासीन्यादस्मासु सांसारिकेष्वौत्पत्तिकत्वाशक्तिर्न घटत इति भावः ॥ १३ ॥

उक्तमप्यद्रिधारणं प्रस्तुतत्वादतिविस्मयेन पुनराहुः—क्वेति ॥ १४ ॥

अहो मद्बालकेऽस्मिन् प्राक् सिद्धमहाप्रभावे मादिष्टदेवस्य श्रीनारायणस्य अत्यतिकृपया मद्विपदोऽभिहन्तुमावेशमालक्ष्यसे. संशेरते तदेतान् श्रीगर्गोक्त्यैव प्रबोधयामीत्याशयेनाह—श्रूयतामिति ॥ १५-२१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

औत्पत्तिकः स्वाभाविकः ॥ १३—२२ ॥

भाषा टीका ।

हे नन्द ! हमसबव्रजवासीन को या तुम्हारे लाला में ऐसो प्रेम हैगयो है, कि—जो छुडाये तेऊ न छूटे, और वाऊ को हम सबन में स्वाभाविक प्रेम जाने काहे ते है ॥ १३ ॥

भलाँ तुम हूं तौ देखौ कहाँ सात वर्ष को बालक ? और कहाँ इतने बडे पर्वत को उठावनों ? तासों हे व्रजराज ! तिहारे पुत्र में हम कों शंका होय है । कहूं परमेश्वर न होय ॥ १४ ॥

नन्द उवाच ।

या तरियां गोपन की बातें सुन के बाबा नन्द बोले, कि—हे गोप हो ! तुम मेरो वचन सुनो जासों तुमारी या बालक में तें शंका दूर होय, गर्गाचारी या बालक को नाम धरिके जो कछु कह गये हैं ताय तुम सुनो ॥ १५ ॥

गर्गाचार्य ने कही, कि—ये बालक युग युग में देह धारण करे है तासों या के तीन वर्ण होय गये, पहिले शुक्ल भयो, फिर रक्त भयो, ता पीछें पीत भयो, अब या समें कृष्ण वर्ण भयो है ॥ १६ ॥

और यह तुम्हारो पुत्र पहिले कबहूं वसुदेव के जन्म्यो है, तासों कोऊ जानवे वारे याकों श्रीवासुदेव ऐसें कहें हैं ॥ १७ ॥

तुम्हारे पुत्र के नाम, गुण कर्म के अनुरूप बहुत सें हैं तिनें मैं जानूं हूं और लोग नहीं जानें हैं ॥ १८ ॥

ये तुमारे कल्याण कूं प्राप्त करेगो, गोप और गऊन के समूह को आनंद देइगो, और या कृष्ण की सहायता तें तुम सब कष्टन में सहज में ई छूट जाओगे ॥ १९ ॥

हे व्रजराज ! पहिले तुमारे पुत्र या कृष्ण नें अराजक पृथिवी होयवे ते चोरनतें पीडित ऐसे साधुजनन की रक्षा करी तब साधुन की बढिवार भई और साधुजनन ने चोरन कों जीते ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात्तस्य कर्मसु विस्मयो नास्तीति नन्दस्योक्तिः ॥ २२ ॥

इत्यद्धा साक्षान्मां प्रति समादिश्य गर्गे च स्वगृहं गते सति इदानीं तथा मन्यमानोऽपि इदानीं कृष्णं नारायणस्यांशं मन्ये अत्र हेतुः अक्लिष्टकारिणमिति ॥ २३ ॥ २४ ॥

देवे वर्षति यज्ञविप्लवरुषा वज्राश्मपर्षानिलैः।
सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयन्॥
उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा।
बिभ्रद्गोष्ठमपान्महेन्द्रमदभित्प्रीयान्न इन्द्रो गवाम्॥ २५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे नन्दगोपसम्वादो नाम
षड्विंशतितमोऽध्यायः॥ २६॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गोवर्द्धनोद्धरणं सपरिकरमनुस्मरन् प्रकटितैश्वर्यस्य श्रीकृष्णस्य प्रीतिं प्रार्थयते—देव इति। यज्ञविप्लवेन या रुट् तया देवे इन्द्रे वर्षति सति वज्राश्मपर्षानिलैरशनिजलशर्करातीव्रवायुभिः सीदत्पालपशुस्त्रिमात्मशरणं सीदन्तः पालाः पशवः स्त्रियश्च यस्मिंस्तत्तथा आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वा अनुकम्पी उत्स्मयन् हसन् प्रौढमाविष्कुर्वन् शैलमुत्पाट्य अबलो बालो लीलार्थमुच्छिलीन्ध्रं यथा तथैकेन करेण बिभ्रद्गोष्ठमपात् पालितवान् एवं महेन्द्रमदभित् गवामिन्द्र इत्युत्तराध्यायार्थं च स्मरति स एवम्भूतः श्रीकृष्णो नः प्रीयात् प्रीयतामिति॥ २५॥

षड्विंशे दशमे व्यक्तः षड्विंशो दशमो हरिः।
ध्यनक्तु पञ्चविंशं मां चतुर्विंशतितः पृथक्॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशोऽध्यायः॥ २६॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नन्दकुमारोऽयमित्यत्र नन्दस्य तव कुमार इति षष्ठीतत्पुरुषात् तथा तत्कर्मसु न विस्मय इत्यत्र तथापि स्वप्रभावेण पुत्रतया लब्धस्य तस्य नारायणस्यैवास्य कर्मसु विस्मयो न कार्यः आश्चर्यं मत्वा गोपायनादुदासीनेन न भाव्यमिति तात्पर्यावगमात्। किञ्च,तत् कर्मस्वित्युपलक्षणं स्वाभाविकप्रेमविषयाश्रयत्वेऽपि न विस्मयः कार्य इति श्रीनन्दाभिप्रायः वस्तुतस्तु मिथो नित्यस्वाभाविकसम्बन्धो हेतुरिति न ज्ञायते स्म यद्यपि पूर्वं तैः श्रीगर्गवाक्यं ज्ञातमेवासीत् बकवधानन्तरम् अहो ब्रह्मविदां वाच इत्यादिवचनात् तथाप्यधुना तत्तदद्वारेण समप्रतयेति विशेषः इति। सप्तवाक्यानि॥ २२॥

यतोऽहं पितापि ततः * प्रभुत्वेन श्रीनारायणोपममेव मन्ये इत्याह—इतीति। अंशं तदकस्य्वेशिनं मन्ये वितर्कयामि॥ २३॥

नन्दस्य वचः तद्द्वारा गर्गगीतं च श्रुत्वा। यद्वा, गर्गस्य गीतं गाथा श्रीभगवद्गीतादिवद्गीता वा यस्मिन् तत् मानर्चुः स्वस्वगृहात् गन्धचन्दनवस्त्रभूषणादिना आदौ श्रीनन्दस्यार्चनं श्रीकृष्णस्य तत एवोत्पन्नत्वात् तस्यापि पितृत्वेन मान्यत्वात् तत्र कृष्णे वनादागते सन्ध्यायामिति ज्ञेयम् यदुक्तं श्रीपराशरेण श्रीकृष्णं गोपाः साक्षादेव पप्रच्छुरिति तेन च निजाभिप्रायज्ञानाल्लज्जया सप्रणयकोपं प्रत्युक्तं यथा श्रीविष्णुपुराणे श्रीपराशर उवाच—

"गते शक्रे तु गोपालाः कृष्णमक्लिष्टकारिणम्।
ऊचुः प्रीत्या धृतं दृष्ट्वा तेन गोवर्द्धनाचलम्॥
वयमस्मान्महाभाग! भवता महतो भयात्।
गावश्च भवता त्राता गिरिधारणकर्मणा॥
बालक्रीडेयमतुला गोपालत्वं जुगुप्सितम्।
दिव्यं च कर्म भवतः किमेतत्तात! कथ्यताम्॥
कालियो दमितस्तोये प्रलम्बो विनिपातितः।
धृतो गोवर्द्धनश्चायं शङ्कितानि मनांसि नः॥
सत्यं सत्यं हरेः पादौ शपामोऽमितविक्रम!
यथा त्वद्वीर्यमालोक्य न त्वां मन्यामहे नरम्॥
प्रीतिः सस्त्रीकुमारस्य व्रजस्य त्वयि केशव!।
कर्म चेदमशक्यं यत् समस्तैस्त्रिदशैरपि॥
बालत्वं चातिवीर्यं च जन्म चास्मास्वशोभनम्।
चिन्त्यमानममेयात्मन्! शङ्कां कृष्ण प्रयच्छति॥
देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा।
किं वाऽस्माकं विचारेण बान्धवोऽसि नमोऽस्तु ते॥

श्रीपराशर उवाच॥

क्षणं भूत्वा त्वसौ तूष्णीं किञ्चित्प्रणयकोपवान्।
इत्येवमुक्तस्तैर्गोपैराह कृष्णो महामुने!॥
मत्सम्बन्धेन वो गोपाः! यदि लज्जा न जायते।
श्लाघ्यो वाहं ततः किं वो विचारेण प्रयोजनम्॥
यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि।
तदात्मबन्धुसदृशी बुद्धिर्वः क्रियतां मयि॥
नाहं देवो न गन्धर्वो न यक्षो न च दानवः।
अहं वो बान्धवो जातो नातश्चिन्त्यमतोऽन्यथा"॥ इति॥

---

* प्रभृति तम इति पाठान्तरम्।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा वैशम्पायनेनोक्तं तत्प्रतिवचनम्—

"मन्यन्ते मां यथा सर्वे भवन्तो भीमविक्रमाः ।
तथाहं नावमन्तव्यः सजातीयोऽस्मि बान्धवः ॥
यद्यहं भवतां श्लाघ्यो बान्धवो देवसप्रभः ।
परिज्ञानेन किं कार्यं यद्येषोऽनुग्रहो मम" इत्यादि ।

तच्च श्रीनन्दोत्तरेण हन्त सन्देहा अपि परमौत्सुक्येन साक्षात् श्रीभगवन्मुखादेव श्रोतुं दृढयितुं च तमेवोचुरिति कल्पनया परिहार्यमिति ॥ २४ ॥

एवं समाप्यापि परमानन्देन तदेव गोवर्द्धनोद्धरणं सपरिकरमनुस्मरन् तत्र च निजभावाभयस्य गोष्ठस्य निजभावविशेषेण गवेन्द्रतयानुध्यातेन श्रीभगवता कृतां रक्षां तदर्थमिन्द्रमखभङ्गभङ्गीं चानुस्मृत्य बाढं प्रीयमाणस्तां प्रीतिमन सर्वं पुरुषाधिकतयाऽनुभवन् तां च पुनः श्रीगवेन्द्रविराचितप्रीत्यनुगृहीतत्वे सति परमास्वादवतीं जानंस्तत्प्रीतिमेव प्रार्थयते, देवेति । तत्र देवे वर्षतीत्यप्रतिकार्यत्वं सम्यासामिव दर्शितं तत्रापि यच्चिद्वरुषत्यतिशयः स्वरूपतोऽप्यतिशयमाह—वज्रेति । पर्षैतिरफसंयोगीपाठः क्वचित् वज्रादिभिः सीदन्तः पाला: गोपाः पशवः स्त्रियश्च यस्मिन् तत् तत्राप्यतिशयः आत्मशरणमिति तस्मात् मच्छरणमित्यादेः तत्राप्यतिशयः दृष्ट्वा स्वयं चक्षुर्विषयी कृत्येति अत एवानुकम्पीति भूम्नि मत्वर्थीयः एवं कृपाव्यग्रेऽपि तस्मिन् शौर्यं त्वव्यग्रमेवासीदित्याह—उत्स्मयन्नित्यादि । इन्द्रं प्रति सोत्प्रासं स्मयन्नित्यर्थः । तादृश एव सन् शैलमुत्पाट्य तत्राप्येकेन वामेन करेण तत्रापि बालो लीलाप्रयोजनकमुच्छिलीन्ध्रं यथा तद्वत् तत्रापि बिभ्रत् सप्ताहोरात्रानेकरीत्या दधत् तदेवं विस्मयहर्षौत्सुक्यधृतिभिराविष्ट आह—गोष्ठमपादिति । सगर्वहर्षमाह—महेन्द्रमदभिदिति । गवामिन्द्रोऽपि महेन्द्रस्य मदभेत्तेति सोत्प्रासं वस्तुतस्तु गवेन्द्रत्वे तस्मिन् महेन्द्रत्वमपि समुद्रे नदीवत्प्रविशतीति भावः । प्रीयादित्याशीर्लिङ् तत्प्रीतौ जातायां मम गोष्ठजनानुगतत्वमपि सेत्स्यतीति भावः । तथैव श्रीगोष्ठजनभावेनाह—इन्द्रो गवामिति । नोऽस्माकं गोकुलेन्द्रो वा तदेवं तदेव स्वपुरुषार्थत्वेन दर्शितं श्रीब्रह्मवदेवेति ज्ञेयम् अत्र श्रुतिश्च "जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणं अवृश्चदद्रिमवसस्यदः स्पृधस्तक्षनाकं स्ववहपसा पृथुम्" इति अयमर्थः वीरः श्रीकृष्णो जज्ञानो जातमात्र एव स्पृधः स्पर्द्धमानान् दैत्यान् व्यबाधत विशेषेणैव बबाधे अभिपौंस्यं रणं प्रापश्यत् पुंस इदं पौंस्यं स्पर्द्धयोर्वं रणं प्रापश्यत् दैत्यैर्नानाविधान् सङ्ग्रामांश्चकारेत्यर्थः । किञ्च, अवसस्यदः स्वयमेव गोवर्द्धनरूपेण अव अनायासेन सस्यदः गोपैर्दत्तमन्नादिकं भक्षितवान् किञ्च, स्पर्द्धमानं नाकं तत्पतिं नाकस्यं मेघचक्रं चास्तभ्नात् स्तम्भयामास यतः पृथुमद्रिमवृश्चत् उत्पाट्य धृतवानित्यर्थः । स्ववहपसा लीलयैवेति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यद्धेति नन्दोक्तिः । इति नन्दवच इत्यादिस्तु शुकोक्तिः इति इत्थमद्धा स्फुटं मां समादिश्य सम्यग्ज्ञापयित्वा गर्गे स्वगृहं गते सति अहं कृष्णं साक्षात् नारायणं मन्ये तत्र हेतु वदन् विशिनष्टि अक्लिष्टकारिणम् अक्लिष्टानि क्लेशरहितान्यतिमानुषचेष्टितानि करोतीति तथा तम् अतो नारायण एव इत्यर्थः ॥ २३ ॥

इत्येवंविधं गर्गगीतं तद्वचः नन्देनोदितं श्रुत्वा सर्वे व्रजौकसो विगताश्चर्या मुदिताश्च नन्दं कृष्णं चानर्चुः कृष्णं प्रति गतविस्मया नन्दमानर्चुर्ब्रह्म मन्यन्तेति वा ॥ २४ ॥

गोवर्द्धनोद्धरणं सपरिकरमनुस्मरन् प्रकटितैश्वर्यस्य भगवतः स्वविषयप्रीतिं प्रार्थयते शुकमुनिः—देव इति । यज्ञविघातेन हेतुना या रुट् तया हेतुभूतया देवेन्द्रे वर्षति सत्यशनिशिलावर्षवातैः सीदन्तः क्लिश्यन्तः बालाः पशवः स्त्रियश्च यस्मिन् तथा स्वयमेव शरणं रक्षिता रक्षणोपायश्च यस्य तद्गोष्ठं दृष्ट्वा स्त्रियात्मेतीयङार्षः अनुकम्पायुक्तः उत्स्मयन् स्वमाहात्म्यमाविष्कीर्षुस्तावद्धसन् अबलः बालोऽपि शैलं लीलार्थमुत्पाटितं छत्राकमिवैकेन करेण उत्पाट्य बिभ्राणो गोष्ठं यो ररक्ष स महेन्द्रमदभिद्गवामिन्द्रो नोऽस्माकं प्रीयात् प्रसन्नो भवतु यदुत्तराध्यायस्थं सुरभिवाक्यादि "त्वं न इन्द्रो जगत्पते" इत्यादि तदपि अनुसन्दधता शुकेन विशेषितो गवामिन्द्र इति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आनर्चुः पूजयामासुः ॥ २४ ॥

श्रीशुकः प्रथमभागसमाप्तिसूचनाय स्वेष्टदेवतां कृष्णमभिष्टुवन् तत आत्मानमाशास्ते—देव इति । यज्ञविप्लवः यज्ञभङ्ग इत्यर्थः । तस्मादुत्पन्नया रुषा वज्राश्मवत् वज्रपाषाणवत् कर्कशैर्वर्षैः अनिलैश्च स्त्रिया सह सीदन्तः कम्पमानाः बालाश्च पशवश्च यस्मिंस्तस्मिन्व्रजाख्यपत्तु आत्मा शरणं रक्षिता यस्य तस्य अनुकम्पी दयाद्रवीभावयुक्तः उत्स्मयः उद्गतस्मयः निरस्तदर्पः उत्कृष्टमन्दहासो वा महेन्द्रस्य मदं गर्वं भिनत्ति निर्मूलयतीति महेन्द्रमदभित् अबलो स्थूलः अणुर्बालः लीलासाधनमुत्फुल्लं शिलीन्ध्रं यथा तथैकेन हस्तेन शैलं शिलोच्चयं पर्वतमुत्पाट्य बिभ्रत् गवामिन्द्रो गोविन्दो ऽस्मभ्यं प्रीयात् प्रीतो

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवतित्वत्यन्वयः । पायोम इति पाठे नोऽस्मान् रक्षत्वित्यर्थः । "गोस्वामी गोविन्दोऽधिकृतो गवाम्" इत्यमरः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

षड्विंशोऽध्यायः ॥ २६ ॥

( विजयध्वजरीत्या चतुर्विंशोऽध्यायः ॥ २४ ॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्कर्मसु न विस्मय इति श्रीगर्गस्यैवाभिप्रायकथनं तदनुसार इतिशब्दोऽध्यन्वेति "गोपायस्व समाहितः" इति तदनुप्रयोगात्मोदाहृतम् अंशो व्याख्येयं योजितम् ॥ २२ ॥ २३ ॥

गर्गस्य गीतं यत्र तत् आनर्चुः स्वस्वगृहेभ्यो गन्धमाल्यवस्त्रादिना एतच्च सन्ध्यावृत्तं सम्वादस्तु श्रीकृष्णे वनं गत एवेति गम्यते ॥ २४ ॥

पुनस्तामेव लीलां स्मरन् तत्र दर्शितगोकुलकृपातिशयं श्रीकृष्णं स्मरंस्तत्कृपामेव स्वपुरुषार्थत्वेन प्रार्थयमानस्तमेव निजेष्टदेवत्वेन व्यञ्जयति—देव इति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, य एतस्मिन् महाभागाः परमभाग्यव्यतिरेकेण परं नास्मिन् प्रीतिर्भवति एतादृशे ये प्रीतिं कुर्वन्ति ते मानवा अपि भूत्वा शत्रून् जिग्युः तदाह—नारय इति । अरय एतान् नाभिभवन्ति यतः विष्णुपक्षान् विष्णुः पक्षे येषां वैष्णवाद् आसुराः असुरावेशिनः यथा लोकेऽपि नाभिभवन्ति लौकिकी कथेयमिति दृष्टान्तः ॥ २१ ॥

एवं भगवत्त्वाभाववत्त्वमुपपाद्य उपसंहरति—तस्मादिति । अत्र पाठभेदः अयं कुमारः हे नन्द ! नारायणसमः गुणैः कृत्वा नारायणतुल्यः श्रिया कीर्त्या अनुभावेन च नारायणतुल्यः एतावद्गर्गवाक्यं स्वयमाह—तत्कर्मसु न विस्मय इति तस्य भगवतः कर्मसु गोवर्धनोद्धरणादिषु विस्मयो न कर्तव्यः ॥ २२ ॥

एतादृश एवायं मम गृहेऽवतीर्ण इति ममाऽप्यत एवात्र न विस्मय इति सम्मत्यर्थं स्ववृत्तान्तमाह—इत्यद्धेति । अद्धा साक्षात् भावयति सम्यगाविश्य भगवत्स्वरूपमुक्त्वा गर्गे स्वगृहं गते कृष्णं नारायणांशमेवाहं मन्ये यत्कारणत्वमपि गृहे गत्वा पुरुषोऽत्र नारायणस्तस्यायमंशावतार इति एतावज्ज्ञातवान् नत्वधिकमग्रिमं वक्ष्यति ब्रह्मांशोऽयमित्यस्मिन्नर्थे न केवलं वाक्यं प्रमाणं किन्त्वनुभवोऽप्यस्तीत्याह—अक्लिष्टकारिणमिति । न क्लिष्टं कदापि कृतवान् करोति वा यदि जीवः स्यात् क्लिष्टं कुर्यात् व्यसनैः पीडितो हि तथा करोति न त्वपीडितः व्यसनाभावस्तु ब्रह्मण्येव अतः कृष्णो ब्रह्मेति अहं मन्ये ॥ २३ ॥

एवमुपदेशे सञ्जाते तदाह—इतीति । गर्गेण पूर्वं गीतं वस्तुनो गर्गेऽपि पूर्वसिद्धं तदिदानीं नन्दवचः तच्छ्रुत्वा व्रजौकसो ऽत्यन्तसम्भावनारहिताः मुदिताः जाताः इति सम्बन्धः । न केवलं वाक्यप्रामाण्यं स्वयमपि कृष्णं तथाभूतं दृष्टवन्त इत्याह—दृष्टश्रुतानुभावस्येति । दृष्टः श्रुतश्च अनुभावो यस्य अमितं च तेजो यस्य स्वरूपतोऽपि सदानन्दस्य सन्निधि गर्गवाक्यं तत् श्रुत्वा मुदिताः सन्तो नन्दमानर्चुः कृष्णं च गतविस्मयाश्च जाताः महान् नन्दो यस्यैतादृशः पुत्र इति नन्दपूजा, भगवांस्तु पूजनीय एव आश्चर्याभावः फलम् ॥ २४ ॥

एवमध्यायत्रयेण सन्देहाभावपूर्वकम् उपशमनिवृत्तिपूर्वकं भगवन्माहात्म्यं भगवद्धर्मश्च स्थापितः एतादृशधर्मस्थापकं भगवन्तं शुको नमस्यति, देव इति । स भगवान् गताभिन्द्रः नः अस्माकं प्रीयात् प्रीतो भवतु स एव प्रीतो भवति यः कस्यचित् कदाचित् प्रीतो भवति अतस्तस्य प्रीतिलिङ्गमाह—देवेन्द्रे वर्षति सति वर्षणमपि न यादृच्छिकं किन्तु यज्ञविप्लवरुषा इन्द्रयागस्य विप्लवो नाशः तेन रुट् रोषः न केवलं वृष्टिमात्रं किन्तु वज्राश्मपरुषानिलैः सह वज्रः अश्मा परुषानिलश्च सात्त्विकराजसतामसा निरूपिताः ततः किमत आह—सीदत्पालपशुस्त्रीति । सीदन्तः पालाः पशवः स्त्रियश्च यत्र व्रजे तत्सीदत्पालपशुस्त्रि तादृशमप्यात्मशरणाम् आत्मैव शरणं रक्षको यस्य तादृशं दृष्ट्वा अनुकम्पी जातः कृपावान् जातः ततस्तदुःखनिवृत्त्यर्थमुत्स्मयन् उद्धृस्मितं कुर्वन् गोपानामज्ञानं ख्यापयन्नेव एककरेण शैलं गोवर्धनमुत्पाट्य अबलो बालः यथा क्रीडयोच्छिलीन्ध्रमुत्पाट्य बिभर्ति तथा ऽबिभ्रत् गोष्ठमपात् रक्षितवान् न केवलं गोष्ठरक्षैव फलं किन्तु महेन्द्रमदभित् महेन्द्रस्यापि मदं भिनत्ति गवां चेन्द्रः गोविन्द इत्याख्यां बिभर्ति सोऽयमीश्वरोऽयम् । स प्रीयादिति प्रार्थना ॥ २५ ॥

इति श्रीमद्भागवत सुबोधिन्यां श्रीलक्ष्मणभट्टात्मज

श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे

त्रयोविंशाऽध्यायविवरणम् ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे नन्द ! तस्मादयं कुमार इति गर्गोक्तेन केवलमयं ममैव कुमारोऽपि तु युष्माकमपीत्यतोऽस्मिन् ऐश्वर्यं दृष्टेऽपि वात्सल्यं प्रतिदिनमाशीःशतश्च न त्याज्यमिति विवक्षयैव "तस्मान्नन्दात्मजोऽयन्ते" इति गर्गोक्तेरनुक्तिः नारायणसम इति नारायणेनेवाऽऽदेव नत्वयं नारायणः यथा सूर्यकान्तशिलापि सूर्यसमेत्युच्यते तस्मादयं नेश्वरः नापि निकृष्टो जीवः किन्तु लोकोत्तरकर्मा कोऽप्ययमस्मत्कुलभूषण एव अत एव तेन गर्गेणाप्यन्ते प्रोक्तं "तत्कर्मसु न विस्मयः" इति तस्य लोकातीतकर्मसु अत्यद्भुतदृष्ट्या अयमीश्वर इति बुद्धिर्न कर्तव्येति तेनैव निषिद्धत्वादस्मिन् युष्मदनुकम्पे चिरं जीवेत्याशीरेव कार्या न त्वौदासीन्य-

श्रीमद्विश्वनाथचक्रवर्त्तीकृतसारार्थदर्शिनी।

मिति फलतो गोपानाञ्च समाहित इति गर्गोक्तिरेवोक्ता गोपानां विस्मयनिरसनेन संशयापनोदनञ्च कृतमिति ॥ २२ ॥

अंशं तच्छक्त्यावेशिनं मन्ये वितर्कयामि अस्मान् माक्लिष्टान् कर्त्तुं शीलं यस्य तम् ॥ २३ ॥

आनर्चुः वस्त्ररत्नस्वर्णमुद्रोपहारेण सम्मानयामासुः कृष्णे वनादागते सति सायञ्च तं पीताम्बरहारकटककुण्डलकिरीटै-रलङ्कृत्य जय जय व्रजभूमिभूषण ! चिरं जीवेत्युपलालयामासुः ॥ २४ ॥

भोः राजन्निन्द्रकोपोत्थिताद्वज्राश्मवर्षादिकात् महासङ्कटाद्गोवर्द्धनमुद्धृत्य तदाश्रितं गोष्ठं रक्षन् तन्मखप्रवर्त्तनपण्डितः कृष्णो यथा सुरलोकगर्वहन्ता प्रीणाति तथैव ब्रह्मकोपोत्थिताद्वाग्वज्रादिदं श्रीभागवतं वेदोदधिम्भप उद्धृत्य स्वां रक्षन् तत्परायणमखप्रवर्त्तनपण्डितः कृष्णो भक्तिरहितदार्शनिकभूसुरलोकगर्वहन्ता प्रीणात्विल्याशयेन परीक्षितः स्वान्तःपातं मानयन् कृष्णप्रीतिं प्रार्थयते—देवे इति। यज्ञविप्लवेन या रुट् तया देवे इन्द्रे वर्षति सति वज्रैरश्मभिश्च परुषानिलैश्च सीदत्पालपशुस्त्रि सीदन्तः पालाः पशवस्त्रियश्च यस्मिन् तत्तथा आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वा अनुकम्पी कृपालुरुत्स्मयन् प्रौढिमाविष्कुर्वन् अर्भको बालो लीलया यथा उच्छिलीन्ध्रमेकेनैव करेणोत्पाटयति तथैवोत्पाट्य यो गोष्ठमपात् स गवामिन्द्र इति इन्द्र एवेन्द्रस्य मदं भिनत्तीति न्यायः कृष्णो नो मां परीक्षितम् एतान् श्रोतॄंश्च प्रति भीयात् प्रीयातु ॥ २५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षड्विंशो दशमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नारायणस्यांशमिति "जगृहे पौरुषं रूपं भगवान्,, इत्यनेन भगवदवतारः "नारायणोऽङ्गम्" इत्यनेन च कृष्णस्याङ्गभूतः नारायणः इत्युक्तम् "कृष्णस्तु भगवान्स्वयम्" "एष वै भगवान्साक्षादाद्यो नारायणः पुमान्, स वै किलायं पुरुषः पुरातनो, य एक आसीदविशेष आत्मनि" इत्यादिभिः कृष्णस्य स्वयं भगवत्त्वमुक्तम्। एवं सति गर्गेण असम्भावनादोषानुत्पादनाय नारायणसम इत्युक्तम् श्रीनन्देन तु गोपासम्भावनानुत्पादनाय नारायणांशं मन्ये इत्युक्तम्। अन्ये(षां) च स्वस्वबुद्ध्यनुसारेण मेनिरे "देवप्रवरौ नटवरौ क्व च गायमानौ" "कृष्णं मर्त्यमुपाश्रित्य" "मल्लानामशनिर्नृणां नरवरो स्त्रीणां स्मरो मूर्त्तिमान्,, इत्यादिषु देवप्रवरत्वनटतुल्यत्वमर्त्यत्वादयः नानाप्रतीतयः श्रीकृष्णे जाताः श्रीकृष्णस्तु न नारायणतुल्यः न च नारायणांशः न च नटतुल्यो मर्त्यान्यादिरूपं किन्तु सर्वशक्तिः सर्वात्मा सर्वकल्याणगुणराशिः निःसमानातिशयः सर्वकारणकारणः अखिलनारायणपरमपुरुषादिनामध्येयः सर्ववेदैकवेद्यः सर्व-

स्मृतिपुराणेतिहासप्रसिद्धः इह च प्रतिप्रकरणं सुप्रसिद्धस्वरूपगुणादियाथात्म्य इति दिक् ॥ २३—२४ ॥

सर्ववेदार्थवित् भगवत्पुत्रः श्रीशुको महामुनिः दीनानुकम्पी स्वबुभुक्षुदत्वादिगुणनिधेः स्वोपास्यस्य श्रीपुरुषोत्तमस्य प्रीतिं प्रार्थयते—देवे इति यज्ञस्य विप्लवेन विघातेन या रुट् रोषस्तया हेतुभूतया देवे वर्षति सति वज्राश्मवर्षानिलैरशनिजलोपलकठिनवातैः सीदन्तः क्लिश्यन्तः पालाः पशवस्त्रियश्च यस्मिन् तत् आत्मा स्वयमेव शरणं रक्षिता यस्मिन् तत् गोष्ठं दृष्ट्वा अनुकम्पी उत्स्मयन् इन्द्रबाल्यदर्शनेन हसन् शैलमुत्पाट्य अर्भको बालो लीलार्थमुच्छिलीन्ध्रं यथा तथा एकेन करेण बिभ्रत् दधत् गोष्ठमपात् पालितवान् इत्थं महेन्द्रमदभिद् गवामिन्द्रः श्रीगोपालः नोऽस्माकं प्रीयात् प्रीयतां प्रसन्नो भवत्वित्यर्थः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षड्विंशाऽध्यायार्थप्रकाशः ॥ २६ ॥

---

भाषा टीका।

और जो बडभागी मनुष्य यामें प्रीति करें हैं तिनको वैरी पराभव नहीं करें हैं। जैसें विष्णु के पक्षवारेन कों असुर नहीं सताय सकें ॥ २१ ॥

तासों हे नन्द ! ये तुम्हारो पुत्र गुणन करिकें शोभा करिके कीर्ति करिके, प्रभाव करिके, साक्षात् नारायण के समान है। ता सों याके कर्मन में विस्मय मति करिओ ॥२२॥

या प्रकार साक्षात् गर्गाचार्य मोतें कहिकें जब सों अपनें घर कूं गयें, तब सों क्लेश जिनमें न होय ऐसे कर्मन कूं करन वारे या कृष्ण कूं मैं नारायण को अंश मानूं हूं ॥ २३ ॥

ऐसें गर्गाचारी के कहे भये नंद के वचन कूं सुनिकें सब ब्रजवासी अपरिमित तेज वारे श्रीकृष्ण के प्रभाव कूं देखे सुन चुके हैं तासों बडे प्रसन्न भये, और नंदराय की प्रशंसा करन लगे तथा श्रीकृष्ण में तें शंका दूर होयगई ॥ २४ ॥

यज्ञ के भंग होयवेतें क्रोध करिकें जब इन्द्रने वर्षा करी, तब वज्र पत्थर पवन सूं पीडित ग्वाल बाल पशु स्त्रीन कूं अपनी शरण आये देखिकें बालक जैसें छतौना कूं उखारि लेय ऐसें दयालु श्रीकृष्ण हंसिकें एक हाथ तें पर्वत कूं उखारिकें धारण करिकें ब्रजकी रक्षा करत भये सो इन्द्रके मद भेदन वारे गऊन के इन्द्र श्रीकृष्ण हमारे ऊपर प्रसन्न होओ ॥ २५ ॥

इति श्रीमद्भागवत दशमस्कन्ध में छवीसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्त ॥ २५ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

## ॥ सप्तविंशोऽध्यायः ॥

श्रीशुक उवाच ।

गोवर्द्धने धृते शैल आसाराद्रक्षिते व्रजे ।
गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च ॥ १ ॥

विविक्त उपसङ्गम्य व्रीडितः कृतहेलनः ।
पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥ २ ॥

दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः ।
नष्टत्रिलोकेशमद इन्द्र आह कृताञ्जलिः ॥ ३ ॥

इन्द्र उवाच ।

विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ।
मायामयोऽयं गुणसम्प्रवाहो न विद्यते ते ग्रहणानुबन्धः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तविंशे तदा तस्य कृष्णस्य प्राभवं परम् ।
वर्ण्यते सुरभीन्द्राभ्यामभिषेकमहोत्सवः ॥

गोवर्द्धने धृते शैल इति शक्रस्य भयेनागमने हेतुः आसाराद्रक्षिते व्रज इति सुरभेर्हर्षेणागमने ॥ १ ॥

तत्रेन्द्र आगत्य किं कृतवांस्तदाह—विविक्त उपसङ्गम्येत्यादिना । अथाह सुरभिरित्यतः प्राक्तनेन अन्वयेन विविक्ते एकान्ते पादयोः पस्पर्श नमश्चकार ॥ २ ॥

अस्य श्रीकृष्णस्य श्रुतश्चासावनुभावश्च श्रुतानुभावः दृष्टः श्रुतानुभावो येन स इन्द्रः नष्टस्त्रिलोकेशोऽहमिति मदो यस्य सः ॥ ३ ॥

तत्र ममापराधं क्षमस्वेति वक्तुं तव तावदपराधो नास्त्येव त्वयाऽनुग्रह एव कृत इत्याह चतुर्भिः—विशुद्धसत्त्वमिति । धाम स्वरूपं शान्तमेकरूपमतश्च तपोमयं प्रचुरज्ञानं सर्वज्ञमित्यर्थः कुतः? ध्वस्तरजस्तमस्कं ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् अत एवायमस्मदादिषु दृश्यमानो मायाकार्यरूपो गुणसम्प्रवाहः गुणैः सम्मोहात इति तथा संसार इत्यर्थः । स ते तव न विद्यते यतः अग्रहणेनाज्ञानेनानुबध्यत इति तथा स सर्वथापि ते नास्तीत्यर्थः अज्ञानसम्बन्धो वा ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गा नित्यं वर्द्धयतीति तथा तस्मिन्निति तत्साहाय्येन महावृष्ट्यापि तथा गवां दुःखाशङ्का निरस्ता अद्भुत कृपाद्यभिव-सम्पत्त्या समृद्धिरेव सूचिता । व्रजशब्देन समस्ता मानुषाः पशुपक्ष्यादयश्च गोलोकात् प्राकृतात् नत्वप्राकृतात् श्रीगोकुल-प्रकाशविशेषात् इन्द्रस्य तदीयसुरभिसङ्गासम्भवात् अप्राकृत-गोलोकस्त्वष्टाविंशाध्यायान्ते दर्शयिष्यते इन्द्रस्य तथा सहागमनं श्रीकृष्णस्य गोप्रियत्वाज्ञानात् तत्रापि तस्या आदरत्वात् अत्र इन्द्रोऽपि तदानयनार्थं तत्र गत्वा तस्माद्व्रजतीति सम्भाव्यते, ब्रह्मणा चोदिता वयमिति सुरभिवाक्यात्तत्र तु ब्रह्मणा प्रेषितः तेनैव सह चागतस्तत्र सुरभ्या समं ब्रह्माण-मादाय गत इति च अप्यर्थे चकारः महापराधित्वेन तस्याग-मनं न सम्भवेत् तथाप्यव्रजदित्यर्थः । अनन्यगतिकत्वात् तत्र हेतुः कृष्णं स्वयं भगवन्तम् अतः शरणागतत्वेनाव्रजदित्यर्थः सुरभिपक्षे कृष्णं स्वसन्तानप्रियतागुणेनाकर्षकम् एवशब्देन शक्रस्य कैवल्यं बोध्यते वाहनादिपरिवारत्यागेनागमनात् ब्रह्मर्षि-देवमातॄणां चातिलज्जाभिया दूरे स्थितत्वात् अत्र विशेषः श्रीवैशम्पायनेनोक्तः—

"स ददर्शोपविष्टं वै गोवर्द्धनशिलातले ।
कृष्णमक्लिष्टकर्माणं पुरुहूतः पुरन्दरः ॥
तं वीक्ष्य बालं महता तेजसा दीप्तमव्ययम् ।
गोपवेषधरं विष्णुं प्रीतिं लेभे पुरन्दरः ॥
तं साम्बुजलदच्छायं कृष्णं श्रीवत्सलक्षणम् ।
पर्याप्तनयनः शक्रः पुनः पुनरवैक्षत" ॥

अतः प्रीतिं लेभ इति पूर्वं श्रीकृष्णस्यैकान्ते दर्शनासम्भाव-नायासीत् तस्याप्यपराधादिति भावः । किञ्च, तत्रैव—

"तदोपविष्टस्य सुखं पक्षाभ्यां पक्षिपुङ्गवः ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्तर्द्धानगतश्छायां चकारोरगभोजनः" इति ।

श्रीपराशरेणापि—

"गरुडं च ददर्शोर्व्वीरन्तरद्धानगतं द्विजम् ।

कृतच्छायं हरेर्मूर्द्ध्नि पक्षाभ्यां पक्षिपुङ्गवम्" ॥ इति ॥१॥

विविक्ते विजन इति गोकुले तेषां प्रकटागमनव्यवहाराभावात् क्षमापणाया एकान्ते व्यवहारासिद्धत्वाच्च श्रीकृष्णस्यैकाकित्वेन तत्र स्थितिश्च नभसि दूरतस्तत्सुरभिसहितं तं दृष्ट्वा केनापि व्याजेनागमनात् विविक्त उपसङ्गम्येति सुरभिं विनेति गम्यते तच्च स्वयमेवासावेकाकितया दीनो भूत्वा प्रथमं मिलत्विति सुरभ्या एव प्रेरणयेति ज्ञेयम् । तत्र हेत्वन्तरं व्रीडितः प्राप्तलज्जः कुतः ? कृतं हेलनं दुरुक्त्यादिना भगवद्वज्ञा येन किरीटेनेति दण्डवत्प्रणामं बोधयति अर्कवर्चसेति तस्य तत्पादयोरुपयोजितस्य शोभां वर्णयति ॥ २ ॥

अस्य बालगोपालरूपस्य कृष्णस्य नराकृतिपरब्रह्मणः दृष्टः श्रीगोवर्द्धनोद्धरणेन श्रुतः श्रीब्रह्मादिमुखेनानुभावो येन सः अमितम् अनन्तं तेजो यस्य तस्येति अर्कतुल्यकिरीटतेजो युक्तोऽप्यसावर्ककोटयधिकतेजः पुञ्जजाज्वल्यमानश्रीपादाब्जनखाग्रांशुलहरीकस्य तस्याऽग्रे दिवा खद्योतायमान इव वृत्त इति सूचयति, अत एव च सद्यो नष्टत्रिलोकेशमदः अमिततेजस इति-पञ्चम्यन्तं वा हेतौ । अर्थः स एव ॥ ३ ॥

तत्र महापराधिन्यपि स्वस्मिन् श्रीभगवतः स्वाभाविकश्रीमुखप्रसत्त्या कोपाभावमवधार्याऽस्वस्थः सन् तं स्तुवन् आदौ निजापराधं क्षमयितुं परमेश्वरस्य तवास्मासु कोपादिकं न घटते वयं तु त्वन्मायामोहिताः संसारिणो बहुधा नित्यापराधिन एवेत्याह—विशुद्धसत्त्वमिति । विशुद्धसत्त्वमत्र प्राकृतसत्त्वानुस्यूतचिच्छक्तिवृत्तिविशेषो ज्ञेयः । यथोक्तं ब्रह्मसंहितायम् "सत्त्वावलम्बिपरसत्त्वविशुद्धसत्त्वम् गोविन्दमादिपुरुषं तमहं भजामि " इति मन्यते: । तत्र विशुद्धसत्त्वात्मकं स्वरूपमित्यर्थः यद्वा, तव धाम प्रकाशोऽयं विशुद्धसत्त्वं तदाख्यं स्वप्रकाशतारूपमित्यर्थः । विशुद्धपदस्य जाड्यांशपरित्यागेऽपि हेतुत्वात् सत्त्वपदस्याविसंवादार्थत्वात् तच्च शान्तं क्षोभरहितं किञ्च, तपोमयं ज्ञानात्मकरूपम्—

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥

इति श्रीविष्णुपुराणवचनात् । ज्ञानप्रचुरं च शान्तत्वे हेतुः ध्वस्तरजस्तमस्कं विक्षेपावरणशून्यम् "अयमात्माऽपहतपाप्मा" इति श्रुतेः । प्राकृतसत्त्वं तु तत्र निषिद्धं श्रीविष्णुपुराणे—

"सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।

स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु" ॥ इति

"ह्लादिनी सन्धिनी संवित् त्वय्येका सर्व (संस्थिती) संश्रये ।

ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते" ॥ इति च,

अतः अयं साक्षादनुभूयमानस्ते तव कारुण्यादिगुणानां सम्प्रवाहः परम्परा मायामयो न विद्यते न भवति कुतः ? अहणेन स्वस्वीकारेणैव अग्रहणेन इन्द्रियकरणकपरिच्छेदाभावेनैव वा अनुबध्यते प्राप्यत इति तथा सः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

विविक्ते विजनदेशे ॥ २—३ ॥

विशुद्धमित्त्वं रजस्तमोरहितं सत्त्वं धाम स्थानं ते मायामयोऽयं त्वच्छरीर प्रकृतिपरिणामभूतः एवं विभूतिद्वयमुक्तं गृहणानुबन्धि शरीरगृहणसाधनं कर्म ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कृतापराधेनेन्द्रेण स्तुतिपूर्वकं क्षमापितस्य तदनुग्रहप्रकारं सुरभीन्द्रादिकृतक्षीरगङ्गाजलाद्यभिषेकप्रकारं तन्निमित्तं गोविन्दनामधेयं तादात्विकं तुम्बुरुनारदहर्षप्रयुक्तगानादिप्रकारं चाह—सप्तविंशेन, तत्र प्रथमं शक्रागमनं तत्कृतश्रीकृष्णस्तवनं चाह—गोवर्द्धन इति । सुरभिः कामधेनुः गोवर्द्धनाख्ये शैले पर्वते धृते सति कृष्णेनेति इतीन्द्रस्य समयागमने हेतुः आसारादूव्रजे रक्षिते सतीति सुरभेः सहर्षागमने हेतुः ॥ १ ॥

तत्रेन्द्र आगत्य किं कृतवांस्तत्राह—विविक्त इत्यादिना अथाह सुरभिरित्यतः प्राक्तनेन ग्रन्थेन । कृतं हेलनमपराधो येनात एव व्रीडितो लज्जितोऽत एवैकान्ते समीपमेत्याऽर्कस्येव वर्चो यस्य तेन किरीटेनैनं कृष्णं पादयोः परपर्श नमश्चकार ॥२॥

दृष्टेति । अमितं तेजः प्रभावो यस्य तस्य कृष्णस्य दृष्टः श्रुतश्चानुभावो येन तथाभूतोऽत एव नष्टोऽपगतः त्रिलोकेशोऽहमितिमदो यस्य कृत अञ्जलिर्येन तथाभूत इदं वक्ष्यमाणं स्तुत्यात्मकं क्षमापणात्मकं च वाक्यमाह ॥ ३ ॥

तत्र स्तुत्यात्मकं वाक्यं तावद्दर्शयति—विशुद्धसत्त्वमित्यादिना । तत्रेतः प्राक् त्रिलोकेशमदाऽऽविष्टोऽहमधुना यथाभूतदेवमानुषत्वन्माहात्म्यावलोकनाध्यवसितनित्यनिरुपाधिकत्रिलोकेशत्वं त्वदसाधारणमिति मत्वा त्यक्तत्रिलोकेशमदोऽभवमित्यभिप्रायेणाऽकर्णयत्तद्विभूतिद्वयसम्बन्धविशिष्टं स्तौतीन्द्रः—विशुद्धेति । तव धाम स्थानं परमव्योमेति यावत् विशुद्धं रजस्तमोभ्यामननुविद्धं सत्त्वं सत्त्वमयमत एव ध्वस्तरजस्तमस्कं निर्धूतरजस्तमोगन्धमत एव शान्तं रागद्वेषादिरहितं केवलं त्वदुपासनात्मकतपस आगतं ततोऽगम्यमित्यर्थः । तवेति स्वस्वामिभावरूप सम्बन्धे षष्ठी एवं नित्यविभूतिनायकत्वमुक्तम् । अथ तदेव धाम विशिंषन् लीलाविभूतिनायकत्वमाह—ते तवायं मायामयः मायातः आगतः पूर्वत्राच्च "तत आगतः" (४।३।७४) इत्यधिकारे "मयट्च" (४।३।८२) इति मयट् सङ्कल्पमात्रपरिकल्पित इत्यर्थः । सत्त्वादिगुणकार्यरूपः संसारस्तन्मूलकः अहणानुबन्धः शरीरग्रहणकारणभूतः कर्मानुबन्धश्च न विद्यते यत्रेति शेषः । यत्र गुणसंप्रवाहः ग्रहणानुबन्धश्च न विद्यते तथाभूतं त्वद्धामेत्यर्थः । तव मायामय इति गुणसंप्रवाहश्च भगवत्सङ्कल्पायत्तत्वोक्त्या अस्य तावच्छ्रीमल्लीलाविभूतिनायकत्वमुक्तं भवति ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"तस्मिन्नप्यसुरावेशो गते प्रकृतिरेव तु" इति वचनात् देवस्वभावप्रकटनपूर्वकं सुरभिक्षीराभिषेकेण शक्रस्तुत्या च हरि,

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

माहात्म्यख्यातिसिद्ध्यर्थान्मुमुक्षुभिस्तस्मिन्नतिशयितं प्रेम विधेयमित्यस्याध्यायस्यारम्भः। तत्र सुरभीन्द्रयोरागमनं कथयति, गोवर्द्धन इति, गोलोकाद्ब्रह्माधिकृतस्थानात्सुरभिः इन्द्रस्तु स्वर्गलोकात्—

"दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु।
भूमौ पशौ च विद्वद्भिर्गोशब्दो दशसु स्मृतः" ॥

इति हलायुधः। यो हरेर्विरोधमाचरत्स एवावज्ञादित्यन्वयः ॥ १॥

विविक्ते एकान्ते "विजिर् पृथग्भावे" इति धातुः जनसम्मर्द-राहित्यस्थल इत्यर्थः ॥ २॥

इदानीं दृष्टः पूर्वं श्रुतोऽनुभावो येन स तथा इन्द्र इदमाह ॥ ३॥

कीदृशं तत्राह—विशुद्धेति। अहं तव धाम गृहस्थानीयं स्वरूपं शरणं प्रपद्य इति शेषः। अनन्तपदार्थराशिं गृह्णातीति गृहम्। ननु, गृहवत्सत्त्वादिगुणदारुभीरचितं चेत्कालान्तरे जीर्णं स्यादित्यत्राह—विशुद्धेति। विगतं शुद्धसत्त्वं रजस्तमोमिश्ररहितं केवलसत्त्वगुणो यस्मात्तथा चारुतरपदार्थैः कुशलपुरुषेण रचितं न चेन्नयनशुभगं न स्यादित्यत्राह—शान्तमिति। शान्तं मङ्गलम्। "शान्तिः प्रशममङ्गले" इति अत एव सुखनिष्ठं वा क्षोभरहितं वा नन्वेवं चेत्पाषाणकल्पमित्यत्राह—तपोमयमिति, ज्ञानात्मकं यदा सत्त्वमपि न सम्बध्यते तदा रजःसम्बन्धो नास्तीति किं वक्तव्यमितिभावेनाह—ध्वस्तेति। अत्र लिङ्गमाह, मायामय इति, यत्र त्वयि अयं मायामयः भगवदिच्छानिमित्त-गुणसम्प्रवाहः त्रिगुणसम्बन्धो न विद्यते यस्मात्तस्मादिति शेषः "विद सत्तायाम्" इति धातोः जीववत्सम्बन्धो नास्ति किन्तु सृष्ट्यादौ प्रेरकत्वसम्बन्धोऽस्तीति कृत्वा न विद्यत इति कीदृशः अग्रहणाऽनुबन्धः अग्रहणमाग्रहः स एवानुबन्धो गुणभूतो यस्य स तथा। यद्वा, यत्र गुणसम्प्रवाहे अग्रहणम् अज्ञानमनुबध्नातीत्यग्रहणाऽनुबन्धः अनेन कार्याभावे कारणाभावो ऽनुमीयते इति सूचितम् ॥ ४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गोलोकात् प्राकृताद्वेव नत्वप्राकृतात् इन्द्रस्य तदीयसङ्गो न सम्भवतीति "इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा चोदिता वयम्" इति सुरभिवाक्याच्चेदं लक्ष्यते श्रीब्रह्मपार्श्वे भयाद्गतः शक्रस्तदाज्ञया गोलोकात् सुरभिमानीय पुनस्तया सहाजगाम इति ॥ १॥

विविक्ते विजने श्रीवैशम्पायनेन ध्यानं चोक्तम् "स ददर्शोपविष्टं वै गोवर्द्धनशिलातले" इति विविक्तत्वञ्च दूरतस्तं दृष्ट्वा वहुलपुष्पहरणादिकामिषेण सखीनां दूरतः प्रस्थापनात् श्रीदामस्य च तद्दिने कथञ्चिद् अनागमनादिति ज्ञेयम् ॥ २॥ ३॥

विशुद्धं सत्त्वमिति व्याख्या ॥ ४—६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चतुर्विधो भगवत अभिषेको निरूप्यते।
स्तुतिश्चित्रा तथेन्द्रस्य कामधेन्वादिभिः कृता ॥

यथा रत्या सुसंसिद्धा मदाभावस्तथा यदि।
तदैव भगवत्कार्यं सर्वं सफलतां व्रजेत् ॥
गोरक्षा चेद्धरिकृता नाधिदैविकगामिनी।
तथा वा दासभावश्चेत् न चाप्यङ्गीकृतः क्वचित् ॥
स्वयं वा स्वामिभावेन न स्वीकुर्यात्सुरद्विषम्।
तदेयं भगवल्लीला प्रमाणं नैव जायते ॥
अतो हेतूक्तिरप्येषा सत्फला वर्ण्यते स्फुटा।
इन्द्रयागश्च भविता यस्मादिन्द्रो हरिः स्वयम् ॥

पूर्वाध्याये सन्देहाभावो निरूपितः अतः भगवदुक्तमेव कर्तव्यमिति स्थापितं तद्यदि परम्परया इन्द्रयागत्वेन प्रसिद्धं कर्म नेन्द्रयागत्वमापद्यते तदा प्रसिद्धिविरोधः स्यादिति भगवतः इन्द्राभिषेको निरूप्यते न केवलं भगवानेव स्वयमिन्द्रो जातः किं तु सर्वैरेवेन्द्राभिषेककर्तृभिः इन्द्रः कृत इति वक्तव्यं तदर्थमिन्द्रस्य कामधेनोश्चागमनमाह—गोवर्द्धन इति। गोवर्द्धने शैले धृते इन्द्रमानभङ्गादिन्द्रः समागतः अन्यथा भगवान् गोवर्द्धनधारणेन क्लिष्ट इव तत् स्मृत्वा इन्द्रं मारयेत् अतः क्षमापयामि इति आसारात् धारासम्पाताच्च रक्षिते गोकुले स्ववंशो रक्षित इति सुरभिः समागता न हि प्राकृतैः स्ववंश्यैः भगवत्पूजा कर्तुं शक्या अतः स्वयमागता चकारादन्यापि तदीया देवा उत्सवार्थं समागताः इति ज्ञातव्यं तत्र प्रथमम् अपराध-निवृत्तिः कारणीयेति इन्द्रस्योपाख्यानमुच्यते ॥ १॥

तत्र समागत इन्द्रः भगवन्तं प्रार्थितवानित्याह—विविक्त इति। एकान्ते भगवत्समीपं गतः भक्ता अपकृता इति कदाचित् अनिष्टं वदेयुः लज्जां च हेतुत्वेन वक्ष्यति अप्रार्थिते सर्वनाशो भविष्यतीति प्रार्थना आवश्यकी अत एकान्ते निकटे गतः तत्रापि व्रीडितः लज्जितः कृतं हेलनं येनेति भीतश्च अत एनं भगवन्तं पादयोः पस्पर्श अर्कवर्चसा किरीटेन भुग्नपृष्ठः शिरो भगवत्पादयोः पातितवान् महत एतत्सर्वापराधक्षमापकम् ॥ २॥

एवं नमस्कारं कृत्वा स्तोत्रं कर्तुमारेभे—दृष्ट इति। ननु, देवा नानृतं वदन्तीति नाप्यारोपेण अयं च भगवतो नोत्कर्षं जानाति अन्यथा अपराधं न कुर्यात् विपरीतबुद्धिश्च अतः कथं स्तोत्रमिति चेत्तत्राह—दृष्टश्रुतानुभावस्येति। दृष्टः गोवर्द्धनोद्धरणचरणः श्रुतः पूतनास्तनपयःपानादिः अनुभावो यस्य किञ्च, न केवलं दृष्टश्रुतभावमात्रत्वमन्यदप्यधिकमस्तीति विज्ञापयति—यथा आज्वल्यमानोऽग्निः सर्वमेव धक्ष्यतीति ज्ञायते तथा भगवत्तेजोऽपि परिदृश्यमानं सर्वं कर्तुं समर्थमित्यवलीयते तदाह—अमिततेजस इति। अत एव नष्टः त्रिलोकेशोऽहमिति मदो यस्य अतः इन्द्र इति नाममात्रम् ॥ ३॥

भगवदधिकारी कृताञ्जलिः सन्नाह अप्रमाणं भगवन्तं स्तौति दशभिः प्राणश्लोकैः—

क्रिया शक्तिप्रधानोऽयं बाह्यश्चायं तथाविधः।
पुरुषार्थप्रसिद्ध्यर्थं षड्गुणं स्तौति माधवम् ॥

निर्दुष्टा भगवद्गुणा इति वक्तुं प्रथमं दण्डकरणेन प्राप्तं क्रोधं निवारयति—द्वाभ्यां हेतुफलाभ्याम्। तत्र प्रथमं भगवतः क्रोधे हेतुर्नास्तीत्याह—विशुद्धसत्त्वमिति। परमार्थस्तु सर्वात्मा सर्वकर्ता सर्वप्रेरकः अतः क्रोधः सम्भावित एव न आविर्भावप्रकारेणापि लीलयापि क्रोधहेतुर्नास्तीत्युच्यते तत्र क्रोधे रजस्तमसी हेतू

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ते त्वयि नष्ट इत्याह–विशुद्धसत्त्वं तव धामेति। शुद्धं रजस्तमोभ्यामसंपृक्तं विशेषेण शुद्धं सत्त्वेनाप्यसंपृक्तं तदेव धाम तव स्थानम् "सत्त्वं विशुद्धं वसुदेवशब्दितम्" इति. तत्र भगवानाविर्भवतीति वासुदेवः किञ्च, धाम तेजोऽपि सात्त्विकमेव भगवत्तेजः सत्त्वमेव वा किञ्च, इदं सत्त्वं शुद्धसत्त्वान्तरेणाप्यमिश्रितं तज्जीवस्थं नरतमभावापन्नं भवति अत इदं सत्त्वं परमकाष्ठापन्नमेव तदाह, शान्तमिति। परमा शान्तिः सर्वोत्कर्षः ज्ञानादयः अवान्तरभेदाः अल्पविक्षेपरूपाः अन्यथा कथं बोधयेत् कथं वा त्यजेत् कथं वा भजेत् अतः शान्तिरेव परमा काष्ठा। ननु, अज्ञानस्यापि शान्तिः परमा काष्ठा भवति वृक्षादिषु सुषुप्तौ च तथोपलम्भात् अतस्तद्व्यावृत्त्यर्थमाह–तपोमयमिति। तपस्तु विहितज्ञानात्मकं तेजोरूपम् अत एव तेजोव्यतिरिक्तं सन्तापयति सुतरां भगवत्तपस्तु ज्ञानमयं "यस्य ज्ञानमयं तपः" इति श्रुतेः। अतो मौढ्याद्या शान्तिः उपरतिरूपा सा नात्र ग्राह्या अत एव शम उपशम इति आत्मसमीपे यः शान्तिस्तिष्ठति स उक्तः ननु शान्तिमात्रे निरोधेन अज्ञानसमीपे वा अतस्तपोमयमित्युक्तम्। ननु, "रजस्तमश्चाभिभूय सत्त्वं भवति भारत" इति यथा सत्त्वं प्रबलं एवं "रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा" इत्यपि "न तदस्ति पृथिव्यां वा" इति च केवलसत्त्वस्य बाधः तत्राह, ध्वस्तरजस्तमस्कमिति। ध्वस्ते रजस्तमसी येन लोकानामपि रजस्तमसी यो नाशयति तं को वा नाशयेत् आधिदैविक एव तादृशस्य नाशको भवति स च व्यवस्थया स्थापितः ते गुणाश्चाऽप्राकृताः सच्चिदानन्दधर्मरूपाः प्राकृतेभ्यो भिन्नाः अन्यथा प्रकृतिजैः त्रिभिः मुक्तं सत्त्वं पृथिव्यादिषु नास्तीति न वदेत् तस्यैवाप्रसिद्धत्वात् गुणावताराश्च भगवतः अप्राकृता न भवेयुः। किञ्च, सत्त्वस्य सत्त्वसम्बन्धः कथं भवेत् भेदाभावे अतस्ते त्रयो गुणाः ब्रह्मविष्णुशिवेष्वेव प्रतिष्ठिताः अतः सच्चिदानन्दधर्मत्वात् यदा ब्रह्मादिषु इतरापेक्षा तदेतरभजने सति सत्त्वं चिति रजः आनन्दः तमसीति भगवांस्तु कदाचित् विष्णोः सत्त्वमाधारत्वेन गृह्णाति यदि न केवलः समाधानि प्रकृते तु केवलोऽपि इन्द्रेण भ्रमात् तथा ज्ञायते अन्यथा "प्रागयं वसुदेवस्य क्वचिज्जातः" इति न वदेत् सर्वदैव वसुदेव एव जायमानत्वात् अत इदानीं केवलोऽपि सत्त्वाश्रित उच्यते पूर्वभ्रमापेक्षया अयं भ्रम उत्तम इति स्तुतित्वम्। अन्यथा व्यापिवैकुण्ठे सर्वान् नेतुं न शक्नुयात् सत्त्वं तु आधारत्वेनैव गृहीतमिति विष्णोरपि तथा सामर्थ्यं क्वचिदुच्यते "ब्रह्मैव सगुणो ह्यसौ" इत्यत्रापि विष्णुरेव गृह्यतामिति तदवताराः भगवान्वा क्वचिदन्यथा कृष्णावतारभावित्येव वदेत् अत इन्द्रो विष्णुं भगवन्तं जानातीति स्वज्ञानानुसारेणाह–यदा भगवत्सत्त्वं सर्वरजस्तमोनाशकं तदा तदाश्रिता स्थिता माया तत्र दूरापास्तेत्याह–मायामयोऽयमिति। अयं सर्वोऽपि गुणानां सम्यक् प्रवाहः देवतिर्यङ्मनुष्यादिरूपः। मायामयः मायाप्रचुरः गुणानां कारणभूतत्वात् मायायाः। तत्र प्रमाणमाह–अयमितीति। अन्यथा कथं दृश्यः स्यात् तस्मात्प्राकृतमेवैतत्सर्वम् अप्राकृतं तु न दृश्यत इति तस्मादयं प्राकृतोऽपि गुणः ते ग्रहणस्य ज्ञानस्य अनुबन्धरूपो न भवति अतः प्राकृतदृष्ट्या अयमपकारं कृतवानयमुपकारं कृतवान् इति तव न सम्भवति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सप्तविंशे मयाविन्द्रस्तुतिस्तत्र कृपा हरेः।
सुरभ्या चाभिषेको यद्गोविन्देत्यभिधाऽभवत् ॥ ० ॥

आसाराद्रक्षिते व्रजे इति शक्रस्य भयेनागमने हेतुः सुरभेस्तु ब्रह्माज्ञया भगवदभिषेकः शक्रसाहाय्यञ्च ब्रह्मणा चोदिता वयमिति तदुक्तेः। गोलोकात् प्राकृतादेव नत्वप्राकृताद्वैकुण्ठविशेषात् तदीयसुरभेरिन्द्रसाहित्याऽनुपपत्तेः ॥ १ ॥

विविक्त इति हन्त हन्त शक्रहतकस्य वज्रप्रहारैर्मम गोवर्द्धनपृष्ठं कीदृशं जर्जरमभूदिति दिदृक्षया कदाचित् प्रातरेकाकिनैव कृष्णेन तत्र गमनात्तदैवेन्द्रेणाप्यागमनादिति बुध्यते दर्शनस्थानं च हरिवंशे व्यक्तम्।"स ददर्शोपविष्टं वै गोवर्द्धनशिलातले" इति। शृणु भो! शक्रः त्वं प्रथममेक एव वाहनादिस्वपरिच्छदं परित्यज्य दीनो भूत्वा स्वापराधं क्षमापयितुं प्रभोश्चरणाम्बुजयोर्दण्डवन्निपतेति सुरभ्या प्रेरणादुपसङ्गम्य हन्त भो देवेन्द्र! किमिदं ते मय्यपारं वात्सल्यं दृश्यते यद्बाल्यादज्ञत्वात् त्वन्मखहन्तारं नागसमपि मामनुकम्पितुमायासीति इङ्गितेनाक्षे सति व्रीडितः ॥ २ ॥

आदौ दृष्टः स्वनेत्राभ्यामेव पश्चादपराधित्वं स्वस्य निश्चित्य परित्राणोपायजिज्ञासया मेरुपृष्ठं गत्वा श्रुतो ब्रह्ममुखादनुभावः प्रभावो येन सः ॥ ३ ॥

गर्वाक्त त्वन्मखं विध्वस्य लोभादेव त्वत् सम्प्रदानीयनैवेद्यं भोक्तुं गोवर्द्धनमखामिषमेवाकरवमहमिति मत्सरं त्वं जानास्येवेति स्वस्मिन् वक्रोक्तिमाशङ्क्य भो नाथ त्वन्मायामोहितोऽप्यहं त्वत्कृपालेशेनाधुना त्वत्तत्त्वमेतन्मात्रं त्वहं जानामीत्याह–विशुद्धमिति, द्वाभ्याम्। तव धाम स्वरूपं शान्तमनुग्रं तपोमयं ज्ञानस्वरूपं तर्हि किं सत्त्वगुणोत्थं विशुद्धसत्त्वम् अप्राकृतं चिदानन्दमयमित्यर्थः। अतो रजस्तमसोस्त्वयि सम्भावनैव नास्ति प्रत्युतान्यगतयोरपि तयोस्त्वत्तो ध्वंस एवेत्याह–ध्वस्तं रजस्तमश्च यस्मात् यत् स्मरणादिकर्तुरपि रजस्तमसी नश्यत इत्यर्थः। अतोऽस्मिन् जगत्यस्मदादिषु यो गुणानां सम्यक् प्रवाहः संसाररूपमायामयः अयं ते तव नैव विद्यते। ननु, जीववन्मास्तु किन्तु मायामधीनीकृत्य कदाचित् कौतुकवशाद्वस्तु नात्र कोपि दोषस्तत्राह–अग्रहणानुबन्धः न विद्यते ग्रहणस्यानुबन्धो माकाङ्क्षापि यत्र सः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सप्तविंशेऽध्याये भगवत्प्रभावदर्शनेन भगवन्तं शरणं गतेनेन्द्रेण कृता स्तुतिः सुरभीन्द्रकृतो भगवदभिषेकमहोत्सवश्च वर्ण्यते–गोवर्द्धने इति। गोवर्द्धने धृते शैले इतीन्द्रस्य भयेनागमने हेतुः "आसाराद्रक्षिते व्रजे" इति सुरभेर्हर्षेणागमने हेतुः इन्द्रः इन्द्रलोकादागात् सुरभिः गोलोकादागात् गोलोकः

कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिङ्गभावाः ।
तथाऽपि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ ५ ॥
पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ।
हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वन् जगदीशमानिनाम् ॥ ६ ॥
ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ।
हित्वार्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥ ७ ॥
स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ।
क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वगतोऽपि हि नित्य एव भगवल्लोकः तदुक्तं हरिवंशे ।
"अपामधस्ताल्लोको वै तस्योपरि महीधराः ।
नगानामुपरिष्टाद्भूः पृथिव्युपरि मानुषाः ।
मनुष्यलोकादूर्ध्वं तु खगानां गतिरुच्यते ॥
आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् ।
देवलोकः परस्तस्माद्विमानगमनो महान् ॥
यत्राहं कृष्ण देवानामिन्द्रे विनिहितः पदे ।
स्वर्गादूर्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसेवितः ।
तत्र सोमगतिश्चैव ज्योतिषां च महात्मनाम् ॥
तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि ।
स हि सर्वगतः कृष्ण महाकाशगतो महान्" ॥ इति

महाकाशगतः परमव्योमादिशब्दवाच्यपरमधामाभिन्नः । यद्वा, महाकाशशब्दोऽत्र परब्रह्मपरः परब्रह्मणो निःसमानातिशयव्यापकत्वसूचनार्थः ॥ १ ॥

तत्र प्रथममिन्द्रेण कृतं प्रणामादिकं दर्शयति—विविक्त इत्यादिना । एवं श्रीकृष्णं पादयोः किरीटेन स्पर्शं नमश्चकार ॥ २-३ ॥

नित्यलोकवासी अनित्ये प्राकृते लोकेऽवतीर्णः सद्दोषगन्धास्पृष्ट एव जननिग्रहानुग्रहौ तत्तत्प्राप्त्यधिकारानुसारेण करोषि न तु रागद्वेषाभ्यां संसारीव तव संसारित्वाभावादित्याह, विशुद्धसत्त्वमिति सार्धद्वाभ्याम् । तव धाम स्थानं विशुद्धसत्त्वम् त्रिगुणप्रकृतिकालभिन्नम् सत्तावरकस्वभावमचेतनं द्रव्यम् "तमसः परस्तात्" इत्यादिश्रुतेः । शान्तं निरुपद्रवम् तपोमयं ज्योतिर्मयं प्रकाशात्मकमित्यर्थः । "आदित्यवर्णम्" इति श्रुतेः । ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् तत् अयं मायामयः त्वच्छक्तिविकाररूपः गुणैः सम्बाध्यते इति गुणसम्प्रवाहः संसारः ते तव न विद्यते भवान् संसारनियन्तेत्यर्थः । यतः अहर्मेनममेदं देहगेहादिद्वारा प्राप्तं भवत्स्वेच्छभूतेन ग्रहणेनानुबध्यते इति ग्रहणानुबन्धः बद्धजीवविषय इत्यर्थः ॥ ४ ॥

---

भाषा टीका ।

ॐ गोविन्दाय नमः

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—जब श्रीकृष्णने गोवर्द्धन पर्वत कूं धारण करिके व्रजकी रक्षा करी, तब गोलोक तें सुरभि गौ और स्वर्गलोक तें इन्द्र आवत भयो ॥ १ ॥

कियो है अपराध जानें याही तें लज्जित जो इन्द्र है, सो एकान्त में आयकें सूर्य सदृश तेजवारे किरीट तें श्रीकृष्ण के चरणारविन्दको स्पर्श करत भयो ॥ २ ॥

अमित तेज प्रभाव वारे श्रीकृष्णचन्द्र को जो प्रभाव सुनतो रह्यो ताकूं देखिकें "मैं त्रिलोकी को ईश हूं" ऐसो जो इन्द्रपने को मद रह्यो सो नष्ट होय गयो, और हाथ जोरिकें इन्द्र स्तुति करत भयो ॥ ३ ॥

इन्द्र उवाच ॥

इन्द्र बोल्यो, कि—आपको धाम शुद्ध सत्त्व गुण मय है, तथा शान्त, तपोमय, और रजोगुण तमोगुण रहित है, ये जो गुणन के प्रवाह सौं भयो जो संसार, सो आपके सङ्कल्प मात्र सें भयो है, सो ये संसार और देह धारण करिवे को हेतु जो कर्म ताको आपको सम्बन्ध नहीं है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ॥

यदा अज्ञानतत्कृतदेहसम्बन्धो नास्ति तदा तत्कृतानां लोभादीनां का वार्तेत्याह—कुतो नु इति । तत्कृता देहसम्बन्धकृताः तद्धेतवः पुनरन्यस्य देहस्य हेतवः । ननु, ज्ञानिनामपि ते दृश्यन्ते इत आह, अबुधलिङ्गभावा अज्ञानिनां गमकाः यावद्रागादिमत्त्वं तावज्ज्ञानित्वमेव न सिद्धमित्यर्थः । लोभाद्यभावेऽपि मन्मानभङ्गो दण्डार्थमित्याह—तथापीति ॥ ५ ॥

ननु, त्वद्दण्डे च मम गोपकुलस्य का शक्तिः किरुपा कारणं को वा दण्डो मया कृत इत्यत आह—पितेति । त्वं पिता जगतां जनकः गुरुरुपदेष्टा अधीशो नियन्ता इति दण्डधारणे हेतुत्वं कालत्वात्समर्थः तस्मादुपात्तदण्डो हिताय कदर्पाणाय स्वेच्छातनुभिर्लीलावतारैः समीहसे तव समीहा

## श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षिपैव जगदीशमानिनामस्माकं मानविधूननमित्यर्थः ॥ ६ ॥

कथमेतदित्यत आह—य इति । मद्विधाश्च ते अज्ञाश्च ते अतो जगदीशमानिनः काले भयकालेऽपि यथाधुनैवातिक्रुद्धं त्वामभयं भयमगणयन्तं वीक्ष्याशु तस्मकं जगदीशा इति मदं हित्वा विगतगर्वाः सन्त आर्यमार्गे त्वद्भक्तिलक्षणे भजन्ति अतस्तवेहैव खलानामनुशासनं दण्ड इत्यर्थः ॥ ७ ॥

एवं भगवत्स्वरूपमभिप्रायं चानुवर्ण्य क्षमापयति—स त्वमिति । एवम्भूता असती मतिर्मे पुनर्मा भूदिति प्रार्थनान्तरम् ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतः कैमुतिकन्यायेनाह—कुतोन्विति । यदि ते गुणाः माया मया न भवन्ति तर्हि तद्धेतवो मायाहेतुका दोषाः कुत इत्यर्थः । तत्र हेतुः ईश, हे मायानियन्तः ! तन्वन्नकूटभोजनत्वन्मदासहनादिना मयि ते भवद्भिरवगता एव कथमधुना मयेनाऽपलप्यन्ते तत्राह—तत्कृता लोभादयो ये बुधलिङ्गभावा इति । ये बुधलिङ्गभावा भक्तभक्तिमाहात्म्यगमकाः भक्तदत्तभोजनसमास्वादात्मका लोभादयस्ते तु तत्कृताः कुत इति न माया कृताः किन्तु कृपामात्रकृता इत्यर्थः "पत्रं पुष्पं फलं तोयम्" इत्यादेः ननु, भवतु तादृशो लोभः भक्तसुखकरत्वादन्येषामदुःखकरत्वाच्च क्रोधस्तु स्वविषयदुःखकर एव दण्डात्मकत्वात् कथं तर्हि तत्र च न कृपा तत्राह—अथापीति । धर्मस्य गुप्त्यै यः खलस्य निग्रहः तस्मा इति खलानामपि धार्मिकत्वापत्त्या सुखमेव स्यादिति सोऽपि कृपामात्रकृत एवेति भावः । तथापीति पाठः क्वचित् भगवान् बिभर्तीत्यपरोक्षेऽपि परोक्षवदुक्तिर्भयगौरवादिना ईश मन्युलोभादय इति चित्सुखादीनां पाठे मन्युलोभादीनां च कुतोन्वित्यनेनैवान्वयात् ॥ ५ ॥

अतो मम हितमेवाकरोदित्याह—पिता च गुरुश्चेत्यादि त्वम् । सम्यक् ईहसे विचित्रलीलां तनुषे अन्यत्रैः तत्र मानधूननमित्यतिशयविवक्षयैव भेदानिर्देशः ॥ ६ ॥

मानभञ्जनपूर्वकं हितप्रवर्तनप्रकारमेवाह—य इति । हितमाह, आर्येति. यद्यपि भक्तानन्दनार्थमेव तथापि तवेहा लीला मद्विधानां खलानामपि अनुशासनं शिक्षाकारणं भवतीत्यर्थः ॥ ७ ॥

प्रभो, भो मदादिसर्वदेवेश्वर ! हे क्षमासमर्थेति वा, अथ अकस्मादुक्ताद्धेतोः सः जगद्धितकारी कृतागसोऽपि मम क्षन्तुमर्हसि योग्योसि कृतागस्त्वे हेतुः तव प्रभावं माहात्म्यमविदुषः अज्ञानतः तत्कुतः ? मूढचेतसः विचाररहितस्येत्यर्थः तदपि कुतः ? ऐश्वर्यमदव्याप्तस्य । यद्वा, तव प्रभावं विदुषोऽपि कृतागस इत्यधिकमागोऽभिप्रेतं तथापि क्षन्तुमर्हसि कुतः ? मूढचेतसः विस्मृतप्रभावस्य अज्ञत्वेनाऽग्राह्यापराधत्वादिति भावः । किञ्च सकलजगद्धितार्थावतीर्णस्य परमदयालोरुदारशिरोमणेस्तव मदीयैतत्सकृदपराधक्षमापणं किमुताम किन्तु तथा कुरु यथा पुनस्त्वयि त्वदीयेषु च कोऽप्यपराधो न स्यादित्याह—मैवमिति । एतादृशी त्वयि तावकेषु च महाऽऽगसाञ्जननी मत एवासती मूढचेतस इत्यस्यात्रैव चान्वयः यत् किञ्चित् ज्ञानरहितस्यापि सतो मे न त्वैश्वर्ये सति कथं नाम न भवेत् तत्राह—हे ईश ! तत्रापि त्वया तथा कर्तुं शक्यत इत्यर्थः । एतच्च नातिशुद्धेन चेतसा प्रार्थितमिति ज्ञेयम् "त्वां वीक्ष्य काले भयम्" इमित्युक्तेस्त्वमतयैव तदनुगतेः अत एव पुनः पारिजातापरधादावपि विस्मरिष्यते ॥ ८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तद्धेतवः शरीरग्रहणहेतुकाः अबुधलिङ्गभावाः अज्ञानचिह्नभूतपदार्थाः ॥ ५ ॥

काल इति सप्तमी ॥ ६ ॥

मद्विधा अज्ञाः खलानामनुशासनम् ईहा तव चेष्टा ॥ ७–१६ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वहमेवंविधश्चेत्कथं रागादयः ? कथं तन्मूला दण्डादिप्रवृत्तिरित्याशङ्क्य परिहरति—कुत इति । यद्यपि तव धामैव गुणासंप्रवाहग्रहणानुबन्धाविरहितमतो हे ईश्वर ! निरुपाधिकसर्वेश्वर ! तत्कृतास्तेन शरीरग्रहणेन कृतास्तत्प्रयुक्ता इत्यर्थः । तद्धेतवः पुनरन्यस्य शरीरग्रहणस्य हेतवो ये रागादयः ते कुतोनु तव न सन्त्येवेत्यर्थः । अत्यन्तासम्भावनायां हेतुं वदन् रागादीन् विशिनष्टि—अबुधलिङ्गभावाः अबुधानां देहात्मभ्रमवतां लिङ्गभावाः चिह्नभूतपदार्थभूताः रागादिभिरेवाबुधत्वं व्यज्यते नित्यं स्वयाथात्म्यानुभवस्वरूपस्य तव कथं रागादिसम्भावनापीति भावः । तथापि हे भगवन् ! पूर्णषाड्गुण्य ! भवान् धर्मसंस्थापनाय खलानां निग्रहाय च दण्डं बिभर्ति भगवानिति पाठे षाड्गुण्यपूर्णो भवानित्यर्थः ॥ ५ ॥

न च खलनिग्रहेण तव वैषम्यप्रसङ्गः तन्निग्रहस्यापि तद्दमनद्वारा तदनुग्रहहेतुत्वादित्यभिप्रायेण खलनिग्रहस्यौचित्यं द्योतयितुं विशिंषन् वैषम्याभावमाह—पितेति । सर्वजगतां पिता जनकः गुरुर्हितोपदेष्टा अधीशो नियन्ता दुरत्ययः न तु लौकिकनियन्तृवत्कथञ्चिदत्येतुं शक्यः अतः काले उचितकाले उपात्तो दण्डो येन तथाभूतः नहि लोके पित्रादयः उत्पथगामिनः पुत्रादीन् शिक्षया सन्मार्गे प्रवर्तयितुं प्रभवोऽप्युपेक्षन्ते नचैतावता तेषां वैषम्यञ्चेति भावः । अतः सर्वजगत्पितृत्वादिसम्बन्धविशिष्टस्य प्रभोस्तवोचित एव खलनिग्रहार्थो दण्ड इत्यर्थः । अतस्त्वं जगदीशमात्मानं मन्यमानानां मादृशां मानं गर्वं विधुन्वन्नस्माकं हितार्थमेव स्वेच्छोपात्ताप्राकृतविग्रहतनुभिरुपलक्षितः ईहसे चेष्टसेऽतो न वैषम्यमिति भावः । ६ ॥

दण्डस्य हितार्थत्वमेव उपपादयति—य इति । ये मादृशाश्च ते अज्ञाश्च जगदीशमात्मानं मन्यमानास्ते उचितकाले भयं भयङ्करं दण्डधरं त्वां वीक्ष्य तन्मदं जगदीशाभिमानप्रयुक्तं मदमाशु हित्वा अपस्मया अपगतगर्वाः आर्यमार्गे सतां वर्त्मे प्रभजन्त्यनुवर्तन्ते अतस्तवेहा चेष्टाऽपि खलानामनुशासनं शिक्षैव ॥ ७ ॥

तदेवं भगवतः केवलं लोकहितार्थैकप्रवृत्तत्वमभिधायाथ क्षमापयति—स त्वमिति । मदैश्वर्ययोग्यत्वाभिपत्त्येन यो मदस्तेन प्लुतस्य व्याप्तस्य उत्पथं प्रतिपन्नस्येति वा ममैश्वर्येति पाठान्तरं तदैश्वर्येण ग्राभिपत्त्येनेत्येवार्थः । अत एव ते तव प्रभावमविदुषः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत एव कृतमागोऽपराधो येन तस्य ममापराधमिति शेषः । स एवम्भूतस्त्वं क्षन्तुमर्हसि हे प्रभो ! निग्रहीतुम् अनुग्रहीतुं च समर्थः अथ पुनर्मूढचेतसो ममासती दुष्टा एवंविधा मतिः माभूत्तथा अनुगृहाणेति प्रार्थना ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, "स्वर्णं पथां प्रतिहन्ति भूरि किं मां निन्दन्ति शत्रवो निन्द्याः" इति श्रुतेः हरेः कामक्रोधादिदर्शनाल्लोभाद्यभावः कथं कथ्यत इत्यत आह—कुत इति । ते गुणा हेतवो निमित्तानि येषां ते तद्धेतवः न विद्यन्त इति कुतो नु किं वक्तव्यमित्यर्थः । यद्वा, तस्य समारोहेतवः कुतः कल्प्यन्त इति शेषः । अबुधस्याज्ञानिनः लिङ्गभावाः लक्षणभूताः अत्र कारणाभावात्कार्याभावानुमानं च द्रष्टव्यमित्यर्थः । यद्यपि तत्र गुणानामस्ताः कामादयो न सन्ति तथापि शास्त्रविहिता अदोषकरत्वात्सन्तीत्याशयेनाह—अथापीति, दण्डं शासनं हिंसां वा "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे गुणे" इति यादवः विशुद्धसत्त्वं निर्मलसत्त्वगुणयुक्तं इत्याद्यपव्याख्यानप्रत्याख्यानाय विगतशुद्धसत्त्वमित्यादिव्याख्यातमाचार्यैः सत्त्वगुणाङ्गीकारे मायामयोऽयं गुणप्रवाहो न विद्यत इत्येतद्व्याहतं स्यादिति पश्यद्भिरिति । असच्छासनेन धर्मस्थापनं प्रयोजनं सच्छिक्षणेन किं फलं स्यात् । किञ्च, उभयेषां शासका उभये ते नैक इतीयं शङ्का—

"असतां च सतां चैव हरिरेवानुशासकः ।
सतां तु श्रेयसे सैव ह्यनुशास्तिर्भविष्यति" ॥

इत्याग्नेयवचनेन परिहर्तव्येति ॥ ५ ॥

पितृत्वाद्गुरुत्वात्स्वामित्वाच्च हरेरेकस्यैवानुशासकत्वं नान्यस्येत्याशयेनाह—पितेति । पुण्यपापफलपाचकत्वेन उपात्तदण्डः गृहीतशासनः हिताय सतामिति शेषः । "गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः" इत्येतन्निरस्तमिति ज्ञातव्यम् ॥ ६ ॥

सतामनुशासनं श्रेयसे इत्यभिप्रेतं तदिदानीं व्यक्तमाह, य इति । हे जगदीश ! मद्विधा मानिनः स्युः ते काले समुत्पन्ने निर्भीकसमये प्राप्ते अभयं त्वां वीक्ष्य अस्मन्मदनिर्मूलनवीर्यं त्वां दृष्ट्वा येन मदेन त्वत्पदाश्रमकारिणं तं मदं हित्वा अपस्मयाः निरस्तगर्वाः आर्यमार्गं विद्वज्जनसिद्धान्तं प्रभजन्ति न केवलमस्माकं तवेहानुशासनं खलानामपीत्याह, ईहेति ॥ ७ ॥

तत्र कर्तव्यं प्रार्थ्यते सत्त्वमिति अविदुषः क्षमस्व ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मानभञ्जनपूर्वकं हितप्रवर्तने प्रकारमेवाह—य इति । हितमाह—ईहेति । अनुशासनं शिक्षाकारणम् ॥ ७ ॥

मैवं पुनर्भूदिति प्रार्थना नातिशुद्धचेतसा विहितेति ज्ञेयं पुनरपि पारिजातहरणेऽपराधापातवर्णनात् ॥ ८—१० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्येषा वैषम्यबुद्धिरेव नास्ति अन्येषामपि तादृशबुद्धिनाशकत्वात् तदा वैषम्यबुद्धिकृतानि कार्याणि क्रोधादीनि न सम्भवन्तीति किं वक्तव्यमित्याह—कुत इति । नु इति वितर्के तद्धेतवो अज्ञानहेतवो ग्रन्थिहेतवो वा कुतो भवेयुः । किञ्च, हे ईश ! यदि तथापि ते स्युः तदा तत्पारवश्यादीशत्वं नोपपद्येत यद्यपि बहव एव दोषा निराकर्तव्याः तथापि प्रकृते द्वयं प्रतिभाति अपकारिणि कोपो द्रव्ये लोभश्चेति अत आह—मन्यु लोभादयः इति मन्युराजसः लोभस्तामसः इति वा तन्त्रे दृष्टाः कथं निराक्रियन्ते तत्राह, अबुधलिङ्गभावा इति । अबुधानामज्ञानां लिङ्गभावो लिङ्गत्वं येषां ते ह्यज्ञानिनं ज्ञापयन्ति न तु सर्वज्ञं धीरं तत्कृतज्ञापका वा अतः श्रुतिविरोधात् न तेऽङ्गीकर्तव्याः न हि क्रोधादयः भगवति कैश्चिदनुभूताः कार्येण कल्पनं तु अन्यथाप्युपपद्यते ये प्राकृतेषु क्रोधादिभिर्जायन्ते ते भगवति स्वत एव तर्हि दोषेणैव कार्यं भवति गुणेन न भवतीति वक्तुं शक्यं दुःखादश्रूणि आनन्दादश्रूणि तथा प्रकृतेऽपि क्रोधादपि निग्रहः अनुग्रहादपि निग्रहः इति अतः प्रमाणयुक्तिबाधात् न भगवति क्रोधादयः एवमपि सति भगवान् दण्डं बिभर्ति सतां श्रावणे धर्मरक्षार्थं खलानां निग्रहार्थं चैतत् करोतीति लौकिकभगवतोरेतावान् विशेषः एकत्र फलाभावोऽपरत्र लौकिकसाधनाभाव इति साधनं भगवानेव तत्र साधनं स्वरूपमेवेति सिद्धान्तः । फलं धर्मप्रतिपक्षम् अन्यथा प्रवृत्तिर्न स्यात् यदि भगवानेवं न कुर्यात् पाषण्डप्रवृत्त्या धर्मनाशः स्यात् स च सर्वेषां अश्रेयोरूपः । किञ्च, यदि स्वानुभावं न प्रकाशयेत् गोवर्धनोद्धरणादिना तदा खला न निगृहीताः स्युः अत्र दण्डरूपं पूर्वस्थितस्य नाशः अधिकताडनं च एकस्तु दण्डत्वेन न व्यवह्रियत इत्येकवचनम् एवं कृत एवैतद्भवतीति तवैव ज्ञानं नान्यस्येति भगवानित्युक्तम् अतस्तस्य फलसाधकत्वे प्रमाणान्तरं न मृग्यम् ॥ ५ ॥

एवं श्लोकद्वयेन दण्डः कृतः परमप्रयोजनार्थमिति निरूपितमिदानीं शिक्षैवैषा न तु दण्ड इत्याह—पितेति । पुत्रा हि पितृभिस्ताड्यन्ते गुरुभिश्च शिष्याः राजभिश्च प्रजाः कालादिभिश्च पुरुषाः स्वयमेव न चैते दण्डं कुर्वन्ति किं तु शिक्षामेव त्वं तु सर्वेषां सर्वरूपः जनकत्वात् पिता वेदकर्तृत्वात् गुरुः सर्वेषामेव जगतामधीशः स्वामी ब्रह्मादीनामप्यधिकारसम्पादकः अतोऽधीशः दुरत्ययः कालो मृत्युः कालमृत्युर्हि न केनाप्यतिक्रान्तो भवति उपात्तो दण्डो येन स यमः परलोकेऽपि दुःखदाता तवैवाधिकारिणस्ते इति कर्मकारणात् प्रेरणाद्वा अतः सर्वत्राधिकृतो भगवानेवेति इच्छातनुभिः राजादिशरीरैः लोकानां हिताय दण्डं समीहसे जगदीशमानिनां च मानं विधुन्वन् इच्छातनवो मत्स्यादयोऽपि पुरुषः पिता मत्स्यो गुरुः अधीशः कूर्मो वराहश्च मृत्युदण्डधारिणौ नृसिंहवामनौ तथान्यत्रापि ज्ञेयं उपकारायमोचनाय च तेषां जगतश्च ॥ ६ ॥

तत्र हितं सम्बन्धमिति स्वदृष्टान्तेन विवृणोति—ये मद्विधा इति । मद्विधो यथा एवमेव वरुणादयः अज्ञाः मूर्खाः अन्यथा कथं नन्दं नयेयुः तेषामज्ञानस्यासमाह—जगदीशमानिन इति । यद्यपि भगवदाज्ञा क्रियत इति बुद्ध्यमाने सर्वमेव सौदर्यकृतं तथापि

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

जगदीशा वयमिति अभिमानः स्पष्टः मोहकार्यत्वेन तादृशाः काले स्वावसरे अन्तकाले भयरूपं त्वां वीक्ष्य आशु शीघ्रं वयमीश्वरा इति तन्मदं परित्यज्य आर्यमार्गं नामस्मरणादिकं तुलसीगोपीचन्दनादिधारणं च प्रपद्यन्ते यथेदानीमहं नमस्कारे प्रवृत्तः एवमपि केचित्प्रपद्यन्ते यावत्पुनर्भयात्मकमपि त्वां न प्रपश्यन्ति तावदार्यमार्गं प्रपद्यन्त इति धर्मरक्षार्थं दण्ड उपपादितः प्रकर्षेण भजनं पुनः पूर्वावस्थानं न गृह्णन्ति अपगतस्मयो गर्वो येषामार्यमार्गस्य गर्व एव बाधकः अतो यद्यपि त्वया कौतुकार्थमेव गोवर्द्धनोद्धरणं कृतं तथापि खलानामनुशासनरूपं जातम् अतस्तव चेष्टामात्रमपि सफलमेव ॥ ७ ॥

एवं शिक्षार्थतामुपपाद्य कदाचिदज्ञानवशत्वेन कृतं कर्म चित्त अपराधत्वेनैव भासत् अनस्तन्निषेधार्थम्प्रार्थयति—स त्वमिति ऐश्वर्यमदेन प्लुतस्य अत एव कृतांहसः कृतापराधस्य उभयत्रापि हेतुः ते प्रभावमविदुषः क्षन्तुमर्हसि अथ भिन्नप्रक्रमेण मदीयान्धमानविचार्य केवलोऽयं दीन इति भ्रान्त इति यतस्त्वं प्रभुः न हि प्रभोश्चेतसि क्षुद्रकृताः भासन्ते मूढचेतसो मत्त इति वचनात् मौढ्यं सिद्धमेव तन्वज्ञानं निवर्त्तितं शिक्षा च कृता का अतःपरं क्षमा कर्त्तव्येति चेत्तत्राह–मैवं पुनर्भूरिति । एतादृशी मतिः पुनर्माभूदिति यदि भगवान् क्षमां न कुर्यात् मदपराधं स्मरेत् तदा सत्यसङ्कल्प इति नित्यविषयज्ञानं इति मदाश्रयोऽप्यपराध उत्पद्यते अस्मरणे तु नोत्पद्यते साधनाभावात् पूर्वसाधनस्य निवृत्तत्वाच्च यतः इयं मतिरसती सम्बन्धिनमप्यसतिं योजयतीति अतस्तन्निवृत्तिप्रार्थनोचितैव ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतः कैमुतिकन्यायेनाह—कुत इति । नु भो ईश ! यदि तव गुणप्रवाहे जिघृक्षापि नास्ति तर्हि कुतस्तस्य गुणप्रवाहस्य हेतवो गुणाः स्युः तत्कृता गुणप्रवाहकार्यभूताः लोभादयश्च येऽबुधस्य चिह्नं चिन्हं भावयन्त्युत्पादयन्तीति ते । ननु, तर्हि कथं त्वन्मखभङ्गमकरवं तत्राह—अथापीति । लोभकोपाद्यभावेऽपि ॥ ५ ॥

धर्मगोपनखलनिग्रहाभ्यां पूर्णस्य परमेश्वरस्य मम किं फलमिति चेत् जगतां मङ्गलमेवेत्याह—पितेति । तव साहजिककारुण्यात् जगतां मध्ये ये धार्मिकास्तेषु त्वं पिता यथा पुत्रस्य देहद्वये वत्सलः गुरुर्यथा शिष्यस्य जीवात्मनि वत्सलः अधीशस्तत्तद्दुःखनाशसुखप्रदानसमर्थः ये तु खलास्तेषु त्वं दुरत्ययो दुर्वारः कालः स इव उपात्तदण्डः दण्डप्रदानेनैव तच्छोधक इत्यर्थः । अत उभयेषां हितायैव इच्छातनुभिः स्वेच्छामयावतारैः समीहसे चेष्टसे तव समीहा लीलैव पूतनावधादिका दुष्टसंहारिका शिष्टपालिका चेत्यर्थः । ये त्वधिकृतमन्का ब्रह्माद्यास्त्वद्दत्तपरिकल्पितैश्वर्येणैव मत्ता भवन्ति तेषामपि मदनिरासिनी त्वल्लीलेवेत्याह—मानमिति ॥ ६ ॥

तेषु जगदीशमानिष्वपि अहमेवाऽधमत्वेन इत्याह—मद्विधाश्च ते अज्ञानाद्वयुपगानःपावहगत्यश्च इति भावः । काले भयकालेऽपि यथा अधुनैवातिवृष्टौ अभयं भयमगणयन्तं वीक्ष्य यद्वा, न जाने प्रभुरयं मां कीदृशं दण्डयिष्यतीति स्वस्य भयं भयहेतुं वीक्ष्य तन्मदं जगदीश्वरत्वमदं त्यक्त्वा आर्याणां त्वद्भक्तानां मार्गं भजन्ति गतस्मया नष्टगर्वा अतस्तवेयं गोवर्द्धनधारणलीलैव खलानामस्माकमनुशासनं दण्डः ॥ ७ ॥

ननु, गोवर्द्धनधारणेन व्रजस्य रक्षामेवाऽकरवं न तु तव दण्डं तव दण्डं तु साम्प्रतं वैवस्वतमाहूय समीचीनतयैव कारयिष्यामीत्याशङ्क्य महाभयविह्वल आह—संप्रसिद्धः पिता च गुरुश्चातः कृपालुत्वात् क्षमासिन्धुत्वाच्च ऐश्वर्य्यमदसिन्धौ प्लुतस्य निमग्नस्य अत एव तव प्रभावम् अविदुषोऽजानतः ममापराधं क्षन्तुमर्हसि यतो मूढचेतसः पशुस्वभावस्य पशुर्हि स्वामिना दत्तदण्डप्रहारोऽपि क्षणान्तरे तमेवापराधं करोत्यतोऽहं दण्डप्रदानेन न शोधनमर्हामि किन्तु कृपया तथा मां शोधय यथा मे मूढचेतस्त्वं नश्यतीत्याह—मैवमिति । एतच्च नातिशुद्धेन चेतसा प्रार्थितमिति ज्ञेयम् । त्वां वीक्ष्य काले भयामत्युक्तेरक्षमतयैव तेऽनुगतः अतः पुनः पारिजातहरणादावपि विस्मरिष्यत इति श्रीवैष्णवतोषिणी ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदि संसार एव तव न तर्हि तद्धेतवः संसारप्रापकाः तत्कृताः संसारकृताः लोभ आदिर्येषां ते रागद्वेषादयः कुतस्तव स्युः तथापि संसारतत्कृतलोभादिरहितोऽपि धर्मस्य गुप्त्यै खलानामस्मदादीनां निग्रहाय दण्डं बिभर्षि ॥ ५ ॥

तच्च योग्यमेवेत्याह—पितेति द्वाभ्याम् । सर्वजगतां त्वं पिता जन्मदः गुरुर्ज्ञानप्रदः दुरत्ययो निरतिशयोऽधीशः अधिष्ठाता अतः काले उचितकाले उपात्तदण्डः स्वेच्छातनुभिः नानालीलावतारैः जगदीशमानिनां मानं गर्वं विधुन्वन् अपनयन् हितायैव ईहसे चेष्टसे इत्यन्वयः ॥ ६ ॥

मद्विधाश्च ते अज्ञाश्च मद्विधाज्ञाः जगत ईशा वयमिति मानवन्तः काले भयकालेऽपि त्वां यथेहैवातिवर्षनिपातेऽभयं वीक्ष्य आशु तन्मदं जगदीशा वयमिति मदं हित्वा अपस्मया गतगर्वाः सन्तः आर्याणां शिष्टानां मार्गं त्वज्ज्ञानभक्तिमार्गं प्रभजन्ति अनुवर्तन्ते अतस्तव इहापि निश्चितं खलानामनुशासनं दण्ड इत्यर्थः । गोवर्द्धनोद्धरणाद्यैव मदनुशासनं त्वया कृतमिति भावः ॥ ७ ॥

तदेवं भगवतो धर्मरक्षणार्थैव निग्रहादिकर्तृत्वमुक्त्वाथ क्षमापयन् एवमसती मतिः पुनर्मे माभूदिति प्रार्थयते स त्वमिति ॥ ८ ॥

---

### भाषा टीका ।

हे ईश ! तौ फिर और जो शरीर ग्रहण के हेतु कर्मकृत मोहादिक देहात्मभ्रम वारे सांसारिक जनन के चिन्ह हैं ते आपमें कहां ते होय सकैं ? तथापि आप धर्म की रक्षा के निमित्त और खलन के निग्रह करिवे कूं उनको दंड देवो हौ ॥ ५ ॥

तवावतारोऽयमधोक्षजेह स्वयम्भराणामुरुभारजन्मनाम् ।
चमूपतीनामभवाय देव ! भवाय युष्मच्चरणाऽनुवर्तिनाम् ॥ ९ ॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने ।
वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥ १० ॥
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ११ ॥
मयेदं भगवन् ! गोष्ठनाशायासारवायुभिः ।
चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ १२ ॥

भाषा टीका ।

हे प्रभो ! आप या जगत् के पिता हौ गुरू हौ और स्वामी हौ, तथा दंड ग्रहण करिवे वारे काल भी आपही हौ, और जे अपन कूं ईश मानन वारे हैं, तिन के हित के अर्थ अपनी इच्छा सों अनेक प्रकार के देह धारण करिकें उनके मान भंग करने की चेष्टा आप करौ हौ ॥ ६ ॥

जो मेरे सदृश अपन कूं ईश्वर मानन वारे हैं ते उचित काल में भय देन वारे दंडधारी एसे आपकों देखिकें और तत्काल अपने मद कूं छोडिकें गर्व कों दूर करिकें सज्जनन के मार्ग को सेवन करें हैं, तासों आपकी जो चेष्टा है सोई खलन कों दंड रूप है ॥ ७ ॥

हे प्रभो ! ऐश्वर्य के मद में डूबि रह्यो, और आपके प्रभाव कों नहीं जानिवे वारो मोहित चित्त वारो एसे मो अपराधी पै क्षमा करिवे योग्य हौ, हे ईश ! जासों फिर मेरी एसी खोटी बुद्धि न होवै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महानयमपराधः कथं क्षन्तव्य इति चेदत आह—तवेति । स्वयम्भराणां पुनश्चोरुभारजन्मनां बहूनां भाराणां जन्म येभ्यस्तेषामभवाय नाशाय युष्मच्चरणसेविनां तु भवाय अतो मम त्वत्सेवकत्वात्त्वत्परायणोऽपि क्षन्तव्यमिति भावः ॥ ९ ॥

क्षमापयन्नमस्करोति—नम इति । तुभ्यं भगवते कृष्णाय नमः पुरुषाय सर्वान्तर्यामिणे महात्मनेऽन्तःस्थत्वेऽप्यपरिच्छिन्नाय सात्वतां यादवानां पतये ॥ १० ॥

तर्हि किमहं यादवः ? न स्वच्छन्दोपात्तदेहाय स्वेषां भक्तानां छन्देनेच्छया स्वीकृतदेहाय तत्रापि विशुद्धं ज्ञानमेव मूर्त्तिर्यस्य तस्मै मायया सर्वस्मै सर्वरूपाय कुतः सर्वस्य बीजाय कारणाय अत एव सर्वभूतात्मने नम इति ॥ ११ ॥

कृतागस इत्यनेनोक्तमपराधं निवेदयति—मयेति । आसारवायुभिर्गोष्ठनाशाय मयेदमकार्यं चेष्टितं कृतम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधोक्षज ! हे इन्द्रियज्ञानागोचरेति परमाश्चर्यतोक्ता तथापि, इह पृथ्वीतले तवावतारः प्राकट्यं भवाय मङ्गलाय देव ! हे पूज्य इति स्वस्य सेवकतां साधयति—युष्मदिति । बहुत्वेन तदीयान् श्रीव्रजजनादीनपि सङ्गृह्णाति अन्यत्तैः । यद्वा, स्वस्य तत्प्रभावविज्ञतामेवाभिव्यञ्जयन् मूढचेतस्त्वमेव च दर्शयन् सानुतापमाह—तवेति । अस्माकं प्रार्थनयाऽस्माकमेव हितार्थं त्वमवतीर्णोऽसीत्यस्माभिर्ज्ञायत एव तथाप्येतादृशोऽपराधः कृतः अहो बत मूढचेतस्त्वम् अतः क्षन्तुमर्हस्येवेति भावः ॥ ९ ॥

भगवते साक्षात् परमेश्वराय तत्रापि कृष्णाय अशेषैश्वर्यप्रकटनेन सर्वचित्ताकर्षकाय तुभ्यं नमः एवं बहिरैश्वर्यमुक्त्वाऽन्तरमप्याह—पुरुषायेति । लीलया तु सात्वतां पतये अन्यत्तैः । यद्वा, सर्वावतारेष्वप्येवमेव त्वं यद्यपि करोषि तथाप्यत्र सर्वतो महाविशेष इत्याह—नम इति । तुभ्यं कृष्णाय सर्वचित्ताकर्षकाय नमः कृष्णत्वमेव सूचयति, भगवते सर्वैश्वर्यपरिपूर्णाय कुतः पुरुषाय निखिलपुरुषार्थप्रदायकायेत्यर्थः । अत एव महात्मने अपरिच्छिन्नमाहात्म्यायेत्यर्थः । कृष्णत्वमेव स्पष्टयति वसुदेवसुतायेति अतः सात्वतां यादवानां सर्वेषां परिपालकाय ॥ १० ॥

अतस्त्वमेव सर्वमित्याह—स्वच्छन्देति स्वैर्भक्तैः कर्तृभिश्छन्देनेच्छया करणभूतया उपसमीपे आप्ता आकृष्टा देहाः श्रीमत्स्यकूर्मादयोऽपि विग्रहा येन तस्मै तेषां देहादीनां स्वरूपज्ञानार्थं पुनराह, विशुद्धज्ञानमूर्तये विशुद्धा मायातीता स्वप्रकाशतया ज्ञानरूपाश्च मूर्तयो देहा यस्य तस्मा इति, अन्यत्तैः । तत्र सर्वस्मै जगद्रूपाय सर्वस्य बीजाय कारणाय महापुरुषरूपाय सर्वभूतात्मने तदन्तर्यामिणे इति । यद्वा, स्वच्छन्दं यथा स्यात् तथा उपात्ता अन्तर्यामित्वेन स्वीकृता देहाः समष्टिव्यष्टिरूपा येन स्वयं तु विशुद्धज्ञानमूर्तय इति पूर्ववत् ॥ ११ ॥

किञ्च, महापराधिष्वपि परमानुग्रहोऽयं सर्वतो महाविशेष इत्याह—मयेति सार्द्धेन । मया स्वयमेव इदं साक्षादिदानीमेवार्थः । गोष्ठस्य नाशायेति । परमाऽकृत्यमुक्तं यतः मानिना अत एव तीव्रमन्युना भगवन्, हे सर्वज्ञ ! तन्मम दुष्टताकृत्यं त्वया ज्ञातमेव किं मया मुखेन विस्तार्यमिति भावः । यद्वा,

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ॥

हे भगवन्निति सर्वैश्वर्यपरिपूर्णो त्वयि साक्षाद्वर्तमानेऽपि त्वद्दृष्टिमाशायेत्यपराधाधिक्यं सूचितम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रार्थनां कृत्वा भगवतो भूभारावतरणाय कृतावतारस्य लोकहितार्थैकप्रवृत्तत्वमेवोपपादयति—तवेति । हे अधोक्षज ! भुवः उरुभारस्य जन्म येभ्यस्तेषां भुवो भराणां भूभृतां चमूपतीनामभवाय संसाराभावाय त्वदङ्घ्रिः मुक्तिप्रदानायेति भावः । हे देव ! युष्मच्चरणानुवर्तिनां भवाय विभवाय उत्तरोत्तरमनुवृद्ध्यभिवृद्धये चेह लोके तवावतारः ॥ ९ ॥

अन्तुमर्हसीत्युक्तं तत्र "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इत्युक्तरीत्याऽञ्जलिबन्धनमस्कृतिपूर्वकमच्छरणागतिमन्तरेण नान्योऽस्ति क्षमाहेतुरित्यभिप्रयन् शरण्यगुणानाविष्कुर्वन्नञ्जलिबन्धेन नमस्कुर्वन् स्वापराधमावेदयन् कार्पण्यं च प्रकाशयन् शरणं व्रजति—नम इति चतुर्भिः । भगवन् इत्यादिभिः शरण्यगुणाविष्कारः पूर्णषाड्गुण्यमूर्तये महात्मने शरणागतशङ्कमाजमवलोक्यापराधविस्मरणेन केवलमनुजिघृक्षैकप्रवणचित्ताय वासुदेवाय वसुदेवपुत्रायानेन सौलभ्यं सौशील्यं चाभिप्रेतं कृष्णायेत्यनेन केवलं क्षेमकरत्वं सात्वतां भक्तानां पतये इत्यनेन कृतागसामपि भक्तानां मादृशां पुनः शिक्षया पालकायेति पुरुषाय महात्मने इति पदद्वयेन "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्युक्तसत्त्वप्रवर्तकत्वम् ॥ १० ॥

स्वच्छन्देन स्वेच्छयैव न तु कर्मणोपात्तः परिगृहीतो देहो यस्य तस्मा इत्यनेन कर्मोपात्तदेहानां ब्रह्मादीनां प्रपित्सुतुल्यत्वं भगवत एवाश्रितकार्यावहत्वमर्थं च विशुद्धं नित्यं सङ्कोचविकासादिविकाररहितं ज्ञानं मूर्तिराकारः प्रकार इति यावत् यस्य तस्मै अनेन "ब्रह्मविदाप्नोति परम्" इति प्रकृत्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तज्ञानशब्दार्थप्रत्यभिज्ञानात्परत्वमुक्तं भवति तदेव प्रपञ्चयति—सर्वस्मै सर्वपदार्थान्तरात्मने अनन्यार्थं च मृदन्यो घट इतिवत्स्वरूपामेकानिबन्धनमपि तु कारणत्वान्तरात्मत्वनिबन्धनमित्यभिप्रायेणोक्तं सर्वबीजाय सर्वकारणाय सर्वभूतानामात्मने इति ॥ ११ ॥

स्वापराधमावेदयति—मयेति । यज्ञे विहते सति तन्निमित्तलीलामन्युर्यस्य तेन देहात्माभिमानिना मया हे भगवन् ! पूर्णषाड्गुण्येन त्वयाऽनुगृहीतस्य गोष्ठस्य नाशाय आसारवायुभिरिदमकृत्यं चेष्टितं कृतम् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सतो भवाय पुण्यवर्धनाय अतो देवदत्तवल्लभं भजतो हरेरवतारः कथं भवाय इत्याहतीव "भावेशो वसुदेवाद्वै देहादानं हरेः स्मृतम्" इत्यादिपाद्मवचनेन परिहर्तव्यम् ॥ ९।१० ॥

न केवलं ग्रन्थान्तरसिद्धमिदम् अत्रापीत्याशयेनाह—स्वच्छन्देनेति । स्वच्छन्देन स्वेच्छया सर्वस्मै सर्वव्यापिने सर्वबीजाय सर्वस्य मूलकारणाय ॥ ११ ॥

आसारसहितवायुभिः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वां वीक्ष्य काले भयमित्यगत्यैवानुगतेश्च स्वेषां भक्तानां छन्देनाभिलाषेण उपात्तः तत्समीपे गृहीत आनीतः प्रकटीकृतो देहो येन तस्मै ॥ ११—१७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, एतदर्थमेव तवावतारः दुष्टा निराकर्तव्याः अशक्यनिराकरणदोषाः स्वरूपतः अन्ये तु दोषसम्बन्धात् अतो वयं निवार्यदोषा इति अस्मद्दोषा एव निराकर्तव्याः न तु वयमित्यभिप्रायेणाह—तवावतारोऽयमिति । विशेषेण अयमवतारः भुवो भाररूपाणां चमूपतीनामभावाय युष्मच्चरणानुवर्तिनां भवाय च अन्य त्ववतारा एकमेव कार्यं साधयन्ति भारनिराकरणं वा सद्रक्षां वा कालभेदेन यद्येक एवोभयात्मकः क्वाप्यद्य द्वयमपि कर्तव्यम् इदानीमहं प्रपन्न इति उद्धवोऽपि कर्तव्यः निग्रहस्तु कृत एव अन्यथोभयार्थमवतारो न भवेत् उभयार्थत्वे हेतुः, अधोक्षजेति । अधः अक्षजं ज्ञानं यस्मात् एतादृशो यः प्रकटो जातः स, उभयसम्पादनार्थं एव एकैकन्तु पूर्वमपि कृतम् इति तत्रापीह गोकुले भुवः उरुभारार्थमेव जन्म येषां जन्मकारणेषु भुवो दुःखार्थं जन्म स्वस्य तु नाशार्थं स्वयमेव भारभूता अधिकं च भारं जनयन्ति लोकारूढेष्वेतद्द्वयं पृथक् प्रसिद्धं उरुभारस्य वा जन्म येषु तेन दोषत्रयमुपपादितं भाररूपाः उच्छृङ्खलाः भारजनका इति तादृशा अपि सेनापतयः अनन्यमात्रैणैव तत्राश इति अभवायेत्युक्तं यथान्धकारस्य सूर्योदये, देवेति सम्बोधनमतः परं पूजार्थं युष्मच्चरणमेवानुवर्तितुं शीलं येषां तेषामुद्भवाय मुक्तये वा संसाराभावाय वा संसाराय वा भवानेव तथा भवतीति ॥ ९ ॥

एवं प्रार्थनामुक्त्वा क्षमापणार्थमेव नमस्यति—नम इति । भगवदीयत्वाय वा भक्तिमार्गं प्रकटीकुर्वन् सामान्यतः दशविधलीलायुक्तमाह—नमो भगवते इति । आवश्यादपञ्चव्यावृत्त्यर्थं तुभ्यमिति योऽयं दृश्यते स एव भवानिति अनेनैव षड्विधा लीला निरूपिता "स्थानादिनिरोधान्ताः पुरुषाय महात्मने" इति कार्यकारणरूपो यः पुरुषः प्रथमः महान्महत्तत्त्वम् अन्तर्बहिर्वा सर्वसाधकाय वासुदेवायेति मोक्षदाता कृष्णायेति फलं सदानन्दरूपत्वादाश्रयश्च । किञ्च, न केवलं दशविधामेव लीलां करोति अवतीर्णस्तु अधिकमपि करोतीत्याह—सात्वतां पतये नम इति । यादवानामयं स्वामी दशविधलीलावत् भक्तिरप्येकैव स्वतन्त्रेति पृथङ्नमस्कारः ॥ १० ॥

एवं परमार्थतो नमस्कारं कृत्वा मोहकलीलासहितमपि भगवन्तं लौकिकत्वार्थं नमस्यति, स्वच्छन्देति । अभक्तास्तेषां कर्मेच्छा तदर्थं तेषामिच्छापूर्त्यर्थम् उपात्तो देहो येन ते हि यथा

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भावयन्ति तथा रूपं करोति नटवदेवं रूपं तु विशेषेण शुद्धं चिद्रूपमेव. तदाह—विशुद्धज्ञानमूर्त्तय इति । ननु, विशुद्धस्य अभिलषितरूपत्वं कथं तत्राह—सर्वस्मा इति । सर्वरूप एव जातः तत्राभिलषितरूपभवने कः प्रयास इत्यर्थः किञ्च, सर्वबीजाय सर्वेषां कारणभूताय अतो ऽनन्तप्रकारेण भवन्ति अनेन सद्रूपता आनन्दरूपताऽप्युक्ता तत्सर्वमानन्दोबीजमिति सर्वभूतानामात्मने चिद्रूपाय नमः अतः सच्चिदानन्दरूपाय भक्तेच्छापूरकाय हि शुद्धज्ञानस्वरूपाय फलसाधनरूपिणे नम इत्युक्तं भवति ॥ ११ ॥

स्वापराधं प्रकटीकरोति—मयेदमिति । को वेद भगवाञ्च विचारयतीति अन्यथा कालान्तरे विशेषपर्यालोचनायाम् अपराधं भावयेत् अतः कथयति, इदं वृष्ट्यादिरूपं गोष्ठनाशाय आसार वायुभिः मया चेष्टितं यज्ञे विहत इति निमित्तं वस्तुतस्तु अस्मिन्नेव यज्ञे मया भुक्तं न पूर्वं कदापि भगवता भुक्तमिति हस्तेन भुक्तमिति अतः यज्ञः अविहत एव तथापि अभिमानात् अन्यथाङ्गीकृतं तदाह, मानिनेति । ननु, तृप्तिः कथं न प्रतिबन्धिका जाता ? तत्राह—तीव्रमन्युनेति । शीघ्रमेव मन्युरुत्पन्नः अतो जातापि तृप्तिर्विस्मृतेति अन्यथा गोष्ठनाशे कश्चित् किं प्रवर्त्तेत गवामुपजीव्यत्वात् सुतरां ममोपजीव्याः भगवन्निति सम्बोधनं स्वस्य दासत्वख्यापकम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो मे मूढचेतस्त्वं यदस्माकं प्रार्थनयाऽस्माकमेव हितार्थमवतीर्णोऽसीति पश्यन्नप्यन्धोऽहमभवं सम्प्रति लब्धदण्डः प्राप्तचक्षुरेवं तत्त्वं ते जानामीत्याह—तवेति । स्वयमेव भराणां भाररूपाणां पुनश्च उरुभारजन्मनां बहूनां भाराणां जन्म येभ्यस्तेषां चमूपतीनाम् अभवाय नाशाय युष्मच्चरणसेविनां तु भवाय मङ्गलाय अहन्तु उभयेषां मध्ये न कोऽपीति मम नाभवो नापि भव इति मध्युदासीन एव त्वं वर्त्तसे इति धिङ् मामिति भावः ॥ ९ ॥

तस्मात् युष्मच्चरणानुवर्त्तित्वं ममाप्यस्त्विति प्रणमञ्छरणं प्राप्तेनमस्तुभ्यमिति द्वाभ्याम् । "परावरेशो महदंशयुक्तः" इत्युद्धवोक्तेः । सर्वांशसाहित्येनैवावतीर्णस्य तस्य प्रथममंशान् प्रणमति—भगवते महावैकुण्ठनाथाय पुरुषाय महत्स्रष्ट्रे महात्मने समष्टयन्तर्यामिणे अंशान् प्रणम्य साक्षादंशिनं प्रणमति—वासुदेवायेति, पितृनामोल्लेखेन कृष्णायेति तन्नामोल्लेखेन सात्वतां पतय इति पार्षदनामोल्लेखेन ॥ १० ॥

अनेकविधप्रेमविषयत्वात् स्वभक्तैश्छन्देन प्रतिस्वेच्छया दास्येन सख्येन वात्सल्येन रमणेन च सुखप्रदानार्थम उपात्तो गृहीतो देहो यस्येति तस्मै देहस्याप्राकृतत्वात् विशुद्धं मायातीतं ज्ञानमेव मूर्त्तिर्यस्य तस्मै मायादिशक्तिमत्त्वात् सर्वस्मै अत एव सर्वस्य बीजाय कारणाय अत एव सर्वभूतात्मने ॥ ११ ॥

भोः शक्र ! त्वं मद्भक्त इत्यनया स्तुत्यैव ज्ञायसे किन्तु विनैव स्वदाक्षां क्रुद्धा मेघाः तद्व्रजमधिकं वर्षयन्त्विदम तदिमे त्वया दण्डनीया इति पवित्रमत्सैन्यमाक्रुश्य, हन्त हन्ताहमत्र अन्तर्यामिणि कपटं न घटत इति विमृश्य स्वचेष्टितं यथार्थमेवाह—मयेति । नन्वेतन्मद्भक्ते त्वयि कथं सम्भवेत्तत्राह—विहते यज्ञे इति । ननु, त्वत्प्रभुणा मयैव विहतेऽपि दासस्य तवैतावदकृत्यं न प्रत्येमि तत्राह—मानिना ऐश्वर्यगर्वस्य किमशक्यमिति भावः । ननु, दैवादुत्थिता अपि गर्वादयो भावा मद्भक्तैर्विवेकेनैव तिरोधाप्यन्ते इति तत्राह—तीव्रमन्युना तीव्रः क्रोधो हि विवेकमपि बलाद्ग्रसतीति भावः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निग्रहविषयाः असुराः अहं तु अनुग्रहविषयेषु तव चरणानुवर्त्तिषु सुरेषु त्वया स्थापितोऽतोऽनुग्रहं कुर्वित्याशयेनाह, तवेति । स्वयम्भुवो भराणां भारभूतानां पुनश्चोरुभाराणां जन्म येभ्यस्तेषां राजन्यव्याजेन वर्त्तमानानामसुराणामभवायाऽसमृद्ध्यै ॥ ९ ॥

अथ नमस्कुर्वन् स्वापराधं वदन् भगवन्तं शरणं व्रजति, नम इति चतुर्भिः । भगवते स्वाभाविकषड्गुणयुक्ताय पुरुषाय सर्वान्तर्यामिणे महात्मने भूम्ने वासुदेवाय सर्वनिवासाय सात्वतां भागवतानां पतये कृष्णाय नमः ॥ १० ॥

स्वच्छन्देन स्वेच्छयैवोपात्तदेहाय परिग्रहीतदेहाय विशुद्धज्ञानवत् जन्ममरणादिसर्वदोषवर्जितस्वरूपवत् मूर्त्तिरप्राकृतदेहो यस्य तस्मै "यदात्मको भगवांस्तदात्मिका व्यक्तिः" इति श्रुतेः—

"यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः ।
स सर्वस्माद्बहिः कार्यः श्रौतस्मार्त्तविधानतः ॥
मुखं तस्यावलोक्यापि सचेलं स्नानमाचरेत्" । इति

स्मृतेश्च " अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य नतु भूतमयस्य कोपि " इति ब्रह्मवचनाच्च. चेतनाचेतनशक्तीनां महदादितृणान्तस्य विश्वस्य स्वशक्तिमयस्य च पुरुषात्केशलोमादीनामिव पृथिव्याः औषधीनामिव पृथक् स्थितिप्रवृत्त्याद्यभावात् अन्यस्याकृष्णात्मकस्य तत्सजातीयस्या ऽभावात्सर्वस्मै कृष्णाय नमः " सर्वं खल्विदं ब्रह्म " इति श्रुतेः " तदनन्यत्वमारम्भणशब्दादिभ्यः " (२।१।१५) इतिन्यायाच्च नित्यस्वरूपयोरणुविभुपरिमाणयोः चेतनाचेतनपदार्थानां च स्वरूपैक्यसम्भवाद्भेदाऽभेदः सम्बन्धोऽत्र विदुषामभिमतः तथाऽऽह भगवान् सूत्रकारः "उभयव्यपदेशात्त्वहिकुण्डलवत्" (३।२।२६) इति एतदेवोपपादयितुमाह, सर्वबीजायेति । सर्वभूतात्मने इति च कलेवरलोमादीनां कार्याणां पुरुषः कारणं तस्मात्स्वरूपतो हि कलेवरादयो भिन्नाः अप्यभिन्ना एव यथा पृथिव्याः ओषधयः यथा च अहेः कुण्डलानि तत्तुल्यायेत्यर्थः ॥ ११ ॥

आसारवायुः गोष्ठस्य नाशाय मानिना लोकेशमानिना तीव्रः स्वात्मपरमात्मविवेकावरको मन्युर्यस्य तेन मयेदं चेष्टितं कृतमित्यर्थः ॥ १२ ॥

---

भाषा टीका ।

हे अधोक्षज ! या संसार में आप को जो अवतार है, सो अपने भरण पोषण करन वारे और पृथिवी पे भार

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः ।
ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १३ ॥

श्रीशुक उवाच ।

एवं सङ्कीर्तितः कृष्णो मघोना भगवानमुम् ।
मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥ १४ ॥

श्रीभगवानुवाच ।

मया ते ऽकारि मघवन्! मखभङ्गोऽनुगृह्णता ।
मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥ १५ ॥
मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति ।
तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥ १६ ॥

भाषाटीका

रूप जन्म जिनको ऐसे सेनान के पति जे मुख्य दुष्टराजा हैं तिनके नाश करिवे कूं हैं। हे देव ! और आप के चरणान की सेवा करन वारेन के कल्याण के तांई हैं ॥ ९ ॥

षट् ऐश्वर्य संपन्न हृदय गुहा में सोवन वारे महात्मा-जो आप तिनकूं नमस्कार होय तथा वसुदेव के पुत्र और यादवन के अथवा भक्तन के पति जो श्रीकृष्ण आप हो तिनकूं नमस्कार हो ॥ १० ॥

अपनी इच्छासों देह धारण करन वारे विशुद्ध ज्ञान मूर्ति सर्व स्वरूप और सवन के बीज रूप तथा सर्व भूतात्मा जो आप तिनकूं नमः ॥ ११ ॥

हे भगवन् ! जब मेरो यज्ञ रुकि गयो तब अति मानी और तीव्र क्रोधी ऐसे मैंने वर्षा और पवन चलाय कें या व्रज के नाश करिवे की चेष्टा करी रही सो आप क्षमा करिवे कूं योग्य हौ ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथापि मो ईश ! त्वयाऽनुगृहीतोऽस्मि, अनुग्रहं दर्शयति, ध्वस्तस्तम्भ इति वृथोद्यम इति च ॥ १३ ॥ १४ ॥

इन्द्रेण स्वाभिप्राये निवेदिते भगवानपि तथैवाह—मयेति इन्द्रश्रिया देवराज्येन ॥ १५ ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ईश हे सर्वनियन्तः ! यद्यपि सद्य एव मयि दण्डं कर्तुं समर्थस्त्वं तथापि त्वयाऽनुगृहीतोऽस्मीत्यर्थः । नच वाह्यानुग्रह इत्याह—ध्वस्तस्तम्भः नष्टमदोऽस्मि यतो वृथोद्यमः ध्वंसितस्ता-स्तम्भूतयार्थः । यतस्त्वयैव स्तम्भो नाशित उद्यमश्च हत इत्यर्थः ।

अतो गुरुं त्वामेव महापराध्यप्यहं शरणङ्गतः तत्रैवान्यदपि हेतुद्वयम् ईश्वरं नियन्तारम् आत्मानं रश्मीनां सूर्यमिव सर्वेषां मूलस्वरूपं त्रिधाप्यनन्यगतिकत्वादिति भावः ॥ १३ ॥

सङ्कीर्तितः स्तुतः भगवानिति परमप्रभुत्वं बोधयन् अपराधिन्यपि तादृशे क्षुद्रेऽनभिनिवेशं बोधयति, अत एव मेघेति मेघगर्जितं लक्षयति अनेन तस्य महासत्वतां प्रहसन्निति महाशयतां च व्यनक्ति अमुमित्येकवचननिर्दिष्टाऽदःशब्देन लौकिकरीत्या मघोनस्तु क्षुद्रतामिति ॥ १४ ॥

मयेत्यमित्यादितद्वाक्यानुरूपं प्रभुत्वोचितमेवाह—अनुगृह्णतैव न तु क्रुध्यतेत्यर्थः तत्र कोपविषयत्वेऽपि त्वद्विधस्यायोग्यत्वादिति भावः । नित्यं मम अनु वारम्वारं या स्मृतिस्तदर्थम् अन्यथा विपथगामी स्याः इति हि यतः ऐश्वर्येण प्रभुत्वेन श्रिया धनादिसम्पदा च मदस्तेनान्धः गताशेषज्ञानस्सन्नित्यर्थः । दण्डपाणिं मद्गोपासकान् प्रति गोपवेषोचितक्षुद्रयष्टिपाणित्वेन भासमानतयैव त्वद्विधान् प्रति तु व्यञ्जितदण्डपाणित्वमपि न पश्यति नावगच्छति इति गोपलीलायां निजप्रभुत्वविशेषमुक्त्वा तदन्तरङ्गपरिकरेषु श्रीगोपराजादिष्वपि भक्तिरनुशिष्टा यतो न पश्यति अत एव यस्यानुग्रहमिच्छामि यमनुग्रहीतुमिच्छामीत्यर्थः । तं सम्पद्भ्यो भ्रंशयामि तस्यैश्वर्यहेतुकधनादिसम्पत्तीर्हरामीत्यर्थः । भवतस्तु तत्रासहिष्णुतां दृष्ट्वा न तादृशमप्यकरवं किन्तु यत्किञ्चिन्मखभङ्गमेवेति भावः ॥ १५—१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथाप्यहं हे ईश ! त्वया ध्वस्तः प्रविनष्टो यस्य सः मदापनयनद्वाराऽनुगृहीत एवास्मि सम्प्रति हतः उद्यमः अपचिकीर्षात्मको यस्य स अनेनाधुनाऽपराधचिकीर्षाभिसन्धिराहित्यमावेदितमनेनैव कार्पण्यं च प्रकाशितम् एवम्भूतोऽहमधुना त्वां शरणं गतः शरणागतावपि त्वमेव प्रयोजककर्तेत्यभिप्रायेण विशिनष्टि—ईश्वरमिति शरणागतये मां नियमयन्तमित्यर्थः । मायार्थसान्निध्याभावः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शङ्काप्रयुक्तशरणागतिवैयर्थ्याशङ्कापरिहारार्थं विशिनष्टि—गुरुमिति। देहात्माभिमानक्रोधादिदुर्गुणापनयनद्वारा हितप्रवर्त्तकत्वेनाचार्यकृत्यमपि प्राप्तमित्यर्थः। ननु, न तदेवं शरणागतोऽस्मीति वचो निरर्थकमिति शङ्कां निराचिकीर्षुर्विशिनष्टि—आत्मानमिति। अन्तरात्मनः तवाविदितं किमस्तीति भावः॥ १३॥

इत्थमिति। इत्थं मघोनेन्द्रेण सङ्कीर्त्तितः कृष्णोऽमुं मघवानमुवाच॥ १४॥

तदेवाह—मयेति त्रिभिः। हे मघवन्! अनुजिघृक्षता मया त्वद्यज्ञभङ्गः कृतः, कोऽसावनुग्रहः? इत्यत्र तं दर्शयति इन्द्रश्रियेन्द्राधिपत्येन इन्द्रेति सम्बोधनं वा नितरां मत्तस्य तव नित्यं मद्विषयकानुस्मृतये मखभङ्गोऽकारीत्यन्वयः। मदनुस्मृत्यापादकमेवानुग्रहमिति भावः॥ १५॥

मत्तस्य मदनुस्मृतय इत्यनेन मदन्धस्य स्वानुस्मृतिप्रतिबन्धकत्वमत एव तदपनयनस्य हितत्वं च सूचितम्। तदेव व्यनक्ति, मामिति। ऐश्वर्यश्रीमदान्धाधिपत्यसम्पद्भ्रामन्धो विवेकशून्यः जनः दण्डधरं मां न पश्यत्यतो "यस्यानुग्रहमिच्छामि" तं सम्पद्भ्यो भ्रंशयामि तस्य तद्रूपदमिकार्यं निवर्त्तयामीत्यर्थः॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ध्वस्तस्तम्भः निरस्तस्थूणास्वभावः॥ १३॥

मघोना इन्द्रेण॥ १४॥

अकारि कृतः हे मघवन्, इन्द्र!॥ १५॥

"पण व्यवहारे" इति धातोः ज्ञानादिव्यवहारसाधनत्वात् पाणिः हस्तः दण्डपाणिं यमं माम्। भ्रंशयामि भ्रष्टं करोमि चशब्द एवार्थे अनुग्रहमेव नान्यच्छित्त्वादिकम् अनुग्रहानन्तरभाविनश्वरसम्पदश्चेति समुच्चये वा ऐश्वर्यमीश्वरत्वं गवादिसमृद्धिः श्रीरादिपामुखकृतेन मदेनान्धः ज्ञानचक्षुरहितः॥ १६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इदानीं सिद्धत्वस्थापकं वा तथापि स्वामिना अनुग्रहः कृत एवेत्याह—त्वयेति। ईशत्वादनुग्रहकरणं न ह्युपजीवकेषु कुद्धेषु उपजीव्योऽपि कुप्यति तथा सति तेषां नाश एव स्यात् अत एवानुगृहीतोऽस्मि गोवर्द्धनधारणेन मान एवाहतो न त्वहं हत इति मानहतिमेवाह—ध्वस्तस्तम्भ इति। स्तम्भो गर्वोऽनम्रता ध्वस्तो यस्य तत्र हेतुः हतोद्यम इति तथापि न मम लज्जा यतस्त्वमीश्वरो गुरुरात्मा च लोकतो वेदतः अनुभवतश्च स्वच्छित्त्यां नापमानं भवतीति अतस्त्वां शरणं गतः यथोचितं विधेयमिति भावः॥ १३॥

तदा प्रसन्नो भगवान् तस्य मनःपीडां दूरीकृतवानित्याह, एवमिति चतुर्भिः।

उपक्रमः कृतं चैव हेतुश्चैव तथा कृतौ।
प्रसादश्चेति भूत्याय भगवान् स्वयमुक्तवान्॥

एवं पूर्वोक्तप्रकारेण सङ्कीर्त्तितः कृष्णः फलात्मा मघोना इन्द्रेण पूर्णः सर्वतो भगवान् मेघगम्भीरया वाचा तस्य तापं शमयन् प्रहसन् मोहयन् इदं वक्ष्यमाणम् (म अब्रवीत्) मुवाच॥ १४॥

अत एवाग्रेऽपि तस्य मोहः स्वकृतमाह—मयेति। काकतालीयन्यायवृत्त्यर्थं स्वकृतं ज्ञापयति, हे मघवन्! अनुगृह्णता मया मखभङ्गः अकारि अनुग्रहमेवाह—मदनुस्मृतये इति। ममानुस्मृतिरेवानुग्रहः यागभङ्गाभावे अनुस्मृतिर्न स्यादिति हेतुमाह—नित्यमिन्द्रश्रिया मत्तस्येति॥ १५॥

नाप्येतत्त्वया प्रार्थनीयं ममवायं सहजो धर्म इत्याह—मामैश्वर्येति। ऐश्वर्ये श्रीश्च अन्यतराभावेन मदः पुष्टो भवति इतरसापेक्षत्वात् न हि एकाकिविवेकवः अन्धो भवति अतः ऐश्वर्येण श्रिया च यो मदः तेनान्धीकृतः दण्डपाणिं घातकमपि मां न पश्यति अतस्तं सम्पद्भ्यः भ्रंशयामि शिक्षार्थमवश्यं मारणीयः तदेव मारणं शिक्षा भवति यदि जानीयात् अतो ज्ञानार्थं सम्पद्भ्यो भ्रंशयामि, अन्यथा अनुग्रहो न भवेत् इयं साधारणी व्यवस्था विशेषमप्याह—यस्य चेच्छाम्यनुग्रहमिति। यस्य च अनुग्रहमिच्छामि अयमनुग्रहं प्राप्नोत्विति विषयैर्बुद्धिभ्रंशो भवतीति अतिवाते दीपवत् विषयेष्वनुग्रहोऽपि न स्थिरो भवति अल्पेनैव कार्यसिद्धौ महाननुग्रहो न कर्त्तव्यः अतो यथाल्पेनैव कार्यं भवति तदर्थं सम्पद्भ्यो भ्रंशयामि तदनन्तरमनुग्रह इति पूर्वमिच्छैवोक्ता अन्यथा क्रमोऽग्रे वक्तव्यः यस्यानुग्रहमिच्छामीत्यत्र॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदपि तिरस्कृतेनापि भिषजा कृपालुना चिकित्सितो रोगीव त्वयाऽहम् अनुगृहीतः अत एव सम्प्रति ध्वस्तस्तम्भरोगः यतो हता उद्यमाः वज्रनिक्षेपादयो यस्य सः अतो नियन्तृत्वादीश्वरं हितकारित्वाद्गुरुं प्रेमास्पदत्वादात्मानम्॥ १३॥ १४॥

इन्द्रेण निष्कपटमुक्ते भगवानपि तथैवाह—मया ते इति। ॥ १५॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तथापि हे ईश! सर्वनियन्तः मखभङ्गद्वारा त्वया अनुगृहीतोऽस्मि अतो हतोद्यमः ध्वस्तस्तम्भः ईश्वरं नियन्तारं गुरुम् हितस्यैव सन्मार्गोपदेष्टारम् आत्मानं सर्वेषां जीवानामाश्रयम् "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" इत्युक्तेश्च एवम्भूतं त्वां शरणं गतोऽस्मि॥ १३॥

अमुं मघवानम्॥ १४॥

इन्द्रश्रिया देवराज्येन॥ १५॥ १६॥

---

भाषा टीका।

हे ईश! आपने मो पै अनुग्रह कियो जो मेरो गर्व दूर होय गयो और मेरो उद्यमहू वृथा भयो अब सब के ईश्वर गुरु और आत्मा जो आप ही तिनकी मैं शरण आयो हूं॥ १३॥

गम्यतां शक्र ! भद्रं वः क्रियतां मेऽनुशासनम् ।
स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ॥ १७ ॥
अथाह सुरभिः कृष्णमभिवन्द्य मनस्विनी ।
स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥ १८ ॥

सुरभिरुवाच ।

कृष्ण कृष्ण ! महायोगिन् ! विश्वात्मन् ! विश्वसम्भव ! ।
भवता लोकनाथेन सनाथा वयमच्युत! ॥ १९ ॥
त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ।
भवाय भव गोविप्रदेवानां ये च साधवः ॥ २० ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि जा समें इन्द्रने श्रीकृष्ण की स्तुति करी तब प्रभु मेघ सदृश गम्भीर वाणी सों हंसते भये श्रीकृष्ण इन्द्र सों बोलत भये ॥ १४ ॥

श्रीभगवानुवाच ।

श्रीभगवान् बोले, कि–हे इन्द्र ! हमने तेरे ऊपर अनुग्रह करिवे कूंइ तेरे यज्ञ को भङ्ग कियो रह्यो कि जासों मेरो स्मरणातो सदा बनो रहै। काहे सों कि; इन्द्रपने की लक्ष्मी सों तूं बहुत ही उन्मत्त होय गयो हो ॥ १५ ॥

जो ऐश्वर्य की श्री के मदसों मदान्ध होय के दण्ड धारण करवे वारे मोकूं नहीं देखे हैं, उनपै जो मैं अनुग्रह करिवे की इच्छा करूं तो सम्पद सों भ्रष्ट करदेऊ हूं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वो युष्माभिः वहुवचनं वरुणाद्यभिप्रायेण क गन्तव्यं स्वर्गेऽपि तवैवेश्वरत्वादिति चेत्तत्राह—क्रियतामिति । मदनुशासनेन यथापूर्वं तत्र स्थीयतामित्यर्थः । युक्तैरप्रमत्तैः स्तम्भवर्जितैर्निरहङ्कारैः ॥ १७ ॥

स्वसन्तानैर्गोभिः सहोपामन्त्र्य कृष्णकृष्णेत्यादिसम्बोध्य॥१८॥

इन्द्रेण हता अपि भवता सनाथा वयं कृताः रक्षिता इत्यर्थः ॥ १९ ॥

त्वं नः परमं दैवं दैवतं देवताऽतो हे जगत्पते ! गोविप्रदेवानां येऽन्ये च साधवस्तेषां भवायाभ्युदयायास्य त्वमेव नोऽस्माकमिन्द्रो भव ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तर्हि ममापि तादृशमेवानुग्रहं कुरु मयाऽत्रैव स्थीयतां तत्राह–गम्यतामिति । वो युष्माकं यत् भद्रं क्षेमं तदस्तिवत्यभयदानं वस्तुतस्तु न मदेकान्तभक्तानां तद्भद्रमित्युक्तिपरिपाट्या तदक्षेममेवाभिप्रेतम् अजिगमिषन्तं प्रत्याह—क्रियतामिति । गत्वा च मदाज्ञा परिपाल्यतामित्यर्थः । अनधिकारिणस्ते अत्रावस्थित्याऽपराध एव भावीति गमनमेव युक्तमिति भावः । यद्वा, ननु भगवन् ! तत्र गतस्य मेऽैश्वर्यस्वभावेनावश्यमपराधो भवितैव तत्राह—क्रियतामिति । मदनुशासनं मच्छिक्षितमित्यर्थः । तदेवाह स्थीयतामिति । स्वस्यैव ननु परस्याधिकारेषु किं पुनर्मदन्तरङ्गपरिकरश्रीव्रजवास्यादिष्वित्यर्थः । तत्रापि युक्तैरप्रमत्तैः भक्तियोगवद्भिर्वा तत्रापि निर्मदैश्च सद्भिर्वो युष्माभिः स्थीयताम् इत्थं वरप्रदानरूपोऽनुग्रहो न कृतः किन्तु केवलसमर्थनैव युक्तिपूर्वकशिक्षारूप एव कृतः सम्यक् प्रसादाप्रवृत्तेः अत एव तदनुशासनापालनेन पश्चादपराधान्तरमपि जातं तच्च पारिजातहरणादौ व्यक्तं भावि ॥ १७ ॥

अथानन्तरमित्यस्याभिप्रायस्तु विविक्त इत्यत्र पूर्वमेव व्याख्यातः स्वसन्तानैः चन्द्र वंशे श्रीकृष्णवत् स्वस्य वंशे प्रादुर्भूतैर्नित्यतदीयगोधनरूपैस्तैरुपलक्षिताभितो वन्दित्वाऽऽह स्तुतिपूर्वकं निवेदितवती अभिनन्द्येति पाठेऽपि स एवार्थः। न केवलमभिवन्द्याह, किन्तूपामन्त्र्य वक्ष्यमाणसम्बोधनैरात्मन्यवधानं प्रार्थ्य चाह स्वाभीष्टनिवेदने हेतुः गोपरूपिणमीश्वरमिति, अभिवन्दने हेतुः ईश्वरमिति । ननु, इन्द्रमानीय प्रथमं स्वयं कथं तत्साहाय्यार्थमपि न किञ्चिन्निवेदितवती तत्राह, मनस्विनी धीरचित्ता ततो भगवतःसर्वज्ञत्वसर्वहितकारित्वे इन्द्रस्य चोत्तानचित्तत्वे स्वयमेव विविदिषुतां स्वस्य च निवेदनीयविशेषं विचार्य प्रथमं तु नोक्तवतीत्यर्थः ॥ १८ ॥

अथ गोपरूपत्वेनेश्वरत्वेन च सम्बोध्य तदुभयथा प्रकाशमानेन त्वया स्वेषामसाधारणेन नाथेन सर्वतोऽपि वयं पूर्णा इति व्यञ्जयति, तत्र कृष्णकृष्णेति । गोपरूपत्वव्यञ्जकम् अत्रैव वीप्सा च निजरुच्यतिशयेन ईश्वरत्वेन सम्बोधयति महायोगिन् सर्वोत्तमाणिमादियोगैश्वर्यनित्यप्रकाश विश्वेषामप्राकृतप्राकृतयत्किञ्चित् पदार्थानां मूलरूप! तत एव हे विश्वसम्भव, सम्भावनारूप विश्वभावनेति पाठे तथैवार्थः । तथैव स्वकृतकृत्यतां सुखं निवेदयति लोकनाथेनापि भवता वयमेव सनाथा इत्यर्थः ।

